# सिंघी जैन ग्रन्थमाला

त्रयोदश (१३) मणि






श्रीप्रभाचन्द्राचार्यविरचित

# प्रभावक चरित

# सिंघी जैन ग्रन्थमाला

जैन आगमिक, दार्शनिक, साहित्यिक, ऐतिहासिक, कथात्मक – इत्यादि विविधविषयगुम्फित
प्राकृत, संस्कृत, अपभ्रंश, प्राचीनगूर्जर, राजस्थानी आदि नाना भाषानिबद्ध
बहु उपयुक्त पुरातनवाङ्मय तथा नवीन संशोधनात्मक
साहित्यप्रकाशिनी जैन ग्रन्थावलि ।

कलकत्तानिवासी स्वर्गस्थ **श्रीमद् डालचन्दजी सिंघी** की पुण्यस्मृतिनिमित्त
तत्सुपुत्र **श्रीमान् बहादुरसिंहजी सिंघी** कर्तृक
संस्थापित तथा प्रकाशित

---

सम्पादक तथा सञ्चालक

## *जिन विजय मुनि*

[ सम्मान्य सभासद–भाण्डारकर प्राच्यविद्या संशोधन मन्दिर पूना, तथा गुजरात साहित्यसभा अहमदाबाद;
भूतपूर्वाचार्य–गुजरात पुरातत्त्वमन्दिर अहमदाबाद; जैनवाङ्मयाध्यापक–विश्वभारती, शान्तिनिकेतन;
प्राकृतभाषादि-प्रधानाध्यापक–भारतीय विद्या भवन, बंबई; तथा, जैन साहित्यसंशोधक ग्रन्थावलि–
पुरातत्त्वमन्दिर ग्रन्थावलि–भारतीय विद्या ग्रन्थावलि–प्रकाशित संस्कृत-प्राकृत-पाली-
अपभ्रंश-प्राचीनगूर्जर-हिन्दी-भाषामय अनेकानेक ग्रन्थ संशोधक–सम्पादक । ]

## ग्रन्थांक १३

प्राप्तिस्थान

## व्यवस्थापक - सिंघी जैन ग्रन्थमाला

अनेकान्त विहार,
९, शान्तिनगर; पो० साबरमती,
अहमदाबाद

सिंघी सदन,
४८, गरियाहाट रोड; पो० बालीगंज,
कलकत्ता

स्थापनाब्द ]  [ वि० सं० १९८६

श्रीप्रभाचन्द्राचार्यविरचित

# प्रभावक चरित

विविध पाठान्तर तथा परिशिष्ट – प्रस्तावनादि समलंकृत


सम्पादक

*जिन विजय मुनि*

[ प्राकृतभाषादि-प्रधानाध्यापक–भारतीय विद्या भवन, बंबई ]


## प्रथम भाग – मूल ग्रन्थ

विशेषनामानुक्रम–समुद्धृतपद्यानुक्रमादियुक्त


प्रकाशन-कर्ता

संचालक-सिंघी जैन ग्रन्थमाला

अहमदाबाद–कलकत्ता

विक्रमाब्द १९९७ ]     प्रथमावृत्ति, पञ्चशत प्रति ।     [ १९४० क्रिस्ताब्द

# SINGHI JAINA SERIES

*A COLLECTION OF CRITICAL EDITIONS OF MOST IMPORTANT CANONICAL, PHILOSOPHICAL HISTORICAL, LITERARY, NARRATIVE ETC WORKS OF JAINA LITERATURE IN PRĀKRIT, SANSKRIT, APABHRAṀŚA AND OLD VERNACULAR LANGUAGES, AND STUDIES BY COMPETENT RESEARCH SCHOLARS.*

FOUNDED AND PUBLISHED

BY

## ŚRĪMĀN BAHĀDUR SIṄGHJĪ SIṄGHĪ OF CALCUTTA

**IN MEMORY OF HIS LATE FATHER**

## ŚRĪ DĀLCHANDJĪ SIṄGHĪ.



GENERAL EDITOR

## JINA VIJAYA MUNI

*( HONORARY MEMBER OF THE BHANDARKAR ORIENTAL RESEARCH INSTITUTE OF POONA AND GUJRAT SAHITYA SABHA OF AHMEDABAD; FORMERLY PRINCIPAL OF GUJRAT PURATATTVAMANDIR OF AHMEDABAD; LATE SINGHI PROFESSOR OF JAINA STUDIES, VISVA-BHARATI, SANTINIKETAN; PRO. OF PRAKRITIC LANGUAGES AND HINDI, BHARATIY VIDYA BHAVAN, BOMBAY; EDITOR OF MANY SANSKRIT, PRAKRIT, PALI, APABHRAṀŚA, AND OLD GUJRATI-HINDI WORKS. )*

## NUMBER 13

**TO BE HAD FROM**

**VYAVASTHĀPAKA, SIṄGHĪ JAINA GRANTHAMĀLĀ**


*ANEKANT VIHAR*
*9 SHANTI NAGAR,*
*PO. SABARMATI, AHMEDABAD.*



*SIṄGHI SADAN*
*48, GARIYAHAT ROAD,*
*PO. BALLYGUNGE, CALCUTTA.*

**Founded ]**




**[ 1931 A. D.**

# PRABHĀVAKA CHARITA

OF

## PRABHĀCHANDRĀCHĀRYA

*CRITICALY EDITED IN THE ORIGINAL SANSKRIT FROM MANY OLD MSS. WITH NOTES, INDEX AND HINDI INTRODUCTION, ETC.*



BY


JINA VIJAYA MUNI

*( PRO. OF PRAKRITIC LANGUAGES AND HINDI, BHARATIYA VIDYA BHAVAN, BOMBAY )*


**FIRST PART—TEXT IN SANSKRIT**

*WITH VARIANTS AND INDICES OF STANZAS AND ALL PROPER NAMES.*




**PUBLISHED BY**

**THE SAÑCHĀLAKA-SIṄGHĪ JAINA GRANTHAMĀLĀ**

**AHMEDABAD-CALCUTTA**

V. E. 1997 ] *First edition, Five Hundred Copies.* [ 1940 A. D.

# ॥ सिंघीजैनग्रन्थमालासंस्थापकप्रशस्तिः ॥

अस्ति बङ्गाभिधे देशे सुप्रसिद्धा मनोरमा । मुर्शिदाबाद इत्याख्या पुरी वैभवशालिनी ॥
निवसन्त्यनेके तत्र जैना ऊकेशवंशजाः । धनाढ्या नृपसदृशा धर्मकर्मपरायणाः ॥
श्रीडालचन्द इत्यासीत् तेष्वेको बहुभाग्यवान् । साधुवत् सच्चरित्रो यः सिंघीकुलप्रभाकरः ॥
बाल्य एवागतो यो हि कर्तुं व्यापारविस्तृतिम् । कलिकातामहापुर्यां धृतधर्मार्थनिश्चयः ॥
कुशाग्रया स्वबुद्ध्यैव सद्वृत्त्या च सुनिष्ठया । उपार्ज्य विपुलां लक्ष्मीं जातो कोट्यधिपो हि सः ॥
तस्य मन्नुकुमारीति सन्नारीकुलमण्डना । पतिव्रता प्रिया जाता शीलसौभाग्यभूषणा ॥
श्रीबहादुरसिंहाख्यः सद्गुणी सुपुत्रस्तयोः । अस्त्येष सुकृती दानी धर्मप्रियो धियां निधिः ॥
प्राप्ता पुण्यवताऽनेन प्रिया तिलकसुन्दरी । यस्याः सौभाग्यदीपेन प्रदीप्तं यद्गृहाङ्गणम् ॥
श्रीमान् राजेन्द्रसिंहोऽस्ति ज्येष्ठपुत्रः सुशिक्षितः । यः सर्वकार्यदक्षत्वात् बाहुर्यस्य हि दक्षिणः ॥
नरेन्द्रसिंह इत्याख्यस्तेजस्वी मध्यमः सुतः । सूनुर्वीरेन्द्रसिंहश्च कनिष्ठः सौम्यदर्शनः ॥
सन्ति त्रयोऽपि सत्पुत्रा आप्तभक्तिपरायणाः । विनीताः सरला भव्याः पितुर्मार्गानुगामिनः ॥
अन्येऽपि बहवश्चास्य सन्ति स्वस्रादिबान्धवाः । धनैर्जनैः समृद्धोऽयं ततो राजेव राजते ॥

अन्यच्च-

सरस्वत्यां सदासक्तो भूत्वा लक्ष्मीप्रियोऽप्ययम् । तत्राप्येष सदाचारी तच्चित्रं विदुषां खलु ॥
न गर्वो नाप्यहंकारो न विलासो न दुष्कृतिः । दृश्यतेऽस्य गृहे क्वापि सतां तद् विस्मयास्पदम् ॥
भक्तो गुरुजनानां यो विनीतः सज्जनान् प्रति । बन्धुजनेऽनुरक्तोऽस्ति प्रीतः पोष्यगणेष्वपि ॥
देश-कालस्थितिज्ञोऽयं विद्या-विज्ञानपूजकः । इतिहासादिसाहित्य-संस्कृति-सत्कलाप्रियः ॥
समुन्नत्यै समाजस्य धर्मस्योत्कर्षहेतवे । प्रचारार्थं सुशिक्षाया व्ययत्येष धनं घनम् ॥
गत्वा सभा-समित्यादौ भूत्वाऽध्यक्षपदाङ्कितः । दत्त्वा दानं यथायोग्यं प्रोत्साहयति कर्मठान् ॥
एवं धनेन देहेन ज्ञानेन शुभनिष्ठया । करोत्ययं यथाशक्ति सत्कर्माणि सदाशयः ॥
अथान्यदा प्रसङ्गेन स्वपितुः स्मृतिहेतवे । कर्तुं किञ्चिद् विशिष्टं यः कार्यं मनस्यचिन्तयत् ॥
पूज्यः पिता सदैवासीत् सम्यग्-ज्ञानरुचिः परम् । तस्मात्तज्ज्ञानवृद्ध्यर्थं यतनीयं मया वरम् ॥
विचार्यैवं स्वयं चित्ते पुनः प्राप्य सुसम्मतिम् । श्रद्धास्पदस्वमित्राणां विदुषां चापि तादृशाम् ॥
जैनज्ञानप्रसारार्थं स्थाने शान्तिनिकेतने । सिंघीपदाङ्कितं जैनज्ञानपीठमतीष्ठिपत् ॥
श्रीजिनविजयो विज्ञो तस्याधिष्ठातृसत्पदम् । स्वीकर्तुं प्रार्थितोऽनेन शास्त्रोद्धाराभिलाषिणा ॥
अस्य सौजन्य-सौहार्द-स्थैर्योदार्यादिसद्गुणैः । वशीभूयाति मुदा येन स्वीकृतं तत्पदं वरम् ॥
तस्यैव प्रेरणां प्राप्य श्रीसिंघीकुलकेतुना । स्वपितृश्रेयसे चैषा ग्रन्थमाला प्रकाश्यते ॥
विद्वज्जनकृताल्हादा सच्चिदानन्ददा सदा । चिरं नन्दत्वियं लोके जिनविजयभारती ॥

## ॥ सिंघीजैनग्रन्थमालासम्पादकप्रशस्तिः ॥

स्वस्ति श्रीमेदपाटाख्यो देशो भारतविश्रुतः । रूपाहेलीति सन्नाम्नी पुरिका तत्र सुस्थिता ॥
सदाचार-विचाराभ्यां प्राचीननृपतेः समः । श्रीमच्चतुरसिंहोऽत्र राठोडान्वयभूमिपः ॥
तत्र श्रीवृद्धिसिंहोऽभूत् राजपुत्रः प्रसिद्धिमान् । क्षात्रधर्मधनो यश्च परमारकुलाग्रणीः ॥
मुञ्ज-भोजमुखा भूपा जाता यस्मिन्महाकुले । किं वर्ण्यते कुलीनत्वं तत्कुलजातजन्मनः ॥
पत्नी राजकुमारीति तस्याभूद् गुणसंहिता । चातुर्य-रूप-लावण्य-सुवाक्सौजन्यभूषिता ॥
क्षत्रियाणीप्रभापूर्णां शौर्यदीप्तमुखाकृतिम् । यां दृष्ट्वैव जनो मेने राजन्यकुलजा त्वियम् ॥
सूनुः किसनसिंहाख्यो जातस्तयोरतिप्रियः । रणमल्ल इति ह्यन्यद् यन्नाम जननीकृतम् ॥
श्रीदेवीहंसनामात्र राजपूज्यो यतीश्वरः । ज्योतिर्भैषज्यविद्यानां पारगामी जनप्रियः ॥
अष्टोत्तरशताब्दानामायुर्यस्य महामतेः । स चासीद् वृद्धिसिंहस्य प्रीति-श्रद्धास्पदं परम् ॥
तेनाथाप्रतिमप्रेम्णा स तत्सूनुः स्वसन्निधौ । रक्षितः, शिक्षितः सम्यक्, कृतो जैनमतानुगः ॥
दौर्भाग्यात्तच्छिशोर्बाल्ये गुरु-तातौ दिवंगतौ । विमूढेन ततस्तेन त्यक्तं सर्वं गृहादिकम् ॥

तथा च-

परिभ्रम्याथ देशेषु संसेव्य च बहून् नरान् । दीक्षितो मुण्डितो भूत्वा कृत्वाऽऽचारान् सुदुष्करान् ॥
ज्ञातान्यनेकशास्त्राणि नानाधर्ममतानि च । मध्यस्थवृत्तिना तेन तत्त्वातत्त्वगवेषिणा ॥
अधीता विविधा भाषा भारतीया युरोपजाः । अनेका लिपयोऽप्येवं प्रत्न-नूतनकालिकाः ॥
येन प्रकाशिता नैका ग्रन्था विद्वत्प्रशंसिताः । लिखिता बहवो लेखा ऐतिह्यतथ्यगुम्फिताः ॥
यो बहुभिः सुविद्वद्भिस्तन्मण्डलैश्च सत्कृतः । जातः स्वान्यसमाजेषु माननीयो मनीषिणाम् ॥
यस्य तां विश्रुतिं ज्ञात्वा श्रीमद्गान्धीमहात्मना । आहूतः सादरं पुण्यपत्तनात् स्वयमन्यदा ॥
पुरे चाहम्मदाबादे राष्ट्रीयशिक्षणालयः । विद्यापीठ इतिख्यातः प्रतिष्ठितो यदाऽभवत् ॥
आचार्यत्वेन तत्रोच्चैर्नियुक्तो यो महात्मना । विद्वज्जनकृतश्लाघे पुरातत्त्वाख्यमन्दिरे ॥
वर्षाणामष्टकं यावत् सम्भूष्य तत्पदं ततः । गत्वा जर्मनराष्ट्रे यस्तत्संस्कृतिमधीतवान् ॥
तत आगत्य सँल्लग्नो राष्ट्रकार्ये च सक्रियम् । कारावासोऽपि सम्प्राप्तो येन स्वराज्यपर्वणि ॥
क्रमात्तस्माद् विनिर्मुक्तः प्राप्तः शान्तिनिकेतने । विश्ववन्द्यकवीन्द्रश्रीरवीन्द्रनाथभूषिते ॥
सिंघीपदयुतं जैनज्ञानपीठं यदाश्रितम् । स्थापितं तत्र सिंघीश्रीडालचन्दस्य सूनुना ॥
श्रीबहादुरसिंहेन दानवीरेण धीमता । स्मृत्यर्थं निजतातस्य जैनज्ञानप्रसारकम् ॥
प्रतिष्ठितश्च यस्तस्य पदेऽधिष्ठातृसञ्ज्ञके । अध्यापयन् वरान् शिष्यान् शोधयन् जैनवाङ्मयम् ॥
तस्यैव प्रेरणां प्राप्य श्रीसिंघीकुलकेतुना । स्वपितृश्रेयसे चैषा ग्रन्थमाला प्रकाश्यते ॥
विद्वज्जनकृताल्हादा सच्चिदानन्ददा सदा । चिरं नन्दत्वियं लोके जिनविजयभारती ॥

# प्रभावकचरित-विषयानुक्रमः ।


| | | |
|---|---|---|
| — | प्रास्ताविक वक्तव्य | पृ० १–६ |
| — | ग्रन्थकृत्प्रास्ताविक कथनम् | १–२ |
| १ | वज्रस्वामिचरितम् | ३–८ |
| २ | आर्यरक्षितचरितम् | ९–१८ |
| ३ | आर्यनन्दिलचरितम् | १९–२१ |
| ४ | कालकसूरिचरितम् | २२–२७ |
| ५ | पादलिप्तसूरिचरितम् | २८–४० |
| ६ | विजयसिंहसूरिचरितम् | ४१–४६ |
| ७ | जीवदेवसूरिचरितम् | ४७–५३ |
| ८ | वृद्धवादिसूरिचरितम् | ५४–६१ |
| ९ | हरिभद्रसूरिचरितम् | ६२–७६ |
| १० | मल्लवादिसूरिचरितम् | ७७–७९ |
| ११ | बप्पभट्टिसूरिचरितम् | ८०–१११ |
| १२ | मानतुङ्गसूरिचरितम् | ११२–११७ |
| १३ | मानदेवसूरिचरितम् | ११८–१२० |
| १४ | महाकविसिद्धर्षिचरितम् | १२१–१२६ |
| १५ | वीरगणिचरितम् | १२७–१३२ |
| १६ | वादिवेतालशान्तिसूरिचरितम् | १३३–१३७ |
| १७ | महेन्द्रसूरिचरितम् | १३८–१५१ |
| — | तदन्तर्गतं महाकविधनपालवृत्तम् | ,, ,, |
| १८ | सूराचार्यचरितम् | १५२–१६० |
| १९ | अभयदेवसूरिचरितम् | १६१–१६६ |
| — | तदन्तर्भूतं जिनेश्वरसूरिवृत्तम् | ,, ,, |
| २० | वीराचार्यचरितम् | १६७–१७० |
| २१ | वादिदेवसूरिचरितम् | १७१–१८२ |
| २२ | हेमचन्द्रसूरिचरितम् | १८३–२१२ |
| — | ग्रन्थकारकृता प्रशस्तिः | २१३–२१६ |
| | परिशिष्टम् १–प्रभावकचरितान्तर्गत-समुद्धृतपद्यानामकाराद्यनुक्रमणिका । | २१७–२१९ |
| | ,, २–प्रभावकचरितगत-विशेषनाम्नामकाराद्यनुक्रमणिका । | २२०–२२६ |

*समर्पणम् –*

प्रभाचन्द्रमुनीन्द्रवद् यः सत्साहित्यनिर्मितौ ।
मनोवाक्कायययोगेन सततं सुप्रयत्नवान् ॥

प्रद्युम्नसूरिवच्चापि बहूनां विदुषामसौ ।
शास्त्राणां शोधनं कुर्वन् परमादरतां गतः ॥

आविद्याध्ययनाद् यावद् ग्रन्थसंशोधनादिषु ।
पुस्तकादिप्रदानेन यो ममापि सहायकृत् ॥

तस्मै पुण्यप्रतिष्ठाय ज्ञानदानपरात्मने ।
श्रीपुण्यविजयाख्याय मुनये सौम्यमूर्तये ॥

तत्सौहार्दगुणाकृष्टो हृष्टो हार्दिकभावतः ।
करोम्यहं कृतेरस्याः समर्पणं स्वतर्पणम् ॥

*–जिन विजयः*

# प्रास्ताविक वक्तव्य।



प्रस्तुत ग्रन्थमालामें प्रकाशित **विविधतीर्थकल्प** नामक ग्रन्थकी प्रस्तावनाकी अन्तिम कण्डिकामें हमने लिखा था कि—"विस्तृत जैन इतिहासकी रचनाके लिये, जिन ग्रन्थोंमेंसे विशिष्ट सामग्री प्राप्त हो सकती है उनमें—(१) प्रभावकचरित्र, (२) प्रबन्धचिन्तामणि, (३) प्रबन्धकोष, और (४) विविधतीर्थकल्प—ये ४ ग्रन्थ मुख्य हैं। ये चारों ग्रन्थ परस्पर बहुत कुछ समान-विषयक हैं और एक दूसरेकी पूर्ति करनेवाले हैं। जैन धर्मके ऐतिहासिक प्रभावको प्रकट करनेवाली, प्राचीन कालीन प्रायः समी प्रसिद्ध प्रसिद्ध व्यक्तियोंका थोडा बहुत परिचय इन ४ चारों ग्रन्थोंके संकलित अवलोकन और अनुसन्धान द्वारा हो सकता है। इसलिये हमने इन चारों ग्रन्थोंको, एक साथ, एक ही रूपमें, एक ही आकारमें, और एक ही पद्धतिसे संपादित और विवेचित कर, इस ग्रन्थ-माला द्वारा प्रकाशित करनेका आयोजन किया है। इनमेंसे, प्रबन्धचिन्तामणिका मूल ग्रन्थात्मक पहला भाग, गत वर्ष (संवत् १९८९) में प्रकट हो चुका है और उसका संपूरक **पुरातनप्रबन्धसंग्रह** नामका दूसरा भाग, इस ग्रन्थके (विविधतीर्थकल्पके) साथ ही प्रकट हो रहा है। **प्रबन्धकोष**का मूल ग्रन्थात्मक पहला भाग मी इसका सहगामी है। **प्रभावकचरित्र** अभी प्रेसमें है, सो मी थोडे ही समयमें, अपने इन समवयस्कोंके साथ, विद्वानोंके करकमलोंमें इतस्ततः सञ्चरमाण दिखाई देगा।"

इस संकल्पित आयोजनानुसार, आज यह प्रभावकचरित्र विद्वानोंके सम्मुख उपस्थित किया जा रहा है। उपरि निर्दिष्ट इन चारों ग्रन्थोंमें, रचनाक्रम और वस्तुविस्तारकी दृष्टिसे प्रभावकचरित्रका स्थान पहला होने पर मी, इसका प्रकाशन जो सबसे पीछे हो रहा है, और सो मी अपेक्षाकृत कुछ अधिक विलंबके साथ, इसमें कारण केवल ग्रन्थ-मालाके अन्यान्य प्रकाशनोंकी कार्यसंकीर्णता ही है। एक साथ छोटे बडे कई ग्रन्थ छपते रहनेके कारण इसके प्रकाशनमें कुछ विशेष विलम्ब हो गया है।

पर इसके साथ ही, इसी विषयकी सामग्रीके साधनभूत, **कुमारपालचरितसंग्रह, जैनग्रन्थप्रशस्तिसंग्रह, खरतरगच्छगुर्वावली** आदि कई महत्त्वके और और ग्रन्थ भी तैयार हो कर, प्रसिद्धि प्राप्त कर रहे हैं, और कई अन्य छप मी रहे हैं। प्रबन्धचिन्तामणिका हिन्दी अनुवाद मी इसके साथ ही प्रसिद्ध हो रहा है। विद्वद्रत्न मुनिवर श्रीपुण्यविजयजीकी पुण्यकृपासे, महामात्य वस्तुपाल-तेजपालके पुण्यकीर्तनोंका प्रकाश करनेवाला **धर्माभ्युदय** नामक महाकाव्य, जो खुद उन महापुरुषोंके धर्मगुरुका बनाया हुआ है और जिसके साथ अन्यान्य कई अपूर्व ऐतिहासिक प्रशस्तियां आदि संलग्न की गई हैं, इन ग्रन्थोंके साथ-ही-साथ विद्वानोंके करकमलोंमें सुशोभित होनेको तैयार हो रहा है।

प्रस्तुत ग्रन्थका प्रथम मुद्रण, बम्बईके सुप्रसिद्ध **निर्णयसागर** प्रेसने, सन् १९०९ में किया था, जिसका संपादन हमारे मान्य मित्र और वर्तमानमें बडोदाके राजकीय पुरातत्त्व विभागके मुख्य नियामक, ज्ञानरत्न डॉ० हीरानन्द शास्त्री, एम्. ए. एम्. एल्. ओ. डी. लिट्. (रिटायर्ड गवर्नमेंट एपिग्राफिस्ट) ने किया था। एक तो शास्त्री महाशयका यह शायद प्रथम ही प्रथम संपादन कार्य था और दूसरा यह कि उनको जो हस्तलिखित प्रतियां संशोधनार्थ उपलब्ध हुई थीं वे प्रायः अशुद्धिबहुल थीं; इसलिये उस आवृत्तिमें अशुद्धियोंकी खूब भरमार रह गई। तो मी शास्त्री महाशयके उस प्रकाशनसे यह **प्रभावकचरित्र** यथेष्ट प्रसिद्धिमें आ गया और सर्वसाधारण अभ्यासियोंके लिये बडा उपयोगी सिद्ध हुआ। सन् १९३०-३१ में, शास्त्रीजी इसकी पुनरावृत्ति निकालनेका उद्योग करने लगे;

और पूज्यपाद प्रवर्तक श्रीमान् कान्तिविजयजी महाराज द्वारा, पाटणके भण्डारोंमेंसे इसकी पुरातन प्रतियां मंगवा कर, ग्रन्थका पुनः संशोधन करने लगे। प्रायः इसी समय, हमने भी इस **'सिंघी जैन ग्रन्थमाला'**का कार्य प्रारंभ किया और इसमें प्रबन्धचिन्तामणि आदि सभी प्रधान प्रधान जैन ऐतिहासिक ग्रन्थोंका, अपने ढंगसे उत्तम प्रकारका, प्रकाशन करनेका आयोजन किया। डॉ० महोदयने हमारे इस आयोजनकी खबर पा कर अपना कार्य स्थगित कर दिया; और हमारी प्रार्थना पर, पाटणके भण्डारकी वे हस्तलिखित प्रतियां, विद्वद्रत्न मुनिवर श्रीपुण्यविजयजी महाराजकी सूचनानुसार, हमारे पास भेज दीं। यहां पर हम अपने इन सौहार्दशील शास्त्री महाशयके अनन्य सौजन्यके प्रति, बडी कृतज्ञताके साथ, हार्दिक आभारभाव प्रदर्शित करना अपना कर्तव्य समझते हैं।



प्रस्तुत आवृत्तिके संपादनमें हमने मुख्यतया निम्न लिखित प्रतियोंका उपयोग किया है–

A **संज्ञक प्रति** – यह प्रति पाटणके संघके भण्डारकी है। इसकी पत्र संख्या १४३ हैं जिनमेंसे बीचमेंके दो-एक पत्र लुप्त हो गये हैं। यद्यपि है यह कागज-ही-की प्रति, तथापि इसके पन्नोंका रंग-ढंग ताडपत्रके पन्नोंका-सा है। इसका कागज खुर्दरा और कुछ मोटा है। इसके पन्नोंकी लंबाई प्रायः १४ इंच और चौडाई ३$\frac{1}{2}$ इंच जितनी है। पन्नेके प्रत्येक पार्श्व पर ११–११ पंक्तियां लिखी हुई हैं। प्रथम पत्रके दूसरे पार्श्वसे लिखान प्रारंभ किया गया है। इसमें दाहिने भागकी तरफ, २$\frac{1}{2}$ + ३$\frac{1}{2}$ इंच जितनी जगह कोरी छोड रखी है जिसमें किसी तीर्थंकरकी प्रतिकृति – जैसी की अन्य दूसरी प्रति B में उपलब्ध है – चित्रित करनेकी कल्पना होगी। इसी तरह दूसरे पत्र के प्रथम पार्श्वमें भी दाहिने भागकी और, उतनी ही जगह, किसी अन्य – आचार्य वगैरहकी – प्रतिकृतिके लिये कोरी रखी गई है। मालूम होता है तत्काल कोई चित्रकार न मिलनेसे इसमें वे चित्र अंकित नहीं किये गये। प्रतिके अन्तमें लिपिकार वगैरहका कोई नाम निर्देश नहीं है इसलिये यह ठीक ठीक तो नहीं कहा जा सकता कि यह कबकी लिखी हुई है। परंतु इसकी लिखावट और कागज आदिकी स्थितिको देखते हुए, अनुमान किया जा सकता है कि यह वि० सं० १४०० के पूर्व, २५–५० वर्षके अरसेमें लिखी हुई होनी चाहिए। और इस दृष्टिसे यह, हमें प्राप्त सब प्रतियोंमें प्राचीनतम है। इसकी वाचना प्रायः शुद्ध है। शायद लिपिकारको, उस पुरातन आदर्शका कोई कोई अक्षर समझमें नहीं आया है जिसके ऊपरसे उसने अपनी इस प्रतिकी नकल की है, इसलिये उसने बीच बीचमें कोई कोई पंक्तिमें, उस अक्षरके लिये '—'ऐसी खाली शिरोरेखा दे कर कोरी जगह छोड दी है। पीछेसे किसी विद्वान्ने इस प्रतिका कुछ संशोधन भी किया है और जो कोई अशुद्धि उसकी समझमें आई उसे सुधारा भी है।

B **संज्ञक प्रति** – यह प्रति भी पाटणके संघके ही भण्डारकी है। इसकी पत्र संख्या १११ है। इसका कागज कुछ मुलायम और कुछ पतला है। इसके पन्नोंकी लंबाई १०$\frac{1}{4}$ इंच और चौडाई ४$\frac{1}{4}$ इंच जितनी है। पन्नेके प्रत्येक पार्श्वपर १७–१७ पंक्तियां लिखीं हुईं हैं। लिपि सुन्दर है पर वाचना वैसी शुद्ध नहीं है। पाठ-अशुद्धि बहुत उपलब्ध होती है। यह संवत् १५५६ में, गंभीरपुरमें, आगमगच्छके यति अमरसागरके हाथकी लिखी हुई है। यद्यपि अमरसागरने अपने नामको उपा० ( उपाध्याय ) के बडे विशेषणसे विभूषित किया है, परंतु उस शब्दके पहले 'शिष्यानुशिष्य' के बदले लिखे हुए 'शष्यानुशष्य' और 'लिखित' के बदले 'लखितं' शब्द लिखा हुआ देख कर मानना पडता है कि लिपिकारको संस्कृतका कुछ भी ज्ञान नहीं था। और इसीलिये उसने प्रतिलिपि करनेमें बहुतसी अशुद्धियां लिख डालीं हैं। लिपिकारने अपने समय आदिका परिचय कराने वाला निम्न लिखित अन्तिम पुष्पिका-लेख लिखा है–

**"ऋतु–बाण–बाण–चंद्रे वर्षे पोषे च बहुलप्रतिपत्तौ गुरुवार पुष्य ऐंद्रे गंभीरपुरे च इदमलिषत्॥ ॥ स्वस्ति श्री संवत् १५५६ वर्षे शाके १४२१ प्रवर्तमाने पोसमासे असितपक्षे**

**प्रतिपत्तिथौ गुरुवासरे ऐंद्रयोगे गंभीरपुरे श्री श्री आगमगच्छे श्रीमहोपाध्याय श्रीमुनिसागर शिष्यानुशिष्य उपा० अमरसागरेण श्रीप्रद्युम्नसूरिकृतं प्रभावकचरितं महोद्यमेन लिखितमिदं ॥ यत्नेन पालनीयं ॥ शुभं भूयात् ॥"**

संस्कृतका ज्ञान न होनेसे लिपिकारने ग्रन्थकारका नाम भी ठीक नहीं समझ पाया और इससे 'प्रभाचन्द्रकृत'के बदले इसको 'प्रद्युम्नसूरिकृत' लिख दिया है। शायद ग्रन्थके अन्तमें, सबसे पीछे '**श्रीप्रद्युम्नमुनीन्दुना विशदितः**' यह वाक्य आया हुआ देख कर प्रद्युम्नसूरि-ही-को इसका कर्ता उसने समझ लिया है[1]।

इस प्रतिमें ग्रन्थकारकी अन्तिम ग्रन्थ-प्रशस्ति नहीं लिखी गई है। इस प्रतिके ४१ से ६० तकके २० पत्र किसी दूसरे लेखकके हाथके लिखे हुए हैं। इससे मालूम देता है कि शायद पीछेसे ये २० पन्ने खोये गये हैं, इसलिये किसी दूसरेने फिरसे लिख कर प्रतिमें रख दिये हैं और इस तरह त्रुटित प्रतिकी पूर्ति की गई है। इस प्रतिका भी किसी विद्वान्ने कुछ संशोधन किया है और कुछ पदच्छेद आदि करनेका प्रयत्न किया है। कहीं कहीं हांसियोंमें संस्कृत शब्दोंका गुजराती अर्थ भी लिखा है और कहीं कहीं प्रसंगोचित सुभाषित भी उद्धृत कर दिये हैं। इन सबको हमने यथास्थान, पृष्ठगत अधस्तन पाठभेदोंके साथ, उद्धृत कर दीं हैं। प्रतिके प्रथम पत्र और द्वितीय पत्रमें दो चित्र चित्रित किये हुए हैं जिनमें पहला चित्र तीर्थकर – महावीरदेव – का है, और दूसरा, शायद ग्रन्थकारके संबन्धका है जिसमें वह अपना ग्रन्थ साधु, साध्वी, श्रावक, श्राविका रूप चतुर्विध संघवाली व्याख्यान-सभामें श्रोताओंको सुनाता हुआ बताया गया है। इन पन्नोंका हाफटोन ब्लाक बनवा कर भी इसके साथ दिया गया है जिससे पाठकोंको चित्रका ठीक वास्तविक दर्शन हो सकेगा।

**C नामक प्रति** – यह प्रति भी पाटणके उसी भण्डारमेंकी है। यह अपूर्ण है। इसमें बप्पभट्टिसूरि चरितके ४२१ श्लोक (मुद्रित पृ० ९७, पंक्ति ५) तकका भाग उपलब्ध है। प्रायः यह पूरी प्रतिका आधा भाग है। मालूम देता है भण्डारमेंसे किसीने कभी इस प्रतिका उत्तर भाग बाचने-पढनेके लिये लिया होगा; जो चाहे जिस कारणसे, फिर वापस नहीं किया गया और उससे यह प्रति इस भण्डारमें आधी ही रह गई है। कई ग्रन्थ-भण्डारोंमें यह रिवाज है, कि जिस किसीको, भण्डारमेंके ग्रन्थकी जरूरत होती है, तो उसे उसकी आधी ही प्रति दी जाती है। उस आधी प्रतिके लौटा देने पर फिर उसका दूसरा आधा हिस्सा दिया जाता है। ऐसी स्थितिमें, यदि किसी कारणवश, दिया हुआ ग्रन्थभाग वापस नहीं आया, तो फिर वह ग्रन्थ उस तरह त्रुटित दशामें पडा रहता है। पुराने भण्डारोंमें जो ऐसे असंख्य ग्रन्थ त्रुटित दशामें उपलब्ध होते हैं, उसका यही कारण होता है। इस प्रतिके कुल ८१ पन्ने विद्यमान हैं। पन्नोंकी लंबाई १०½ इंच और चौडाई ४¼ इंच जितनी है। पन्नेकी प्रत्येक बाजूपर १३–१३ पंक्तियां लिखी हुई हैं। अक्षर अच्छे हैं किन्तु पाठ बडा अशुद्ध है। इस का उपयोग हमने कहीं कहीं – विशेष भ्रान्तिवाले पाठोंको ठीक करने हीके लिये – किया है और कोई विशेष उपयोग इसका नहीं हुआ।

**D नामक प्रति** – यह प्रति पूज्यपाद श्रीमान् प्रवर्तक श्रीकान्तिविजयजी महाराजके निजी संग्रहकी है। यह प्रति भी अपूर्ण है। लेकिन, ऊपरवाली C प्रतिमें जब उत्तर भाग नहीं है, तब इसमें पूर्व भाग नहीं है। इसके पूर्व भागके १०१ पन्ने अनुपलब्ध हैं। इस उत्तर भागमें पत्रसंख्या १०२ से ले कर १९९ तक विद्यमान है। इसका प्रारंभ ठीक मानतुङ्गसूरिके चरितसे होता है। इससे मालूम देता है, कि शायद लिपिकारने इस प्रतिको लिखा ही दो खण्डोंमें होगा। इससे इसके पूर्व खण्डमें, कोई चरित, जैसा कि ऊपरवाली C प्रतिमें मिलता है, खण्डित नहीं

---

१ ग्रन्थकारके नाम विषयकी ऐसी भद्दी भूल तो निर्णयसागर की छपी हुई आवृत्तिके मुखपृष्ठ पर भी छपी हुई है। उसमें **प्रभाचन्द्र** सूरिके बदले कर्ताका नाम **चन्द्रप्रभ** सूरि लिखा है जो वास्तवमें ग्रन्थकारके गुरुका नाम है।

मिलता। यह प्रति भी A संज्ञक प्रतिके समान ताडपत्रके पन्नोंके ढंगकी है। इसका कागज है तो कुछ मोटा ही–लेकिन कुछ मुलायम है। इसके पन्नोंकी लंबाई ११ इंच और चौडाई ३½ इंच जितनी है। पन्नेके प्रत्येक पार्श्वपर ११–११ पंक्तियां लिखी हुई हैं। इसकी लिपि बहुत ही सुन्दर है और वाचना भी प्रायः शुद्धतर है। इसके पन्नोंके मध्य भागमें, चतुष्कोणाकारमें कुछ जगह बिनालिखी छोडी गई है जिसमें गेरूवे रंगका गोल चन्द्रक बनाया गया है और उसके ठीक मध्यमें छेद कर दिया गया है। इस छेदमें सब पन्नोंको एकसाथ बान्ध रखनेके लिये सूतकी डोरी पिरोई जाती थी।

प्रायः तेरहवीं शताब्दीमें जब इस देशमें कागजका प्रचार शुरू हुआ, तब ताडके पत्तोंके बदले कागजके पन्नों पर ग्रन्थ लिखने शुरू हुए। लेकिन ये कागजके पन्ने उसी आकार और नापके बनाए जाते थे जैसे ताडके पत्ते होते थे। यानि लंबाईमें अधिक और चौडाईमें कम। इससे पन्नेमें लिखान कम समाता था और इसलिये बडे ग्रन्थोंके लिये सौ दो-सौ और उससे भी अधिक संख्याके पन्नोंकी आवश्यकता होती थी। किसी किसी बृहत्काय ग्रन्थके लिये तो ५००–७०० जितने पन्ने भी पर्याप्त नहीं होते थे। इन अधिक संख्यावाले पन्नोंकी पोथीको ठीक ढंगसे बान्ध रखनेके लिये, पन्नोंके मध्यमें छेद कर, उसमें सूतकी डोरी पिरोई जाती थी। पन्नोंकी रक्षाके लिये उनके ऊपर और नीचेकी ओर उसी नापकी एक-एक लकडीकी पतलीसी पट्टी रखी जाती थी और उन पट्टियोंके समेत, उस डोरीसे उस पुस्तकको बान्ध दी जाती थी। ताडपत्रकी पुस्तकोंको इस प्रकार डोरीमें बान्धे विना व्यवस्थित रखना कठीन रहता है। पत्ते चिकने होनेसे और चौडाईमें छोटे होनेसे, अधिक संख्यामें, वे एक साथ सरलतासे जम कर नहीं रह सकते और इधर-उधर खिसकते रहते हैं। इसलिये उनको जमा कर व्यवस्थित रूपमें रखनेके लिये इस प्रकार उनको डोरीमें बान्ध रखना अत्यन्त आवश्यक होता है। कागजके पन्ने भी प्रारंभमें जब, जैसा कि ऊपर कहा गया है, उन ताडके पत्तोंके जैसे ही लंबाई-चौडाईवाले बनाये गये तब उनको भी उसी प्रकार डोरीमें बान्ध रखना आवश्यक रहा। पर, पीछेसे अनुभवसे माळूम हुआ कि कागजके पन्ने तो और और आकारमें भी बनाये जा सकते हैं और वैसा करनेसे पुस्तकोंके लिखनेमें तथा रखनेमें भी कहीं अधिक सुविधा हो सकती है। तब फिर कागजके पन्नोंकी लंबाई-चौडाईमें परिवर्तन किया जाने लगा। यानि लंबाई कम की गई और चौडाई बढाई गई। बहुत वर्षों तक इसका कोई निश्चित और व्यवस्थित परिमाण नहीं रहा। जिसको जो आकार और माप अच्छा लगता वह उस तरहके पन्ने बना लेता। यही सबब है कि प्रस्तुत ग्रन्थकी A प्रतिके पन्नोंकी लंबाई जब १४ इंच और चौडाई ३½ इंच है, तब D प्रति की लंबाई ११ इंच और चौडाई ३½ इंच है। पर धीरे धीरे यह माप स्थिर होने लगा और प्रायः १५ वीं शताब्दीमें अधिक व्यवस्थित और निश्चित रूपमें व्यवहृत होने लगा। यह माप प्रायः ऐसा रहा है–लंबाईमें १० से ११ इंच और चौडाईमें ४ से ५ इंच। १५ वीं शताब्दीके कुछ ग्रन्थोद्धारकोंने, प्रथम कुछ इससे भी बडे आकारको पसन्द किया माळूम देता है। उस समयके भण्डारोंमें जो ग्रन्थ लिखाये गये उनमेंसे प्रायः बहुतोंका आकार लंबाईमें ११ से १२ इंच तकका और चौडाईमें ५ से ६ इंच तकका है। पर पीछेसे यह आकार कुछ असुविधाजनक माळूम दिया, और इसलिये बादमें प्रायः लंबाई-चौडाईमें, जैसा कि ऊपर बताया गया है, एक-एक इंच कम कर दिया गया। १५ वीं शताब्दीके बादके लिखे हुए जो हजारों पुस्तक जैन ग्रन्थ-भण्डारोंमें उपलब्ध होते हैं, उनका अधिकांश प्रायः इसी आकारका है। यह आकार जैन साधुओंको इतना अधिक पसन्द आ गया है कि, अब इस मुद्रणकलाके जमानेमें भी, उपयोगिता-अनुपयोगिताका कुछ अधिक विचार न कर, वे प्रायः इसी आकारमें, अपना ग्रन्थ-प्रकाशन-कार्य करते रहते हैं। अस्तु।

इस D प्रतिके पन्नोंके अंकोंमें एक विशेषता है, और वह यह कि इसके प्रत्येक पन्ने पर दो तरहसे अंक लिखे गये हैं। पन्नेके दाहिने हांसिये पर, ठीक मध्य भागमें, अन्यान्य पोथियोंकी तरह ही, देवनागरीके चालू अंक, जैसे–

१०१-१०२-१०३ इत्यादि, लिखे गये हैं। पर हांसियेके बायें पार्श्व पर, तांडपत्रकी पुरानी पोथियोंके ढंग पर, सांकेतिक अंक भी लिखे हुए हैं। जैसा कि

**१०२ के अंकके लिये सु। १०३ के लिये सु। १०९ के लिये सु। और ११० के लिये सु**
**० ० ० ले**
**२ ३ ९ ०**

ऐसे संकेत हैं। ताडपत्र पर लिखे हुए ग्रन्थोंके पत्रोंपर प्रायः इसी तरहके, चालु और सांकेतिक, दोनों प्रकारके अंक लिखे रहते हैं।

इस प्रतिके अंतमें लिखनेवालेका नाम और समयादिका निर्देशक उल्लेख कोई नहीं मिलता, इसलिये इसका ठीक समय ज्ञात नहीं हो सकता; तो भी इन सांकेतिक अक्षरोंके अवलोकनसे और प्रतिकी स्थितिको देखनेसे मालूम होता है कि यह भी प्रायः, वि० सं० १४०० के पूर्व-ही-की लिखी हुई होनी चाहिए। हमारे पासकी प्रतियोंमें, A के बाद, प्राचीनताकी दृष्टिसे इसका दूसरा स्थान है। इसके अन्तमें भी ग्रन्थकारकी प्रशस्ति विद्यमान है।

**N संकेत**—निर्णयसागर प्रेस द्वारा प्रकाशित, डॉ० हीरानन्द शास्त्रीकी उक्त मुद्रित आवृत्तिको हमने, निर्णयसागरके नाम पर N अक्षरसे संकेतित किया है। इसके उपरान्त, मुख्यतया ऊपर बतलाई हुई इन ४ पुरानी पोथियोंके आधार पर, प्रस्तुत आवृत्तिका संशोधन और संपादन किया गया है। इनके अतिरिक्त, पूनाके भाण्डारकर ओरिएन्टल रीसर्च इन्स्टीटयुटमें संरक्षित राजकीय ग्रन्थसंग्रहकी १ प्रति, तथा अहमदाबादके डेलाके उपाश्रयवाले जैन ग्रन्थभण्डारकी १ प्रति भी मंगवाई गई थी, किन्तु उनकी अनुपयोगिता देख कर, उनका कुछ उपयोग नहीं किया गया और इसलिये उनके कोई संकेत नहीं दिये गये। इस प्रकार इन ग्रन्थभण्डारोंमेंसे, हमें जो ये प्राचीन पोथियां प्राप्त हुई और उनसे इस ग्रन्थके संपादनमें जो विशिष्ट सहायता प्राप्त हुई, इसलिये हम यहां पर इन प्रतियोंके प्रेषक सज्जनोंका हार्दिक आभार मानते हैं और तदर्थ अपनी कृतज्ञता प्रकट करते हैं।



यह प्रभावक चरित्र, एक बडे महत्त्वका ऐतिहासिक ग्रन्थ है। विक्रमकी १ ली शताब्दीसे लेकर १३ वीं शताब्दीके पूर्वभाग तकके, प्रायः साढे बारह सौ वर्षमें, होनेवाले जैन श्वेतांबर संप्रदायके सबसे बडे महान् प्रभावक, संरक्षक और शास्त्रकार आचार्योंके कार्य-कलाप और गुण-गौरवका इस ग्रन्थमें बहुत अच्छा संकलन किया गया है। ग्रन्थकारको अपने ग्रन्थके निर्माण करनेमें मुख्य प्रेरणा मिली है कलिकाल सर्वज्ञ **हेमचन्द्र सूरि**की कृतिसे। हेमचन्द्र सूरिने **त्रिषष्टिशलाकापुरुषचरित्र**की रचना की, और फिर उसके परिशिष्ट रूपमें, भगवान् महावीर देवके बाद होनेवाले **वज्रस्वामि**तकके आचार्योंके चरित्रका वर्णन करनेवाले **स्थविरावलिचरित**के नामसे एक **परिशिष्टपर्व**की भी रचना की। हेमचन्द्र सूरिके इस परिशिष्टपर्वको देख कर प्रभाचन्द्र कविको कल्पना हुई कि—जहांसे हेमचन्द्र सूरिने पूर्वाचार्योंका चरित्रवर्णन बाकी छोड दिया है, वहांसे प्रारंभ कर, यदि हेमचन्द्र सूरि तकके आचार्योंके चरित-वर्णनका एक ग्रन्थ बनाया जाय तो वह जैन इतिहासके दर्शनमें बडा उपयुक्त होगा। यह सोच कर कवि प्रभाचन्द्रने इस प्रभावक चरितकी रचना की; और कहना चाहिए कि उन्होंने अपने उद्देशमें संपूर्ण सफलता प्राप्त की। ग्रन्थकार कहते हैं कि—उन्होंने अपने ग्रन्थमें जो इतिवृत्त ( इतिहास ) का वर्णन किया है वह, कुछ तो प्राचीन ग्रन्थोंके आधार परसे लिया गया है और कुछ बहुश्रुत विद्वान् मुनियोंके पाससे सुना गया है। इसमें ग्रथित किया हुआ यह इतिवृत्त कितना विश्वस्त, कितना उपयुक्त और कितना विस्तृत है इसकी विशेष चर्चा तो इस ग्रन्थका जो हिन्दी भाषान्तर प्रकट किया जायगा उसमें की जायगी।

इस ग्रन्थमें न केवल जैन आचार्योंका ही इतिवृत्त ग्रथित है, परंतु साथमें तत्कालीन अनेकों राजाओं, प्रधानों, विद्वानों, कवियों और अन्यान्य महा जनोंके भी प्रसंगोपात्त कितने ही महत्त्वके उल्लेख और ऐतिहासिक तथ्य अन्तर्निहित हैं । चक्रवर्ती सम्राट् हर्षवर्द्धन, प्रतिहार सम्राट् आमराज (नागावलोक), विद्याविलासी परमार नृपति भोजदेव, चालुक्य चक्रवर्ती भीमदेव, सिद्धराज जयसिंह और परमार्हत राजर्षि कुमारपाल आदि कई इतिहासप्रसिद्ध राजाओं, एवं कविचक्रवर्ती भट्ट बाण, कविराज वाक्पति, महाकवि माघ, सिद्धसारस्वत धनपाल, कवीन्द्र श्रीपाल आदि भारतके साहित्य-सम्राटोंकी भी इसमें कितनीक विश्वस्त ऐतिह्य घटनाएं उल्लिखित हैं, जिनका सूचन अन्यत्र अप्राप्य है ।

रचनाकी दृष्टिसे भी यह ग्रन्थ उच्च कोटिका है । इसकी भाषा प्रावाहिक हो कर प्रासादिक है । वर्णन सुसंबद्ध और सुपरिमित है । कहीं भी अतिशयोक्ति या असंभवोक्ति दृष्टिगोचर नहीं होती । महाकवि और प्रभावशाली धर्माचार्योंका ऐतिहासिक वर्णन करनेवाला इसकी कोटिका और कोई दूसरा ग्रन्थ समग्र संस्कृत साहित्यमें उपलब्ध नहीं है ।

*

जिस तरह प्रबन्धचिन्तामणिके वर्णनके साथ सम्बन्ध रखनेवाले अन्यान्य प्रकीर्ण प्रबन्धोंका संग्रहात्मक 'पुरातनप्रबन्धसंग्रह' नामका पूरकग्रन्थ, प्रबन्धचिन्तामणिके द्वितीय भागके रूपमें प्रकट किया गया है, वैसा ही इस 'प्रभावकचरित' के वर्णनके साथ संबन्ध रखनेवाले प्रकीर्णक प्रबन्धोंका भी एक पूरक ग्रन्थ, तैयार किया जा रहा है, जिसमें प्राकृत और संस्कृत भाषामें उपलब्ध ऐसे अनेकानेक प्राचीन चरितों–प्रबन्धोंका महत्त्वका संग्रह होगा ।

इन चरितों–प्रबन्धोंके अवलोकनसे विद्वानोंको इस विषयकी बडी विशिष्ट बातें ज्ञात होंगीं कि जैन धर्मको जो यह रूप मिला है वह किन महान् विद्वान् और प्रभावशाली आचार्योंके कृतित्वका फल है । किस तरह जैन दर्शनको धीरे धीरे एक संघटित जनसंघ और धार्मिक समुदायका रूप मिला, किस तरह अन्यान्य धर्मके महापण्डितोंके साथ वाद-विवादकी प्रतिस्पर्द्धामें उतर कर जैन आचार्योंने अपने धर्मकी स्थिति और प्रतिष्ठा बढाई, किस तरह जैन धर्मानुयायी स्वतंत्र जातियोंका और कुलोंका संगठन हुआ, किस तरह जैन तीर्थों और मन्दिरोंका निर्माण हुआ, किस तरह जैन वाङ्मयका ऐसा विशाल और अपूर्व विकास हुआ, किस तरह जैन धर्मके इतने संप्रदायों और गच्छोंका आविर्भाव हुआ और कैसे उनमें पक्ष-विपक्ष बने–इत्यादि विषयक, जैन धर्म और जैन समाजके क्रम-विकास या क्रम-परिवर्तनका सारभूत और तथ्यपूर्ण इतिहास इन प्रबन्धोंके अध्ययन-मननसे उत्तम प्रकार हो सकेगा ।

कार्तिक शुक्ला १५, वि० सं० १९९७
भारतीय विद्याभवन,
आन्ध्रगिरि(आन्धेरी); बम्बई.

–जिन विजय

श्रीप्रभाचन्द्रसूरिविरचितं

# प्रभावकचरितम् ।

## [अ थ प्रा स्ता वि क म् ।]

॥ ॐ नमः श्रुतदेवतायै* ॥

अर्हत्तत्त्वं स्तुमो विश्वशासनोन्नतिकारकम् । यत्प्रसादेन पूर्वेऽपि महोदयपदं ययुः ॥ १ ॥
श्रीसर्वमङ्गलोल्लासी वृषकेतुरनङ्गभित् । शम्भुर्गणपतिस्तीर्थनाथ आद्यः पुनातु वः ॥ २ ॥
हरिणाङ्को न-भोगश्रीर्जनतापापहारकः । महाबलः प्रभुः शान्तिः पातु[1] चित्रं [2]ध्रुवस्थितिः ॥ ३ ॥
दशावतारो वः[3] पायात् †कमनीयाञ्जनद्युतिः । किं श्रीपतिः प्रदीपः किं न तु श्रीपार्श्वतीर्थकृत् ॥ ४ ॥
यद्‡गोत्रजश्चरन्[4] भव्यगोचरे पात्रपूरकः । श्रेयःपीयूषतः पातु वर्द्धमानः स गोपतिः[5] ॥ ५ ॥
सा पूर्वांगमिता गोदा[6] सुमनोऽर्च्या[7] सरस्वती । बहुपादोदया न्यस्ता येन तं **गौतमं** स्तुवे ॥ ६ ॥
सम्पत्तिः सत्पदार्थानां यत्प्रसादात् प्रजायते । जीवसञ्जीवनीं नौमि भारतीं च श्रियं च ताम् ॥ ७ ॥
यद्दत्तैकार्थरूपस्य वृद्धिः कोटिगुणा भवेत् । श्री**चन्द्रप्रभ**सूरीणां तेषां स्यामनृणः कथम् ॥ ८ ॥
सज्जनः स कथं [8]जिष्णुर्योऽलीकादरतत्परः । परावर्णं गुणीकृत्य दोषोद्योगं[9] दधाति न[10] ॥ ९ ॥
असन्तः किमु न[11] स्तुत्याः स्तुत्यां येऽनादृताः परम् । दीपयन्ति कृताभ्यासाः [12]क्ष्णवीक्षणतः [13]क्षणे ॥१०॥
कलौ युगप्रधानः[14] श्री**हेमचन्द्रः** प्रभुः[15] पुरा । श्री**शलाकानृणां वृत्तं** प्रास्तावीन् नृपबोधकृत् ॥ ११ ॥
श्रुतकेवलिनां षण्णां दशपूर्वभृतामपि । [16]आ**वज्रस्वामि**वृत्तं च चरितानि व्यधत्त सः ॥ १२ ॥
ध्याततन्नाममन्त्रस्य प्रसादात् प्राप्तवासनः[17] । §आरोक्ष्यन्निव[18] हेमाद्रिं पादाभ्यां विश्वहास्यभूः[19] ॥ १३ ॥
श्री**वज्रा**नुप्रवृत्तानां शासनोन्नतिकारिणाम् । प्र भा व क मुनीन्द्राणां वृत्तानि कियतामपि ॥ १४ ॥
बहुश्रुतमुनीशेभ्यः प्राग्ग्रन्थेभ्यश्च कानिचित् । उपश्रुत्येतिवृत्तानि वर्णयिष्ये कियन्त्यपि ॥ १५ ॥–विशेषकम् ।
श्री**देवानन्द**शैक्ष[20]श्री**कनकप्रभ**शिष्यराट् । श्री**प्रद्युम्नप्रभु**र्जीयाद् ग्रन्थस्यास्यापि शुद्धिकृत् ॥ १६ ॥

---

* C ॐ नमः श्रीश्रुत°; B ॐ नमो श्रीजिनाय । उपाध्यायश्रीमुनिसागरपरमगुरुभ्यो नमः ।; N ॐ नमो भगवते श्रीपार्श्वनाथाय ।
1 B पातुश्चि° । 2 N ध्रुवं । 3 N नः । † 'रम्य' इति B टिप्पणी । ‡ 'वाणी' इति B टि० । 4 C चरत्° । 5 B गोपतिं ।
6 N मोदा । 7 B सुमनोर्च्ये° । 8 C N विष्णु° । 9 A दोषोद्योतं । 10 N नः । 11 N किमुत । 12 B क्षण° ।
13 B °तक्षणे । 14 N प्रधान° । 15 B प्रभु° । 16 N श्रीवज्र° । 17 C वासतः । § 'चढिवू' इति B टि० ।
18 N आरोक्ष° । 19 B °भू । 20 B °शिष्य° ।

श्रीवज्रो रक्षितः श्रीमानार्यनन्दिल इत्यपि ।
सूरिः श्रीकालकाचार्य[1]-पादलिप्तप्रभुस्तथा ॥ १७ ॥
रुद्रदेवप्रभुः[2] सूरिः श्रमणसिंह इत्यपि ।
अथार्यखपुटः[3] सूरिर्महेन्द्रश्च प्रभावकः ॥ १८ ॥
सूरिर्विजयसिंहश्च जीवदेवमुनीश्वरः ।
वृद्धवादी सिद्धसेनो हरिभद्रप्रभुस्तथा ॥ १९ ॥
मल्लवादिप्रभुर्बप्पभट्टिः कोविदवासवः ।
श्रीमानतुंगसूरिः श्रीमानदेवो मुनीश्वरः ॥ २० ॥
सूरिश्च सिद्धव्याख्याता श्रीमान् वीरगणिः[4] प्रभुः ।
वादिवेतालबिरुदः शान्तिसूरिः प्रभुस्तथा ॥ २१ ॥
श्रीमान् महेन्द्रसूरिः श्रीधनपालेन संगतः ।
सूराचार्यप्रभुः श्रीमान् कृतभोजसभाजयः ॥ २२ ॥
श्रीमानभयदेवश्च वीराचार्यः कवीश्वरः ।
देवसूरिर्गुरुः[5] श्रीमान् हेमचन्द्रप्रभुस्तथा ॥ २३ ॥—सप्तभिः कुलकम् ।

मादृशोऽल्पमतिः कीदृगेतेषां गुणकीर्तने । [6]कल्लध्वानिं सितास्वादे मूकोऽपि कुरुतेऽथवा ॥ २४ ॥
एतच्चरितशाखिभ्यः संमील्य सुमनश्चयम् । तद्वृत्तमालामुद्दामां[7] गुम्फिष्यामि गुरोर्गिरा ॥ २५ ॥



1 C N कालिका° । 2 C N °देवः । 3 N खपटः । 4 N °गणि° । 5 B गुरु° । 6 N कल° । 7 A B °द्दामं ।

# १. वज्रस्वामिचरितम् ।

§ **१.** निधिः सौभाग्यभाग्यस्य नाम यस्यादिमङ्गलम् । **वज्रस्वामि**विभोः[1] पूर्वं वृत्तं तस्य मयोच्यते ॥ २६ ॥
अस्त्य**वन्ती**ति देशः क्ष्मासरसीसरसीरुहम् । यद्गुणग्रामरङ्गेण बद्धसख्ये रमा-गिरौ ॥ २७ ॥
तत्र **तुम्बवनो** नाम निवेशः क्लेशवर्जितः । अभूवन् यस्य वासाय नाकिनोऽप्यभिलाषुकाः ॥ २८ ॥
तत्र श्रेष्ठी **धनो** नाम कामधुक्-कल्पपादपौ । अमानमानयद्दानजितौ त्रिदिवमाश्रितौ ॥ २९ ॥
तस्यार्थिजन[2]दौःस्थित्यमुस्तोच्छेदमहाकिरिः* । पुत्रो **धनगिरि**र्नाम कामप्रतिमविग्रहः ॥ ३० ॥
आबाल्यादप्यबाल्याभविवेकच्छेकमानसः । नाभिलाषी परिणये प्रणयेषु[3]महात्मनाम् ॥ ३१ ॥
**धनपाला**ख्यया तत्र व्यवहारी महाधनः । यल्लक्ष्मीवीक्षणाल्लक्ष्मीपतिराविक्षदम्बुधिम्[4] ॥ ३२ ॥
तस्यार्य**समितः**[5] पुत्रः **सुनन्दा** च सुताऽभवत् । तयोः समागमस्तत्र लक्ष्मी-कौस्तुभयोरिव ॥ ३३ ॥
सुनन्दां यौवनोद्भेदमेदुराङ्गीं विलोकयन् । वरं धनगिरिं दध्यौ तत्पिता गुणगौरवात् ॥ ३४ ॥
तत्सुतः समितो[6] गेहवासेऽपि यतिवद्वसन्[7] । यायावरेषु भोगेषु वैराग्यं परमं दधौ ॥ ३५ ॥
श्रुतश्रीखण्डमलयगिरेः[8] **सिंहगिरेः** प्रभोः[9] । स दीक्षामग्रहीत् पार्श्वे पार्श्वे निर्वृतिवेश्मनः ॥ ३६ ॥
अन्यदा धनपालश्च प्रोचे धनगिरिं सुधीः । सागरस्येव रेवाऽस्तु सुनन्दा ते परिग्रहे ॥ ३७ ॥
स प्राह ज्ञाततत्त्वार्थ[10]भवतां भवचारके[11] । सुहृदां सहृदां[12] किं स्याद् बन्धनं कर्तुमौचिती ॥ ३८ ॥
प्रोवाच धनपालोऽपि पुरा श्रीऋषभप्रभुः[13] । [14]ऋणवद्भोगकर्मेदं भुक्त्वा मुक्तो भवार्णवात् ॥ ३९ ॥
न चानुचितमेतत् तन्मानिन् ! मानय मद्गिरम् । मानसेऽतिविरक्तेऽपि मेने तत्प्रश्रयार्द्रा सः ॥ ४० ॥
उदुवाह शुभे लग्ने संलग्ने[15] सततोत्सवैः । अनासक्तः स विषयान् बुभुजे मर्त्यदुर्लभान् ॥ ४१ ॥
स वैश्रमणजातीयसामानिक[16]सुरोऽन्यदा । **अष्टापदा**द्रिशृङ्गे[17] यः प्रत्यबोधीन्**द्रभूति**ना ॥ ४२ ॥
सुनन्दाकुक्षिकासारेऽवतीर्णः स्वायुषः क्षये । प्राक्प्रेम्णा दत्तसुस्वप्नैरस्वप्नै[18] रहितो दृढम् ॥ ४३ ॥—युग्मम् ।
ततो धनगिरिर्धन्यंमन्योऽवसरलाभतः । अपृच्छत व्रते पत्नीं तुष्टां पुत्रावलम्बनात् ॥ ४४ ॥
जरद्रज्जुमिव प्रेमबन्धं छित्त्वा स सत्वरम् । तत्रायातस्य तत्पुण्यैः पार्श्वे सिंहगिरेर्ययौ ॥ ४५ ॥
व्रतं तत्राददे लोचपूर्वं [19]सामायिकोत्तरम् । दुस्तरं स तपस्तप्यमानोऽप्रीयत चानिशम् ॥ ४६ ॥
§ **२.** पूर्णे कालेऽन्यदाऽसूत सुनन्दा सुतमुत्तमम् । तेजोभी रत्नदीपानामपि सापत्न्यदुःखदम् ॥ ४७ ॥
निर्जैः प्रवर्तितस्तत्र पुत्रजन्मोत्सवो मुदा । यदीक्षणादनिमिषा दधुः स्वं[20] नाम सार्थकम् ॥ ४८ ॥
अजल्पत् तत्र कोऽप्यस्य [21]प्राव्राजिष्यन्न चेत् पिता । महेऽधिकतरो हर्षस्ततोऽत्र समपत्स्यत ॥ ४९ ॥
प्राच्यदेवभवज्ञानांशेन संज्ञीव नन्दनः । दध्यावहो महापुण्यो मत्पिता संयममग्रहात् ॥ ५० ॥
ममापि भवनिस्तारः संभवी संयमाद् यदि । अत्रोपायं व्यमृक्षच्च रोदनं शैशवोचितम् ॥ ५१ ॥
अनेकोल्लापनस्नानदेहसंवाहनादिभिः । गजाश्वकादिवीक्षा[22]भिरपरैरपि कौतुकैः ॥ ५२ ॥
भृशं प्रलोभ्यमानोऽपि न तस्थौ स क्षणं सुखम् । कथं वदति यो जाग्रच्छेते कैतवनिद्रया ॥ ५३ ॥—युग्मम् ।
दध्यौ मातापि **सोमश्री**र्वत्स आप्यायको दृशाम् । यदुष्मकैरवक्लेशप्रदस्तद्धि दुनोति माम् ॥ ५४ ॥
एवं जग्मुश्च षण्मासाः षड्वर्षशतसंनिभाः । तन्निवेशनमागाच्च तदा **सिंहगिरि**र्गुरुः ॥ ५५ ॥

---

1 B °प्रभोः । 2 C °जिन° । * 'सूयर' इति B टि० । 3 N प्रणयेन । 4 B °दम्बुधे । 5 C °समिनः । 6 A B संमितो । 7 C °बद्धसन् । 8 C °गिरि° । 9 C प्रभो । 10 N °तत्त्वार्थौ । 11 C भवचा° । 12 A C सुहृदां । 13 A °ऋषभः । 14 N तृण° । † 'अत्याग्रहात्' इति B टि० । 15 N स ( तु ) तां । 16 N समानिक° । 17 A °पदाद्रि । 18 C °स्वप्ने । 19 N सामयि° । 20 C खं । 21 A B प्रावजि° । 22 N °विवीक्षा° ।

तत्र गोचरचर्यायां विशन् **धनगिरि**र्मुनिः । गुरुणाऽऽदिदिशे पक्षिशब्दज्ञाननिमित्ततः ॥ ५६ ॥
अद्य यद् द्रव्यमाप्नोषि सचित्ताचित्तमिश्रकम् । ग्राह्यमेव त्वया सर्वं तद्विचारं विना मुने ! ॥ ५७ ॥
तथेति प्रतिपेदानस्तदा**र्यसमिता**न्वितः । **सुनन्दा**सदनं पूर्वमेवागच्छदतुच्छधीः ॥ ५८ ॥
तद्धर्मलाभश्रवणादुपायातः* सखीजनः । सुनन्दां प्राह देहि त्वं पुत्रं धनगिरेरिति ॥ ५९ ॥
साऽपि निर्वेदिता बाढं पुत्रं संगृह्य वक्षसा । नत्वा जगाद पुत्रेण रुदता खेदिताऽस्मि ते ॥ ६० ॥
गृहाणैनं ततः स्वस्य पार्श्वे स्थापय चेत् सुखी । भवत्यसौ प्रमोदो मे भवत्वेतावतापि तत्[1] ॥ ६१ ॥
स्फुटं धनगिरिः[2] प्राह प्रहीष्ये[3] नन्दनं निजम् । परं स्त्रियो वचः पंगुवन्न याति पदात्पदम् ॥ ६२ ॥
क्रियन्तां[4] साक्षिणस्तत्र विवादहतिहेतवे । अद्यप्रभृति पुत्रार्थे न जल्प्यं किमपि त्वया ॥ ६३ ॥
अतिखिन्ना च साऽवादीदत्राऽऽर्यसमितो मुनिः । साक्षी सख्यश्च साक्षिण्यो भापे नाऽतः किमप्यहम् ॥६४॥
[5]अजातवृजिनाबन्धः[6] पात्रबन्धे नियोज्य तम् । विरतं रोदनात् तुष्टिपुष्टं संदर्श्य तत्पुरः ॥ ६५ ॥
बहिःकृतान्तरारातिर्बहिर्गत्वा[7] गृहाङ्गणात् । भज्यमानभुजस्तस्य भारादागाद् गुरोः पुरः ॥ ६६ ॥–युग्मम् ।
आयान्तं भुग्नमात्रं† तं वीक्ष्य संमुखमाययुः । तद्बाहोः पात्रबन्धं च गुरवः स्वकरे व्यधुः ॥ ६७ ॥
वज्रोपमं किमानीतं त्वयेदं मम हस्तयोः । भारकृन्मुमुचे [8]हस्तान्मयाऽसौ निजकासने ॥ ६८ ॥
इत्युक्त्वा च समैक्षन्त गुरवस्तं शशिप्रभम् । साध्वास्यचन्द्रकान्तानां सुधास्रावनिबन्धनम् ॥ ६९ ॥
गुरुश्च **वज्र** इत्याख्यां तस्य कृत्वा समार्पयत् । साध्वीपार्श्वाच्छ्राविकाणां व्यहार्षीदन्यतस्ततः ॥ ७० ॥
गुरुभक्त्याथ [9]तद्भाग्यसौभाग्याच्च वशीकृताः । धर्मिनार्यः क्षीरपाणमुख्यशुश्रूषणैः शिशुम् ॥ ७१ ॥
प्रावर्धयन्निजापत्याधिकवात्सल्यकेलितः । साध्वीनामाश्रये[10] रात्रौ वज्रदोलाशयं‡ मुदा ॥ ७२ ॥–युग्मम् ।
तत्र स्थितो वितन्द्रः§ सन्नङ्गान्येकादशाप्यसौ । साध्वीभिर्गुण्यमानानि निशम्याधिजगाम¶ सः ॥ ७३ ॥
ततो विशेषिताकारं तदीयपरिचर्यया । तत्रायाता **सुनन्दा**पि तं निरीक्ष्य दधौ स्पृहाम् ॥ ७४ ॥
प्रार्थयच्चाथ ताः साध्वीः[11] सुतं मे ददतेति सा । ऊचुस्ता वज्रपात्राभा गुरुस्थापनिका ह्यसौ ॥ ७५ ॥
कथं शक्योऽर्पितुं बालस्तस्मादत्रस्थ एव सन् । लाल्यः परं गृहे नेयो न गुर्वनुमतिं विना ॥ ७६ ॥–युग्मम् ।
§ ३. अन्यदा गुरवः प्रापुस्तत्पुरं तज्जनन्यपि । नन्दनं प्रार्थयामास गृहिवत् पत्युरन्तिके ॥ ७७ ॥
स च प्राह नृपादेश इव सन्मर्त्यवागिव । कन्याप्रदानमिव च महतामेकशो वचः ॥ ७८ ॥
गृहीतमुक्तं जायेत नो बालपरिधानवत् । एवं विमृश[12] धर्मज्ञे ! नो वा सन्त्यत्र साक्षिणः ॥ ७९ ॥
निर्विचाराग्रहा साऽप्यवलेपं न त्यजेद् यदा । संघप्रधानपुरुषैः पर्यच्छेदि‖ सुभाषितैः ॥ ८० ॥
तत्राप्यमानयन्ती सा गता राज्ञः पुरस्तदा । यतयश्च समाहूताः संघेन सह भूभृता[13] ॥ ८१ ॥
धर्माधिकरणायुक्तैः[14] पृष्टौ[15] पक्षावुभावपि । अङ्गीकारं तयोः श्रुत्वा विचारे मुमुहुश्च ते ॥ ८२ ॥
एकत्र दुःप्रतीकारा माता पुत्रं प्रयाचति । अन्यत्र संघः श्रीतीर्थनाथैरपि निषेवितः ॥ ८३ ॥
विचचार स्वयं राजा स्वरुच्या नन्दनो ह्ययम् । यत्पार्श्वे याति तस्यास्तु किं परैर्बहुभाषितैः ॥ ८४ ॥
ततो माता[16] प्रथमतोऽनुज्ञाता तत्र भूभृता । क्रीडनैर्भक्ष्य[17]भोज्यैश्च मधुरैः सा न्यमंत्रयत् ॥ ८५ ॥
सुते तथास्थिते राज्ञा ऽनुज्ञातो जनको मुनिः । रजोहरणमुद्यम्य[18] जगादानपवादगीः$ ॥ ८६ ॥

---

* 'पाडोसिनिमिली धर्म्मलाभ' इति B टि० । 1 C N यत् । 2 B गिरि° । 3 B प्रहीक्षे । 4 B क्रियतां । 5 C अजान° । 6 N बन्ध° । 7 A N बहिःकृत्वा । † 'ग्रहता' इति B टि० । 8 B तस्मात्° । 9 C आदर्शे 'द्भाग्यसौगुरु भक्त्याथतग्याच्च' एतादृशो व्यस्ताक्षरः पाठः । 10 B °माश्रिये । ‡ 'झोलीबंध' इति B टि० । § 'निद्रारहित' इति B टि० । ¶ 'पारंगतः' इति B टि० । 11 B साध्य । 12 A व्यमृश: B N विमृश्य । ‖ 'परीछवी' इति B टि० । 18 A भूभृताः । 14 N °करणे युक्तैः 15 B पुष्टौ । 16 A C मातुः । 17 B भक्ष° । 18 B N °मुद्यस्य । $ 'मायारहित' इति B टि० ।

वत्स ! त्वं यदि तत्त्वज्ञः संयमाध्यवसायवान् । गृहाण तदिदं कर्मरजोहरणहेतवे ॥ ८७ ॥–युग्मम् ।
उत्प्लुत्य मृगवत् सोऽथ तदीयोत्सङ्गमागतः । जग्राह चमराभं तच्चारित्रधरणीभृतः[1] ॥ ८८ ॥
ततो जयजयारावो मङ्गलध्वनिपूर्वकम् । समस्ततूर्यनादोर्जिसज्जः[2] समजनि स्फुटः ॥ ८९ ॥
संघस्यार्चां तदाऽकार्षीद् राजा तद्गुरवस्ततः । [3]स्वं स्थानं मुदिता जग्मुर्धर्मिव्रातपुरस्कृताः ॥ ९० ॥
दध्यौ **सुनन्दा** सोदर्य आर्यपुत्रः सुतोऽपि च । मदीया यतयोऽभूवंस्तन्ममापीति सांप्रतम् ॥ ९१ ॥
त्रिवार्षिकोऽपि न स्तन्यं पपौ **वज्रो** व्रतेच्छया । दीक्षित्वा[4] गुरुभिस्तेन तत्र मुक्तः समातृकः ॥ ९२ ॥
§ ४. अथाष्टवार्षिकं वज्रं कृष्ट्वा[5] साध्वीप्रतिश्रयात्[6] । श्री**सिंहगिरयो**ऽन्यत्र विजह्रुः सपरिच्छदाः ॥ ९३ ॥
तदा चाप्रतिबन्धेन तेषां विहरतां सताम् । पर्वतासन्नमेदिन्यामीर्यासमितिपूर्वकम् ॥ ९४ ॥
वज्रप्राग्भवमित्रैश्च तं दृष्ट्वा जृम्भकामरैः । वैक्रियाऽऽविष्कृता[7] मेघमाला तस्य परीक्षणे ॥ ९५ ॥
कुर्करस्वरैः केकिकेकारावेण मिश्रितैः । तिलतन्दुलितो[8] नादः श्रुतिस्वाद्यसुधाऽभवत् ॥ ९६ ॥
नीरैर्नदद्भिरुद्दामसंभवद्भिर्निरंतरम् । प्लाविता भूस्तदद्वैतघटितेव तदाऽभवत् ॥ ९७ ॥
विपुले तस्थिवांसस्ते गिरेरेकत्र कन्दरे । गुरवस्तोयजीवानां विराधनमनिच्छवः ॥ ९८ ॥
एवं घनाघने घोरे कथंचिद्विरते सति । उपोषिता अपि श्रेयस्तृप्तास्ते मुनयोऽवसन् ॥ ९९ ॥
जगज्जीवनमोषेण[9] तदा सूरोऽपि शङ्कितः । रसावस्थापनाद् विश्वे बभूव[10] प्रकटोदयः ॥ १०० ॥
आनीय वारिधेर्वारि जगतीपरिपूरणात् । अवसन्ने च पर्जन्ये श्रमात् सुप्त[11] इवाध्वनौ ॥ १०१ ॥
ततस्तच्चारुवृत्तेन *लेखैर्हल्लेखशालिभिः । वाणिज्यकारकव्याजात् पारणाय न्यमन्त्रि सः ॥ १०२ ॥–युग्मम् ।
एषणात्रितये चोपयुक्तो भुक्तावनादृतः । तत्र वज्रो ययौ प्राप्य गुरोरनुमतिं ततः ॥ १०३ ॥
द्रव्य-क्षेत्र-काल-भावैरुपयोगं ददौ च सः । द्रव्यं कूष्माण्डपाकादि क्षेत्रं देशश्च **मालवः** ॥ १०४ ॥
कालो [12]ग्रीष्मस्तथा भावे विचार्येऽनिमिषा अमी । अस्पृष्टभूक्रमन्यासा अम्लानकुसुमस्रजः ॥ १०५ ॥
चारित्रिणां ततो देवपिण्डो नः[13] कल्पते[14] नहि[15] । निषिद्धा उपयोगेन तस्य हर्षं परं ययुः ॥ १०६ ॥
–त्रिभिर्विशेषकम् ।

तत्र च प्रकटीभूय प्राणमंस्तं मुनिं तदा । वज्रं सद्वृत्ततेजोभिर्भास्वरं भास्वदंशुवत् ॥ १०७ ॥
अन्यत्र विहरतश्चान्यदा ग्रीष्मर्तुमध्यतः । प्राग्वदेव सुरास्तेऽमुं †घृतपूरैर्न्यमन्त्रयन् ॥ १०८ ॥
वज्रे तत्रापि निर्व्यूढे विद्यां ते व्योमगामिनीम् । ददुर्न दुर्लभं किंचित् सद्भाग्यानां हि तादृशाम् ॥ १०९ ॥
§ ५. बाह्यभूमौ प्रयातेषु पूज्येष्वथ परेद्यवि । सदेषणोपयुक्तेषु गीतार्थेषु च गोचरम् ॥ ११० ॥
अवकाशं च बाल्यस्य ददच्चापलतस्तदा । सर्वेषामुपधीर्नामग्राहं भूमौ निवेश्य च ॥ १११ ॥
वाचनां प्रददौ वज्रः श्रुतस्कन्धव्रजस्य सः । प्रत्येकं गुरुवक्त्रेण कथितस्य महोद्यमात् ॥ ११२ ॥
–त्रिभिर्विशेषकम् ।

श्रीमान् **सिंहगिरि**श्चात्रान्तरे वसतिसन्निधौ । आययौ गर्जितोर्जित्यं शब्दं तस्याशृणोच्च सः ॥ ११३ ॥
दध्यौ किं यतयः प्राप्ताः स्वाध्यायैः पालयन्ति माम् । निश्चित्यैकस्य वज्रस्य शब्दं ते तोपतो बभुः ॥ ११४ ॥
पुनर्दध्यावयं गच्छो धन्यो यत्रेदृशः शिशुः । क्षोभोऽस्य मा भूदित्युच्चैःस्वरं नैषेधिकीं[16] व्यधात् ॥ ११५ ॥

---

1 A °धरिणी° । 2 N °सद्यः । 3 N संस्थानं । 4 N वीक्षितो । 5 N कृत्वा । 6 B प्रतिश्रियात् । 7 B वैक्रियाविकृता । 8 B °तुन्दलितो, C °तंडुलितो । 9 A °घोषेण; C पोषेण । 10 B °वाप्रक° । 11 B °स्वप्त° । * 'देवता' इति B टि० । 12 A मीष्म । 13 B न । 14 N कल्प्यते । 15 B नहिः । † 'घेवर' इति B टि० । 16 N नैषेधिकं ।

**वज्रो**ऽपि तं गुरोर्ध्वानं श्रुत्वा लज्जाभयाकुलः । संनिवेश्य[1] यथास्थानं वेष्टिकाः[2] संमुखोऽभ्यगात्[3] ॥११६॥
प्रतिलेख्य ततः पादौ प्रक्षाल्य [4]प्रासुकाम्भसा । पादोदकं ववन्दे च गुरुणा स मुदेक्षितः ॥ ११७ ॥
वैयावृत्यादिषु लघोर्माऽवज्ञाऽस्य भवत्विति । ध्यात्वाऽऽहुर्गुरवः शिष्यान् विहारं कुर्महे वयम् ॥ ११८ ॥
ततस्ते प्रोचुरस्माकं कः प्रदास्यति वाचनाम् । ते प्राहुर्वज्र एवात्र कृतार्थान् वः करिष्यति ॥ ११९ ॥
तत् ते तथेति प्रत्यैच्छन् निर्विचारं गुरोर्वचः । ईदृक्स्वगुरुभक्तेभ्यः शिष्येभ्योऽस्तु नमोनमः ॥ १२० ॥
प्रतिलेख्य निषद्यां च तस्यावक्राः प्रचक्रिरे । ततोऽसौ वाचनां दातुमारेभे यतिसंहतेः ॥ १२१ ॥
*शास्त्राणामितितात्पर्यमनायासेन सोऽभ्यधात् । सुखं यथाऽवगच्छन्ति ते मन्दधिषणा अपि ॥ १२२ ॥
दिनैः कतिपयैरागात् सूरिरभ्युत्थितश्च तैः । तदुदन्तमपृच्छच्च सम्भूयोचुश्च ते ततः ॥ १२३ ॥
पूज्यपादप्रसादेन सञ्जज्ञे वाचनासुखम् । अस्माकं वाचनाचार्यो वज्र एवास्तु तत्सदा ॥ १२४ ॥
श्रुत्वेति गुरवः प्राहुर्मत्वेदं† विहृतं मया । अस्य ज्ञापयितुं युष्मान् गुणगौरवमद्भुतम् ॥ १२५ ॥
तपस्याविधिसंशुद्धवाचनापूर्वकं ततः । अधीतवान मुनिर्वज्रो यावद् गुर्वागमागमम् ॥ १२६ ॥
§६. गत्वा **दशपुरे** वज्रमवन्त्यां प्रैपुराद्दताः । अध्येतुं श्रुतशेषं श्री**भद्रगुप्त**स्य सन्निधौ ॥ १२७ ॥
स ययौ तत्र रात्रौ च पूर्वबहिर्वासमातनोत । गुरुश्च[5] स्वप्नमाचख्यौ निजशिष्याग्रतो मुदा ॥ १२८ ॥
पात्रं मे पयसा पूर्णमतिथिः कोऽपि पीतवान् । दशपूर्व्याः समप्रायाः कोऽप्यध्येता समेष्यति ॥ १२९ ॥
इत्येवं वदतस्तस्य वज्र आगात् पुरस्ततः । गुरुश्चाध्यापयामास श्रुतं स्वाधीतमाश्रुतम् ॥ १३० ॥
श्री**भद्रगुप्त**सूरिश्च तमध्याप्य पुनर्गुरोः । प्राहिणोत् सन्निधौ तस्यानुज्ञायै समयस्य सः ॥ १३१ ॥
**वज्र**प्राग्जन्मसुहृदो ज्ञानाद् विज्ञाय ते सुराः । तस्याचार्यप्रतिष्ठायां चक्रुरुत्सवमद्भुतम् ॥ १३२ ॥
सर्वानुयोगानुज्ञां च प्रददुर्गुरवः शुभे । लग्ने सर्वार्हतां ‡तेजस्तत्त्वं तत्र न्यधुर्मुदा ॥ १३३ ॥
§७. गुरौ प्रायाद् दिवं प्राप्ते वज्रस्वामिप्रभुर्ययौ । पुरं **पाटलिपुत्रा**ख्यमुद्याने समवासरत् ॥ १३४ ॥
अन्यदा स कुरूपः सन् धर्मं व्याख्यानयद् विभुः । गुणानुरूपं नो रूपमिति तत्र जनोऽवदत् ॥ १३५ ॥
अन्येद्युश्चारुरूपेण धर्माख्याने कृते सति । पुरक्षोभभयान् सूरिः कुरूपोऽभूज्जनोऽब्रवीत् ॥ १३६ ॥
प्रागेव तद्गुणग्रामगानात् साध्वीभ्य आदृता । **धन**स्य श्रेष्ठिनः कन्या **रुक्मिण्य**त्रान्वरज्यत ॥ १३७ ॥
बभाषे जनकं स्वीयं सत्यं मद्भाषितं शृणु । श्रीमद्वज्राय मां यच्छ शरणं मेऽन्यथाऽनलः ॥ १३८ ॥
तदाग्रहात् ततः कोटिशतसंख्यधनैर्युताम् । सुतामादाय निर्ग्रन्थनाथाभ्यर्णे ययौ च सः ॥ १३९ ॥
व्यजिज्ञपच्च नाथं त्वां नाथते मे सुता ह्यसौ । रूपयौवनसम्पन्ना तदेषा प्रतिगृह्यताम् ॥ १४० ॥
यथेच्छदान-भोगाभ्यामधिकं जीविताविधि[6] । द्रविणं गृह्यतामेतत् पादौ प्रक्षालयामि ते ॥ १४१ ॥
अथ श्री**वज्र** आह स्म सरलस्त्वं वणिग्वरः । बद्धुमिच्छसि दूरस्थान् स्वयं बद्धः परानपि ॥ १४२ ॥
रेणुना रत्नराशिं त्वं कल्पवृक्षं तृणेन च । गर्त्ताकोलेन कुम्भीन्द्रं वायसेन सितच्छदम् ॥ १४३ ॥
सौधं निषादगेहेन क्षारनीरेण चामृतम् । कुद्रव्यविषयास्वादात् तपो मे संजिहीर्षसि ॥ १४४ ॥—युग्मम् ।
विषयाः कंबलोल्लासं दधत्यविकटोदयाः । सर्वं धनं [7]महाभोगैरन्यूनं चारकोपमम् ॥ १४५ ॥
एषा[8] मय्यनुरक्ता चेच्छायावदनुगामिनी । [9]मयाऽऽदृतं व्रतं धत्तां ज्ञानदर्शनसंयुतम् ॥ १४६ ॥
श्रुत्वेति प्रतिबुद्धा[10] साऽभिलापगरले हृते[11] । गृहीत्वा संयमं संयमिनीपार्श्वमशिश्रयत्[12] ॥ १४७ ॥

---

1 B संनिवेशा । 2 B वेष्टिका । 3 A व्यधात्; C ऽत्यगात् । 4 A C प्राशुका° । * B 'शास्त्रनूं तत्त्व' इति B टि० । † 'विचक्षणपणूं' इति B टि० । 5 A गुरुः श्वः । ‡ 'सूरिमन्त्र दीधु' इति B टि० । 6 B °विधि । 7 B महाभागै° । 8 B एष । 9 N मया वृतं; C मया ब्रूतं । 10 B °बद्धा । 11 A हृदे । 12 C °श्रियत् ।

**महापरिज्ञाध्ययनाद् आचाराङ्गा**न्तरस्थितात् । श्रीवज्रेणोद्धृता विद्या तदा गगनगामिनी ॥ १४८ ॥

§८. अवृष्टेरन्यदा तत्राभूद् दुर्भिक्षमतिक्षयम्[1] । सचराचरजीवानां कुर्वद्दुर्वीतलेऽधिकम् ॥ १४९ ॥
सीदन् संघः प्रभोः पार्श्वमाययौ रक्ष रक्ष नः । वदन्निति ततो **वज्र**प्रभुस्तन्निदधे हृदि ॥ १५० ॥
पटं विस्तार्य तत्रोपवेश्य संघं तदा मुदा । विद्ययाऽऽकाशगामिन्याऽचलद् व्योम्ना सुपर्णवत् ॥ १५१ ॥
तत्र शय्यातरो दूरं गतस्तृणगवेषणे । अन्वागतो वदन् दीनः[2] सोऽपि न्यस्तारि सूरिणा ॥ १५२ ॥
आययौ सुस्थदेशस्थामचिरेण **महापुरीम्** । **बौद्धशासन**पक्षीयनृपलोकैरधिष्ठिताम् ॥ १५३ ॥
सुखं तिष्ठति संघे च सुभिक्षाद् राजसौस्थ्यतः । सर्वपर्वोत्तमं पर्वाऽऽययौ पर्युषणाभिधम् ॥ १५४ ॥
राजा च प्रत्यनीकत्वात्* कुसुमानि न्यषेधयत् । संघो व्यजिज्ञपद् वज्रं जिनार्चाचिन्तयार्दितः ॥ १५५ ॥
उत्पत्य तत आकाशे काशसंकाशकीर्तिभृत् । **माहेश्वर्या** उपर्यागान्नगर्याः कोविदार्यमा ॥ १५६ ॥
आरामस्थः पितुर्मित्रमारामिकगुणाग्रणीः । वज्रं [3]**बकुलसिंहा**ख्यो वीक्ष्य नत्वा च संजगौ ॥ १५७ ॥
किमप्यादिश मे नाथ ! कार्यं सूरिरतोऽवदत् । सुमनः सुमनोभिर्मे कार्यमार्य ! कुरुष्व तत् ॥ १५८ ॥
पूज्यैर्व्याघृत्तिवेलायां ग्राह्याणीति निशम्य सः । ययौ देव्याः श्रियः पार्श्वे तं क्षुद्र**हिमवद्**गिरिम्[4] ॥ १५९ ॥
धर्मलाभाशिषाऽऽनन्द्य तां देवीं कार्यमादिशत् । ददौ सहस्रपत्रं सा देवार्चार्थं करस्थितम् ॥ १६० ॥
तदादाय प्रभुर्वज्रः पितृमित्रस्य सन्निधौ । आययौ विंशतिर्लक्षाः पुष्पाणां तेन ढौकिताः ॥ १६१ ॥
विमाने[5] वैक्रिये [6]ताश्चावस्थाप्यागान्निजे† पुरे । जृम्भकैः कृतसङ्गीतोत्सवे गगनमण्डले ॥ १६२ ॥
ध्वनत्सु देवतूर्येषु शब्दाद्वैते विजृम्भिते । तं तदूर्ध्वं समायान्तं दृष्ट्वा **बौद्धा**श्चमत्कृताः ॥ १६३ ॥
ऊचुर्धर्मस्य माहात्म्यमहो नः शासने सुराः । आयान्ति पश्यतां तेषां ते ययुर्जिनमन्दिरे ॥ १६४ ॥
श्राद्धसंघः प्रमुदितः पूजां कृत्वा जिनेशितुः । तत्र धर्मदिने धर्ममश्रौषीद् **वज्र**सद्गुरोः ॥ १६५ ॥
प्रातिहार्येण चानेन राजा तुष्टोऽभ्युपागमत् । प्रत्यबोधि च वज्रेण बौद्धाश्चासन्नधोमुखाः ॥ १६६ ॥

§९. विहरन्नन्यदा स्वामी प्रययौ **दक्षिणापथम्** । कुत्रचिच्छुद्धभूभागोद्यानेऽसौ समवासरत् ॥ १६७ ॥
‡श्लेष्मरोगापनोदायानाययद् विश्वभेषजम् । उपयुक्तावशेषं¶ च श्रवणेऽधारयत् ततः ॥ १६८ ॥
प्रत्युपेक्षणकाले‖ तत् तत्रस्थं चापराह्णिके । मुखवस्त्रिकया [7]स्रस्यत् कर्णयोः प्रतिलेखने ॥ १६९ ॥
दध्यावायुरहो ! क्षीणं[8] विस्मृतिर्यन्ममोदिता । पुनर्दुर्भिक्षमाप्तं च [9]प्रागुक्तादधिकं ततः ॥ १७० ॥
**वज्रसेन**स्तदादिश्य[10] वंशार्थं **वज्रसूरि**भिः । प्रहितः स शनैः प्रायात् **कुंकुणान्** वित्तवक्षणान्[11] ॥ १७१ ॥
अलब्धभिक्षान् दुर्भिक्षाद् विद्यापिण्डेन भोजितान् । साधूनाह च[12] भोज्योऽयं नित्यं द्वादशवत्सरीम् ॥ १७२ ॥
[13]प्राह्यं [14]वानशनं ते च श्रुत्वा तत् प्रायमाविशन् । श्रीवज्रः कुत्रचिच्छैले साधुभिः सहितो ययौ ॥ १७३ ॥
मार्गे गच्छद्भिरेकत्र ग्रामे प्रालम्भि[15] सूरिभिः । शिष्य एकः स तज्ज्ञात्वा वैराग्यं परमं दधौ ॥ १७४ ॥
दध्यौ च प्रोज्झ्य मामेते जग्मुर्जीवत्वसाविति । निःसत्त्वोऽहं कथं दृष्टः प्रभुं नानुव्रजामि तत् ॥ १७५ ॥
ध्यात्वेति तप्तपाषाणे पादपोपगमं व्यधात् । व्यलीयत मधूच्छिष्टमिव स [16]त्वरितस्तदा ॥ १७६ ॥
तद्विपत्तौ महे देवैः क्रियमाणे मुनीश्वरः । यतीनां पुरतोऽवादीच्छिशोः सत्त्वमिदं महत् ॥ १७७ ॥
तच्छ्रुत्वा मुनयः सर्वे परं वैराग्यमादधुः । प्रशान्तविग्रहास्तस्थुः स्थण्डिलेषु पृथक् पृथक् ॥ १७८ ॥
प्रत्यनीका सुरी तत्रोपसर्गायोपतस्थुषी । निशीथे दिवसं कृत्वा दधि तेषामढौकयत् ॥ १७९ ॥

---

1 B °मितिक्षयं । 2 A दीनं । * 'दर्शनना अभक्त पणातु' इति B टि० । 3 N वज्रं च कुल° । 4 A B °गिर । 5 N विमान° । 6 N तांश्चा° । † 'देवतानइ भलावीनइ' इति B टि० । ‡ 'रोग छेदनात्' इति B टि० । ¶ 'वावरवानी वेलाइं' इति B टि० । ‖ 'पडिलेहण वेलाइं' इति B टि० । 7 A भ्रस्यत्; C भ्रस्यत् । 8 B क्षणं । 9 A प्रागुप्ता° । 10 N तथादिश्यं । 11 A चित्तविक्षणान्; C वित्तवच्चरान् । 12 'च' नास्ति B । 13 C प्रामं । 14 N चान° । 15 B प्रालंभ° । 16 A सत्वरत° ।

विज्ञायाप्रीतिकं तत्रान्यत्र शृङ्गेऽथ ते ययुः । मृत्युजीवितयोर्येऽनाशंसास्तेषां सुराः किमु ॥ १८० ॥
यथायोगं च ते प्राणान् परित्यज्य सुरालयम् । श्रीवज्रोऽपि जगाम द्यामध्यामध्यानवैभवः[1] ॥ १८१ ॥
शक्रस्तत्राययौ पूर्वभवस्नेहेन तन्मयम् । ज्ञात्वा चतुर्दिशं स्वीयरथमावर्त्तताथ[2] सः ॥ १८२ ॥
गहनानि तरूणां च तत्रोन्मूल्य समां भुवम् । कृत्वा तत्र क्षणं तस्थौ सुपर्वश्रेणिसंभृतः ॥ १८३ ॥
ततःप्रभृति विख्यातो **रथावर्त्ता**ख्यया गिरिः । असावचलतां याति ख्यातिर्या गुरुभिः कृता ॥ १८४ ॥
§ १०. **वज्रसेन**श्च **सोपारं** नाम पत्तनमभ्यगात्[3] । **जिनदत्त**प्रियाऽस्त्यत्रे**श्वरी**त्याख्या चतुःसुता ॥ १८५ ॥
अक्षामगुरुशिक्षाढ्यः स तस्या मन्दिरे ययौ । चिन्तामणिमिवायान्तं दृष्ट्वा तं हर्षमाप सा ॥ १८६ ॥
प्राहाथ साहसं साधो! ऽस्माभिरद्य विचिन्तितम्[4] । स्थालीपाकोऽत्र लक्षेण पूरितः [5]कष्टकल्पनात् ॥ १८७ ॥
द्रव्यसंपदि सत्यामप्यन्नदौस्थ्यान्मृतिर्ध्रुवम् । ततोऽत्र पायसे पक्वे निक्षेप्यं विषमं विषम् ॥ १८८ ॥—युग्मम् ।
तदत्रावसरे पूज्यदर्शनं पुण्यतोऽभवत् । कृतार्था[6] सांप्रतं पारत्रिकं कार्यमिहादधे ॥ १८९ ॥
इत्याकर्ण्य मुनिः प्राह गुरुशिक्षाचमत्कृतः । धर्मशीले! शृणु श्रीमद्**वज्रस्वामि**निवेदितम् ॥ १९० ॥
स्थालीपाके किलैकत्र लक्षमूल्ये[7] समीक्षिते । सुभिक्षं भावि सविषं पाकं मा कुरु तद्वृथा ॥ १९१ ॥
सापि प्राह प्रसादं नः कृत्वैतत् प्रतिगृह्यताम् । इत्युक्त्वा पात्रपूरेण प्रत्यलाभि तया मुनिः ॥ १९२ ॥
एवं जाते [8]च सन्ध्यायां वहित्राणि समाययुः । प्रशस्यशस्यपूर्णानि जलदेशान्तराध्वना ॥ १९३ ॥
सुभिक्षं तत्क्षणं जज्ञे ततः सा सपरिच्छदा । अचिन्तयदहो! मृत्युरभविष्यदरीतितः ॥ १९४ ॥
जीवितव्यफलं किं न गृह्यते संयमग्रहात् । **वज्रसेन**मुनेः पार्श्वे [9]जैनबीजस्य सद्गुरोः ॥ १९५ ॥
ध्यात्वेति सा सपुत्राऽथ[10] व्रतं जग्राह साग्रहा[11] । **नागेन्द्रो निर्वृतिश्चन्द्रः** श्रीमान् **विद्याधर**स्तथा ॥ १९६ ॥
अभूवंस्ते किञ्चिदूनदशपूर्वविदस्ततः । चत्वारोऽपि जिनाधीशमतोद्धारधुरंधराः ॥ १९७ ॥
अद्यापि गच्छास्तन्नाम्ना जयिनोऽवनिमण्डले । वर्तन्ते तत्र तीर्थे च मूर्तयोऽद्यापि सार्हणाः ॥ १९८ ॥

**इति श्रीमद्वज्रप्रभुचरितमेतद्विविषदामपि स्तुत्यं तत्त्वं किमपि जिननाथोपनिषदाम् ।**
**श्रियां हेतुः सेतुर्भवजलधिनिस्तारविधये प्रदेयादानन्दं जयतु शशिसूर्यावधि यथा ॥ १९९ ॥**

**श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः [12]श्रीप्रभा-**
**चन्द्रः सूरिरनेन चेतसि कृते श्रीराम-लक्ष्मीभुवा ।**
**श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीवज्रवृत्ताभिधः**
**श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गोऽगमत् प्राक्तनः ॥ २०० ॥**

**मूर्त्तिः साष्टापदश्रीर्विमलगिरिरतिस्तारणः श्रीभरोयम्**
**दुःखार्त्तानामपापा किल मतिरसतां स्तम्भनश्च प्रभावः ।**
**चेतः स्यादुज्जयन्तस्थितिकृदनुपमं चारुरूपं यशस्तत्**
**श्रीमत्प्रद्युम्नसूरे! ऽर्बुदगुणविजयी तीर्थरूपस्त्वमेव ॥ १ ॥**

**॥ *इति वज्रस्वामिप्रबंधः ॥**

॥ ग्रंथाग्रं २०७ अक्षर ११ ॥

---

1 A द्यामध्यामध्यामवै°; C N द्यामध्यानवै° । 2 B °तावसः । 3 B °मत्यगात् । 4 B चिन्तितं । 5 B काष्ट°; C नास्ति । 6 N कृतार्थाः । 7 N मूले । 8 N जातेऽथ । 9 N जिन° । 10 A B सपुत्रापि । 11 A साग्रहात् । 12 B प्रभ° ।
* A C N आदर्शेषु नोपलभ्यत एषा पंक्तिः ।

# २. आर्यरक्षितचरितम् ।

§ १. अव्यादव्याहतं[1] भव्यान् स श्रीमानार्यरक्षितः । समूलघातमाहन्ति धर्मो यस्यान्तरद्विषः[2] ॥ १ ॥
पीयूषमिव यद्वृत्तमनिर्वाच्यं बुधैरपि । वैचक्षण्यविलिप्सी[3] मे मतिः [4]किं नु विमृक्ष्यति ॥ २ ॥
पुनस्तथापि वातापितापनस्य तमोऽम्बुधेः । तस्य वृत्तं[5] स्मृतौ वाचं प्रणये प्रणयावधिः ॥ ३ ॥
सदानन्दनबाहुल्यपराभूतसुरपुरम् । पुरं **दशपुरं** नामा**वन्तिका**न्तैकसप्तकी[6] ॥ ४ ॥
**उदायनो** निशानाथ इव नव्योऽकलङ्कभूः । अगम्यस्तमसोऽक्षीणकलोऽभूत्तत्र भूपतिः ॥ ५ ॥
सौवस्तिकपदप्राप्तप्रतिष्ठोऽतिविशिष्टधीः । वर्णज्येष्ठः कुलश्रेष्ठः क्रियानिष्ठः कलानिधिः ॥ ६ ॥
आसीच्छ्री**सोमदेवा**ख्यः शमितेष्वमितेष्वपि । यन्मन्त्रैः शत्रुवर्गेषु शृङ्गाराय चमूचयः ॥ ७ ॥–युग्मम् ।
**रुद्रसोमा**भिधाऽस्याभूत् प्रिया प्रियवचःक्रमैः । संपूर्णदानैरर्थिभ्यः कृतदारिद्र्यविद्रवा ॥ ८ ॥
सूर्याश्वयोरिव* यमौ तयोः पुत्रौ बभूवतुः । **आर्यरक्षित** इत्याद्यो द्वितीयः[7] **फल्गुरक्षितः** ॥ ९ ॥
पुरोहितेन तौ तेन साङ्गान् वेदान् प्रपाठितौ । आत्मजानां विनीतानां स्वामृद्धिं निह्नुते† हि कः ॥ १० ॥
अतृप्तः शास्त्रपीयूषे विद्वानप्यार्यरक्षितः । पिपठीस्तद्विशेषं स प्रययौ **पाटलीपुरम्** ॥ ११ ॥
अचिरेणापि कालेन स्फुरत्कुण्डलिनीबलः । वेदोपनिषदं गोप्यामप्यध्यैष्ट प्रकृष्टधीः ॥ १२ ॥
अथोपाध्यायमापृच्छ्य व्यावृत्तः‡ स्वभुवं प्रति । आरूढवद् ययौ सोऽथाययौ परिसरे पुरः ॥ १३ ॥
ज्ञातोदन्तेन राज्ञा स पितृविज्ञपनादथ । प्रावेशि[8] गजमारुह्य संमुखागामिना स्वयम् ॥ १४ ॥
प्रधानकुलवृद्धाभ्यः सुलब्धाशीर्गृहे गृहे । अपराह्णे निजावासप्राङ्गणं प्रागमत्ततः ॥ १५ ॥
§ २. रुद्रसोमा पुनस्तत्र श्रमणोपासिका तदा । विज्ञातजीवाजीवादिनवतत्त्वार्थविस्तरा[9] ॥ १६ ॥
कृतसामायिका पुत्रमुत्कण्ठाकुलितं चिरात् । इलातलमिलन्मौलिं वीक्ष्यापि प्रणतं भृशम् ॥ १७ ॥
अवर्द्धयत नाशीर्भिः सामायिकभिदाभिया ।
[10]अतिखिन्नस्ततः प्राह स धीमा**नार्यरक्षितः** ॥ १८ ॥–त्रिभिर्विशेषकम् ।
धिग् ! ममाधीतशास्त्रौघं बह्वप्यवकरप्रभम् । येन मे जननी नैव[11] परितोषमवापिता ॥ १९ ॥
ध्यात्वेत्युवाच किं मातः ! परितोषो न तेऽभवत् । साह तुष्याम्यहं केन पाठैस्तैर्दुर्गतिप्रदैः ॥ २० ॥
स प्राह चाविलम्बेन तदलं मे समादिश । येनाधीतेन ते तुष्टिः कार्यैरन्यैस्तु किं मम ॥ २१ ॥
रोमाञ्चकञ्चुकोद्भेदमेदुराथ जनन्यपि । प्रधानं मन्यमाना स्वं पुत्रिणीनामवोचत ॥ २२ ॥
अधीष्व §विष्वगुन्निद्राभद्रविद्रावणक्षमम् । **दृष्टिवादं** जिनोपज्ञमन्यै[12]रज्ञातसञ्ज्ञकम् ॥ २३ ॥
तमाकर्ण्य सुतो दध्यौ तावन्नामापि सुन्दरम् । दृष्टिवाद इदानीं तदवश्यं कार्यमेव मे ॥ २४ ॥
समस्ततीर्थमूर्द्धन्ये मातर्[13] ! मम समादिश । अध्यापकं तदभ्यासे यथाभ्यस्यामि तं द्रुतम् ॥ २५ ॥
उवाच [14]**रुद्रसोमा**पि वत्स ! ते विनयावने ! । अवतारणके यामि सावधानस्ततः शृणु ॥ २६ ॥
जैनर्षयो महासत्त्वास्त्यक्ताब्रह्मपरिग्रहाः । परमार्थस्थितस्वान्ताः सज्ज्ञानकुलभूमयः ॥ २७ ॥
अस्य ग्रन्थस्य वेत्तारस्तेऽधुना स्वेक्षुवाटके ।
सन्ति **तोसलिपुत्रा**ख्याः सूरयो ज्ञानभूरयः ॥ २८ ॥–त्रिभिर्विशेषकम् ।

---

1 'निरंतरं' इति B टि० । 2 A द्विपः । 3 A विलक्षी; C N वलिसी । 4 A मतिः न वि°; C मतिः किं न वि° । 5 N वृत्तं । 6 N °कान्तिक स° । * 'चंद्रसूर्य' इति B टि० । 7 B C द्वितीय° । † 'न सीषवइ' इति B टि० । ‡ 'पाछु वलिउ' इति B टि० । 8 B प्रावेश । 9 B विज्ञाततत्त्वा जीवादिनवभेदातिविस्तरा । 10 B इति° । 11 B देव । § 'मोहनिद्रा' इति B टि० । 12 A °मशेर° । 13 C N मम मातः । 14 B सोमरुद्रा ।

पठाशठमते ! तेषां पार्श्वे ग्रन्थमिमं वरम् । यथा त्वदीयवृत्तेन कुक्षिर्मे शीतलीभवेत् ॥ २९ ॥
श्रुत्वेत्यहमुखे यामीत्युक्त्वा तद्ध्यानतत्परः । निशां निन्ये विनिद्रः सन् निरगाच्च बहिस्ततः ॥ ३० ॥
अर्द्धमार्गे पितुर्मित्रं संमुखोऽस्य द्विजोऽभवत् । इक्षोर्नवलताः सार्द्धाः स्कन्धे तद्धेतवे वहन् ॥ ३१ ॥
तेनाभिवादयन्नालिलिङ्गे प्रीत्याऽऽर्यरक्षितः । व्यावृत्त्यागच्छ गेहे त्वमित्युक्तश्चायमब्रवीत् ॥ ३२ ॥
मात्रादेशेन यात्वाऽहं समायास्यामि शीघ्रतः । पूज्यैर्गन्तव्यमावासे निजबन्धुप्रसत्तये ॥ ३३ ॥
इत्युक्त्वा सञ्चरन्भिक्षुवाटाभिमुखमादृतः । दध्यौ मनस्यहो सम्यगस्माद् दृढनिमित्ततः ॥ ३४ ॥
अध्याया वा परिच्छेदा नव सार्द्धा मया ध्रुवम् । अस्य ग्रन्थस्य लप्स्यन्ते नाधिकं निश्चितं ह्यदः ॥ ३५ ॥
प्रातःसन्ध्याक्षणे तत्र मुनिः स्वाध्यायडम्बरैः । शब्दाद्वैतमयं शृण्वन्नाश्रयद्वारमाश्रयत् ॥ ३६ ॥
किंकर्तव्यजड[1]स्तत्राजानन् जैनपरिश्रम(य?)म् । ढड्ढरश्रावकं सूरिवन्दकं प्रेक्षदागतम् ॥ ३७ ॥
तत्पृष्ठस्थो ययौ सोऽपि विदधे वन्दनादिकम् । तद्वदेव महाप्राज्ञस्तादृशां किं हि दुष्करम् ॥ ३८ ॥
सर्वसाधुप्रणामानन्तरं श्रावकवन्दना[2] । अशिक्षितत्वान्नाकार्यनाख्यातं बुध्यते कियत् ॥ ३९ ॥
चिह्नेनानेन विज्ञाय नवं तं सूरयस्तदा । कुतो धर्मस्य संप्राप्तिरिति पप्रच्छुरादरात् ॥ ४० ॥
ढड्ढरं दर्शयन्नस्मादेव धार्मिकपुङ्गवात् । इत्यूचिवांसमेकश्च मुनिर्लक्षयति स्म तम् ॥ ४१ ॥
आह कल्यदिने राज्ञा प्रावेश्येष महोत्सवात् । पुरोहितसुतः[3] श्राद्धारुद्रसोमाङ्गसंभवः ॥ ४२ ॥
चतुर्वेदी समस्ताद्यगुणस्थानभृतां वरः । असंभाव्यागमः कस्मादत्राऽऽयाज्ज्ञायते न तत् ॥ ४३ ॥
अथार्यरक्षितः प्राह मातुरुक्तमनातुरः । आकर्ण्येति प्रभुर्दध्यौ तच्चरित्रचमत्कृतः ॥ ४४ ॥
कुलीन आस्तिको विप्रः कुलानुचितमार्दवः । ‘संभाव्यसुकृताचारो जैनधर्मोचितो ह्ययम् ॥ ४५ ॥
उपयोगं श्रुते दत्वा पूर्वपाठोचितं च तम् । प्रभावकं भाविनं च श्रीमद्वज्रादनन्तरम् ॥ ४६ ॥
ध्यात्वा तं सूरयोऽवोचन् जैनप्रव्रज्यया विना ।
न दीयते दृष्टिवादो विधिः सर्वत्र सुन्दरः ॥ ४७ ॥–त्रिभिर्विशेषकम् ।
स प्राह प्राच्यसंस्कारा ममासन् न च[5] केशिनः । ततो जैनेन्द्रसंस्कारैरलंकुरुत मे वपुः ॥ ४८ ॥
परं किंचिच्च विज्ञप्यमास्ते तदवधार्यताम् । मिथ्यामोहेन लोको हि सर्वो मय्यनुरागवान् ॥ ४९ ॥
राजापि ज्ञातवृत्तान्तो दीक्षामुत्सर्जयेदपि । अबुधस्वजनानां च ममकारो हि दुस्त्यजः ॥ ५० ॥
*शावरूपे निजे तस्मात् प्रसद्य मयि दीक्षिते ।
अन्यदेशे विहर्त्तव्यं मा भूच्छासनलाघवम् ॥ ५१ ॥–त्रिभिर्विशेषकम् ।
ओमित्युक्त्वा गुरुस्तस्य सार्वज्ञपरमाक्षरैः । अभिमन्त्र्याथ तन्मूर्ध्नि वासानक्षेपतोऽक्षिपत्[6] ॥ ५२ ॥
सामायिकव्रतोच्चारपूर्वं पूर्वाभिलाषिणः । केशान् क्लेशानिवाशेपानपनिन्ये मुनीश्वरः ॥ ५३ ॥
ईशानकोणे[7] गार्हस्थ्यनेपथ्यं परिहाप्य[8] सः । परिधाप्य सिते वस्त्रे यतिवेषेण योजितः ॥ ५४ ॥
विहारं तत्क्षणात् ते च विदधुर्नगरान्तरे । व्यधायि[9] [10]पुरतस्त्वार्यरक्षितो नवदीक्षितः ॥ ५५ ॥
§ ३. अध्यापितः समूलाङ्गोपाङ्गादिग्रन्थमण्डलम् । तत्तत्तपस्यया पूर्वाणि च कान्यपि सूरिभिः ॥ ५६ ॥
अधीतपूर्वी शास्त्राणि बुद्धपूर्वी हिताहितम् । विनीतपूर्वी स्वाचारं ज्ञातपूर्वी व्रतान्यभूत् † ॥ ५७ ॥
गुरवः शेषपूर्वाणां पाठायोज्जयिनीपुरि । तमार्यरक्षितं प्रैषुः श्रीवज्रस्वामिनोऽन्तिके ॥५८॥–युग्मम् ।

1 A °जल° । 2 C N बन्दनं । 3 C पुरोहितसुतश्राद्ध° । 4 C संभवो । 5 A C नव । * ‘शिष्यरूप’ इति B टि० । 6 B वासानिक्षेपतोक्षपत् । 7 B °कूणे । 8 N परिहाय । 9 B विधायि; N विधाय । 10 C पुरस्ता° । † नोपलभ्यते पद्यमिदं C आदर्शे ।

गीतार्थैर्मुनिभिः सत्रा तत्रागादार्य**रक्षितः** । श्री**भद्रगुप्त**सूरीणामाश्रये[1] प्राविशत् तदा ॥ ५९ ॥
आश्लिष्य स्नेहतः प्राहुः प्रत्यभिज्ञाय ते च तम् । **आर्यरक्षित !** कच्चित्ते[2] भद्रं पूर्वाभिलाषुक[3] ! ॥ ६० ॥
*अभिसन्धिर्मम [4]प्रायोपवेशनविधौ भवान् । निर्यामो भव तद्वेला कुलीनानामियं यतः ॥ ६१ ॥
तथेति प्रतिपद्याथ तथा शुश्रूषत प्रभुम् । यथा जानाति नैवासावुदयास्तमने रवेः ॥ ६२ ॥
समाधौ परमे लीनोऽन्यदा प्रोवाच हर्षतः । क्षुत्तृट्क्रमं न जानेऽहं वत्स ! त्वद्वरिवस्यया ॥ ६३ ॥
इहलोकेऽपि देवत्वं संप्राप्त इव तद्रसात् । गोप्यं किञ्चिच्छिक्षयिष्ये त्वां ततोऽवहितः शृणु ॥ ६४ ॥
श्री**वज्रस्वामि**पादान्ते त्वया पिपठिषाभृता । भोक्तव्यं शयनीयं च नित्यं पृथगुपाश्रये ॥ ६५ ॥
यतस्तदीयमण्डल्यामेकक्कत्वोऽपि योऽभुनक् । रात्रौ सुप्तश्च पार्श्वे यत् तस्य तेन सहात्ययः ॥ ६६ ॥
प्रभावको भवानर्हच्छासनाम्भोधिकौस्तुभः ।
संघाधारश्च भावी तदुपदेशं करोतु मे ॥ ६७ ॥–त्रिभिर्विशेषकम् ।
इच्छामीति प्रभोरंह्री शिरसि प्रणिधाय सः । ओमिति प्रतिपेदेऽतिविनीतानामियं स्थितिः ॥ ६८ ॥
§४. अथ श्री**भद्रगुप्ते**ऽस्मिन् कालधर्ममुपागते । **सौनन्देय**प्रभोः[5] पार्श्वे प्रचचालार्यरक्षितः ॥ ६९ ॥
तदा च ददृशे स्वप्नः श्रीवज्रेणाप्यजल्प्यत । विनेयाग्रेऽद्य संपूर्णः पायसेन पतद्ग्रहः ॥ ७० ॥
पारितोऽतिथिनाऽऽगत्य किञ्चिच्छेपमवास्थितम् । तदेतस्य विचारोऽसौ चित्तान्तर्घटते मम ॥७१॥–युग्मम् ।
अद्य प्राज्ञोऽतिथिः कश्चिदागत्य मम संनिधौ । श्रुतं ग्रहीष्यतेऽशेषमल्पं स्थास्यति किंचन ॥ ७२ ॥
एवं वदत एवास्य समागादार्यरक्षितः । दृष्टो हि महता स्वप्नोऽवश्यं सद्यः फलेग्रहिः ॥ ७३ ॥
अपूर्वमतिथिं दृष्ट्वाऽभ्युत्थाय स्वागतोन्नतः । नमस्कुर्वन्तमेनं च स प्रभुर्व्याहरत् तदा ॥ ७४ ॥
कौतस्कुतोऽयं भावत्क आगमः ?, स ततोऽवदत् । श्रीम**त्तोसलिपुत्रा**णामन्तिकादागमं प्रभो[6] ! ॥ ७५ ॥
श्रुत्वेति स प्रभुः प्राह–किं भवानार्यरक्षितः । पूर्वशेषस्य पाठार्थमस्मत्पार्श्वे इहाययौ ? ॥ ७६ ॥
तवोपकरणं कुत्र पात्रसंस्तारकादिकम् । तदानयातिथिर्नस्त्वमद्य मा गोचरं चरेः ॥ ७७ ॥
[7]भुक्त्वाऽत्रैव ततोऽध्यायं[8] प्रारभस्वेति तद्गिरः[9] । श्रुत्वा स प्राह चाभ्यर्थि मया पृथगुपाश्रयः ॥ ७८ ॥
स्वापं भुक्तिं च तत्रैव कृत्वाध्येष्ये[10] तवान्तिके । श्रीवज्रः प्राह पार्थक्यस्थितैः कथमधीयते ॥ ७९ ॥
अथार्यरक्षितोऽवोचद् **भद्रगुप्त**गुरोर्वचः । इदमित्युदिते वज्र उपयोगं ददौ श्रुते ॥ ८० ॥
भुक्तौ स्वापे मया सार्धं दिष्टान्तोऽपि भवेत् सह । ततः समुचितं प्राहुः प्रभवस्तद्भवत्विदम् ॥ ८१ ॥
एनमध्यापयामासुस्ततः श्रीवज्रसूरयः । अर्द्धं दशमपूर्वस्य प्रारेभे घोषितुं च सः ॥ ८२ ॥
अस्मिन् ग्रन्थे दुरध्येया भङ्गकैर्दुर्गमैर्गमैः । पर्यायैर्दुर्वचैः शब्दैः सदृशैर्जविकावलिः ॥ ८३ ॥
चतुर्विंशतिसंख्यानि जविकानि च सोऽपठत् ।
अधीयानस्य चायासोऽभवत् तस्याद्भुतः किल ॥ ८४ ॥–युग्मम् ।
§५. ततश्च[11] **रुद्रसोमा**पि तस्य माता व्यचिन्तयत् । अहो ममाविमर्शोद्दु[12]रनुतापात् फलेग्रहिः ॥ ८५ ॥
हृदयानन्दनो धीमान् नन्दनः शीलचन्दनः । आर्यरक्षितसंकाशो मयाऽप्रैष्यल्पमेधसा ॥ ८६ ॥
उद्योतं चिन्तयन्त्या मे तमिस्रं जातमद्भुतम् । तस्मादाहूतये तस्य प्रहेयः **फल्गुरक्षितः** ॥ ८७ ॥
**सोमदेव**स्तया पृष्टः श्रोत्रियः सरलोऽवदत् । त्वं यत्कृतप्रमाणा मे ततो यद् भाति[13] तत् कुरु ॥ ८८ ॥

---

1 B °माश्रिये । 2 C कच्चित्त्वं भद्र पूर्वाभिलाषुक । 3 B N °लाषुकः । * 'प्रांतकाल ढूकड्ड छइ' इति B टि° । 4 B °प्रवेशन° । 5 B सौनन्देयः प्रभुः । 6 A प्रभोः । 7 C भुंक्ष्वा° 8 N ऽध्यायमारभस्व°; A प्रारभस्व° । 9 C मद्गिरः । 10 B N °ध्येक्षे । 11 N इतश्च । 12 N °विमर्शो दुरनु° । 13 B N यद्भावि ।

प्रणिधाय ततः सापि द्वैतीयीकं[1] निजाङ्गजम् । वत्स ! गच्छ निजभ्रातुर्मम वाक्यं निवेदय ॥ ८९ ॥
जनन्या बन्धुसंसर्गे मोहं च त्याजितो भवान् । परं वत्सलताबुद्धिर्जिनेन्द्रैरपि मानिता ॥ ९० ॥
स्वमातुर्गर्भवासेऽपि **श्रीवीरो** भक्तिभूर्यतः । शीघ्रतस्तत् समागच्छ निजमास्यं प्रदर्शय ॥ ९१ ॥–युग्मम् ।
तथा ममाप्यसौ मार्गो भवता यः समाश्रितः । तदनु त्वत्पितुः पुत्र-पुत्रीवर्गेऽप्यसौ पुनः ॥ ९२ ॥
यदि न स्नेहबुद्धिः स्यात् ततोऽप्युपकृतौ मुदा । एककृत्वः समागच्छ कृतार्थत्वं प्रयच्छ मे ॥ ९३ ॥–युग्मम् ।
आख्यायास्त्वमिदं गच्छ पथि देहे च यत्नवान् । त्वदीयस्य शरीरस्य वयं भाग्योपजीविनः ॥ ९४ ॥
इत्याकर्ण्य वचो मातुर्नम्राङ्गः **फल्गुरक्षितः** ।
गत्वोपबन्धु कथयांचकार जननीवचः ॥ ९५ ॥–षड्भिः कुलकम् ।
क ईदृशो[2] भवत्तुल्यः सोदराम्बासु वत्सलः । भवत्तातस्तु नहि मामाक्रोशेन् कुललज्जया ॥ ९६ ॥
[3]अतिस्वच्छं तदागच्छ वत्स ! स्वं दर्शयास्यकम् । त्वद्दर्शनामृतैस्तृप्ता वितृष्णा संभवामि यत् ॥ ९७ ॥
**रुद्रसोमा**ऽऽत्मनो माता संदिदेशेति मद्गिरा ।
तस्मात् प्रसादमासाद्य गम्यतां मातृवत्सल ! ॥ ९८ ॥–त्रिभिर्विशेषकम् ।
बन्धोः श्रुत्वा वचः प्राह वैराग्यादार्यरक्षितः । फल्गुरक्षित ! को मोहः संसारे शाश्वतेतरे ॥ ९९ ॥
अस्तु वाध्ययनस्यान्तरायं कः कुरुते सुधीः । फल्गुना वल्गुना[4] कोऽपि परित्यक्तुं समीहते ॥ १०० ॥
भवांश्चेन्मयि सस्नेहस्तिष्ठतु ममान्तिकम् । दीक्षां विना न च स्थातुं शक्यं तत् तां गृहाण भोः ! ॥१०१॥
स तथेति वदंस्तेन तत्क्षणं समदीक्ष्यत । श्रेयःकार्येषु को नाम विलम्बायोपतिष्ठते ॥ १०२ ॥
§६. जविकैर्घूर्णितो बाढं धीमानप्या**र्यरक्षितः** । श्रीमद्**वज्र**प्रभुं प्राह किमस्मादवशिष्यते ॥ १०३ ॥
अधीष्व पृच्छया किं ते इत्युक्तः[5] पठति स्म सः । कियत्यपि गते काले पुनः पप्रच्छ तद्गुरुम् ॥ १०४ ॥
ततः श्रीवज्र आचख्यौ सर्षपः पठितस्त्वया । मेरुरत्रावतिष्ठेत तन्ममैकं वचः शृणु ॥ १०५ ॥
काञ्जिकेन कथं क्षीरं कर्पूरं लवणेन च । कुङ्कुमं च कुसुंभेन जातरूपं च गुञ्जया ॥ १०६ ॥
उखया[6] वज्रखानिं च चन्दनं कनकद्रुणा । पूर्वाध्ययनमल्पेन स्वमोहेन[7] यदुज्झसि ॥ १०७ ॥
ततः पठ श्रुताम्भोधेर्मध्यं [8]प्राप्तफलं यथा । सज्ज्ञानशक्तिरत्नौघं लभसे लिप्सया विना ॥ १०८ ॥
इत्याकर्ण्य पठन्नुच्चैर्वासराणि कियन्त्यपि । अनुजेन पुनः प्रैरि स्वैरिण्याऽऽह्वानकृद्गिरा ॥ १०९ ॥
आपप्रच्छे पुनः सूरिमायासितः पुनर्दृढम् । सम्बन्धिसंगमे स्वामिन् ! प्रहिणूत्कण्ठितं जनम् ॥ ११० ॥
पाठाय पुनरायास्ये शीघ्रं तैः सह संगतः । इति श्रुत्वा श्रुते प्रादादुपयोगं पुनः प्रभुः ॥ १११ ॥
अज्ञासीत् पुनरायातो मिलिष्यति न मे पुनः । मदायुपस्तनीयस्त्वादि*यत्येवास्य योग्यता ॥ ११२ ॥
तथा दशमपूर्वं च मय्येव स्थास्यति ध्रुवम् । तत प्राह वत्स ! गच्छ त्वं मिथ्यादुःकृतमस्तु ते ॥ ११३ ॥
यदामुष्यायणो मेधानिधिस्त्वं नेदृशोऽपरः । ततोऽभूदादरोऽस्माकमध्यापनविधौ तव ॥ ११४ ॥
प्राप्तिरीदृक् क ते सन्तु पन्थानः शिवतातयः ।
श्रुत्वेत्यंह्री प्रभोर्नत्वा चचालात्मभुवं प्रति ॥ ११५ ॥–चतुर्भिः कुलकम् ।
अखण्डितप्रयाणैः स शुद्धसंयमयात्रया । सञ्चरन्नाययौ बन्धुसहितः **पाटलीपुरम्** ॥ ११६ ॥
श्रीम**त्तोसलिपुत्रा**णां मिलितः परया मुदा । पूर्वाणां नवके सार्द्धे संगृहीती गुणोदधिः ॥ ११७ ॥
§७. तं च सूरिपदे न्यस्य गुरवोऽगुः परं भवम् । अथार्यरक्षिताचार्यः प्रायाद् **दशपुरं** पुरम् ॥ ११८ ॥

---

1 B C द्वैतीयकं । 2 C N ईदृशो । 3 B इति । 4 B N वल्गुनो । 5 N इत्युक्त्वा । 6 B N उखया । 7 B समोहेन । 8 A N प्राप्तः फलं । * 'स्वल्पायु छइ' इति B टि० ।

अग्रेभूय निजावासमाययौ **फल्गुरक्षितः** । वर्द्धये वर्द्धये मातर् ! गुरुस्तत्सुत आगमत् ॥ ११९ ॥
आस्याय [1]न्युंछनेऽगां ते वचनाय बलिः क्रिये । आर्यरक्षितनामा यः कुत्र कुत्र स पुत्रकः[2] ॥ १२० ॥
अस्मि[3] पुण्यवतीदक्षा किं[4] यद् द्रक्ष्यामि तन्मुखम् । एवं वदन्त्या एवास्याः पुरोऽभूद**ार्यरक्षितः** ॥ १२१ ॥
जैनलिङ्गधरं तं चाऽऽप्रेक्ष्यमाणमथादरात् । रोमाञ्चकञ्चुकोद्भेदमेदुराभिगमाद्भुतम् ॥ १२२ ॥
श्रोत्रियः **सोमदेवो**ऽपि तत्रागात् संगमोत्सुकः । *दृढमाश्लिष्य च प्राह [5]स्वात्मजस्नेहमोहितः ॥ १२३ ॥
शीघ्रमागाः कथं वत्स ! त्वं प्रवेशोत्सवं विना । हुं ज्ञातं विरहार्त्तायाः स्वमातुर्मिलनोत्सुकः ॥ १२४ ॥
इदानीमपि गच्छ त्वं बाह्योद्याने यथा नृपम् । विज्ञप्य नगरोत्साहोत्सवपूर्वं प्रवेशये ॥ १२५ ॥
ततः श्रमणवेषं च परित्यज्य पुनर्गृहे । द्वितीयाश्रममव्यग्रः[6] पालयस्व [7]कृतालयः ॥ १२६ ॥
यायजूककुलोत्पन्ना†ऽनुरागस्था कनी मया । रूपयौवनसंपन्ना चिन्तिताऽग्रे तवोचिता ॥ १२७ ॥
श्रौतेन विधिना तां त्वं विवहस्व महोत्सवैः । [8]यथा त्वज्जननी कौतुकानां स्वादं लभेत च[9] ॥ १२८ ॥
द्रविणोपार्जने चिन्ता कापि कार्या त्वया [10]नहि । आसप्तमकुलापूर्णं नृपपूज्यस्य मे धनम् ॥ १२९ ॥
अङ्गीकृते गृहोद्धारे भवता भवतानवम् ।
दृष्टवन्तो[11] वयं दध्मो वानप्रस्थाश्रमे मनः[12] ॥ १३० ॥–अष्टभिः कुलकम् ।
अथात्मभूर्मुनिः प्राह तात ! त्वं मोहवातकी । वाहीक इव शास्त्राणां भारं वहसि दुर्धरम् ॥ १३१ ॥
भवे भवे पिता माता भ्राता जामिः प्रिया सुता । तिरश्चामपि जायन्ते हर्षस्तद्धेतुरत्र कः ॥ १३२ ॥
[13]राजप्रसादतः को हि गर्वो भृत्यतयार्जितात् । द्रव्ये हि पुनरास्था का बहूपद्रवविद्रुते ॥ १३३ ॥
दुष्प्रापं मर्त्यजन्मेदं रत्नवद् गृहमोहतः । नश्वरावकरप्रायाद् हारयेत[14] हि कः सुधीः ॥ १३४ ॥
तत् परीक्ष्य तमुत्सृज्य प्रव्रज्याऽऽप्ताऽऽर्हती मया । मुक्तान् न पुनरादास्ये भोगान् भोगीशभोगवत् ॥ १३५ ॥
दृष्टिवादोऽपि नो पूर्णः पठितस्तत् कथं पितः ! । अवतिष्ठेऽभ्युपगमः [15]सत्पुंसां हि दुस्त्यजः ॥ १३६ ॥
भवतां मयि चेन्मोहः सर्वाणि प्रव्रजन्तु तत् ।
भ्रमेणापि सिता भुक्ता पित्तोपद्रवहारिणी ॥ १३७ ॥–सप्तभिः कुलकम्
उवाच **सोमदेवो**ऽपि सांप्रतं मम सांप्रतम् । त्वदीयं स्वकुलीनं [16]वाऽऽचरितुं दुश्चरं तपः ॥ १३८ ॥
त्वन्माता न[17] पुनः पुत्री-जामातृ-शिशुपालनैः । मोहवीचिं भवाम्भोधिं कथं तरति मूढधीः ॥ १३९ ॥
§८. अथा**र्यरक्षितो** दध्यौ यदि मिथ्यात्वमन्दिरम् । तातः कथंचिद् बुध्येत शुद्ध्येत च तपोभरैः ॥ १४० ॥
तदम्बा दृढसम्यक्त्ववज्रवप्राकरावनिः । बुद्धैव यत्प्रभावान्मे मोक्षाध्वा प्रकटोऽभवत् ॥ १४१ ॥
**रुद्रसोमा**मथोवाच विचारय वचः पितुः । दुर्बोधां[18] मन्यते यस्त्वां [19]त्वं तु ज्ञानमहानिधिः[20] ॥ १४२ ॥
त्वदादेशाद् दृष्टिवादं पठतो मे भवोदधेः । निस्तितीर्षा स्थिता[21] चित्ते **श्रीवज्रः** प्रापि च प्रभुः ॥ १४३ ॥
श्री**सुनन्दा** कलौ धन्या या वज्रं सुषुवे सुतम् । त्वां ततोऽप्यधिकां मन्ये मातर्[22] ! गुणत एकतः ॥ १४४ ॥
ददे तयाऽऽर्जवात्[23] पूर्वं पुत्रो[24] रोदनखिन्नया । पितुर्मुनेः पुनश्चक्रे विवादस्तन्निमित्तकः ॥ १४५ ॥
श्रीम**त्तोसलिपुत्रा**णां पाठायार्पि त्वया [25]त्वहम् । उत्तितारयिषामन्तर्ध्यात्वा संसारनीरधेः ॥ १४६ ॥

---

1 N त्युंछने । 2 A पुत्रक । 3 C N अस्मिन् । 4 A किंचिद् । * C आदर्शे पतित एष श्लोकार्द्धः । 5 B स्वात्मजः । 6 C °मव्ययः । 7 C क्षतालयः । † 'भला कुलनी' इति B टि० । 8 A यया । 9 B वः । 10 N नहि त्वया । 11 A C इष्टवन्तो । 12 N मतम् । 13 B राजः । 14 N °प्रायाद्धारयेत्त हि । 15 N सत्यं । 16 N चाचरितं । 17 N तु । 18 N दुर्बोध्यां । 19 B C N स्वं । 20 B C N °निधिं । 21 A स्थिते । 22 B मातुर् । 23 'मुग्धपणातु' इति B टि० । 24 N पुत्र । 25 A त्वयाप्यहं ।

प्राप्तः[1] श्रीवज्रपादान्तमपुण्यैरतिदुर्लभम् । अधीतपूर्वपूर्वाङ्गः पुनरागां त्वदन्तिके ॥ १४७ ॥
सपरीवारया तस्मात् स्वकीयोपक्रमात् त्वया । व्रतान्महांगतः पारं प्राप्यं भवमरोर्ध्रुवम् ॥ १४८ ॥
पुरोहितप्रिया प्राह वदति स्म ऋजुर्द्विजः । आर्या व्यग्रा कुटुम्बस्य नैषा व्रतभरक्षमा ॥ १४९ ॥
शीघ्रं दीक्षस्व मां पूर्वं परिवारोऽपि यो मयि । [2]निबिडस्नेहभूः सोऽपि मामनु प्रव्रजिष्यति ॥ १५० ॥
अथार्यरक्षितस्तातमाहात्म्याया वचः श्रुतम् । इह लोके भवांस्तीर्थं तत् त्वदुक्तं करोम्यहम् ॥ १५१ ॥
उपतस्थे च दीक्षायामहंपूर्विकया तदा । श्रोत्रियस्य परीवारः स्नेहादेवेतरेतराम् ॥ १५२ ॥
अपनीय ततस्तेषां केशपालीमनालयः । सामायिकं ददौ यौगपद्येन प्रणिधानतः ॥ १५३ ॥
§९. वेषः स्थविरकल्पस्य [3]सर्वैस्तैर्निर्विचारतः । जगृहे जीर्णभावात्तु सोमदेवस्तदाऽवदत् ॥ १५४ ॥
वत्स ! [4]कच्छाभिसंबद्धं ममास्तु परिधानकम् । नग्नैः शक्यं किमु स्थातुं स्वीयात्मजसुतापुरः ॥ १५५ ॥
इत्याकर्ण्य गुरुर्दध्यौ दुष्करं चिन्त्यमस्यदः । अथवाऽस्तु समाचारमादाप्योऽयं शनैः शनैः ॥ १५६ ॥
आहाथ मम तातस्याभिप्रायः परिपूर्यताम् । स च प्राह गुरुस्तेऽहं स्वाभिप्रेतं[5] वदामि तत् ॥ १५७ ॥
उपानहौ मम स्यातां तथा करकपात्रिका । छत्रिकाऽथोपवीतं च यथा कुर्वे तव व्रतम् ॥ १५८ ॥
पादयोः शिरसस्तापस्तथा[6] न स्यात् तथा शुचिः । भवाम्यूढं यदाजन्म तत् त्यक्तुं हि [7]न शक्यते ॥ १५९ ॥
अनिषिद्धानुमत्यानुमेने सूरिस्तदाग्रहम्[8] । स्वाध्यायं तु[9] स्वयं शिक्षयन्ति स्म पितरं स्वकम् ॥ १६० ॥
श्राद्धानां शात्ररूपाणि गुरूणां शिक्षयाऽन्यदा । चैत्येषु गच्छतः साधून् प्रणामायोपतस्थिरे ॥ १६१ ॥
सर्वानपि प्रणंस्यामो मुक्त्वा छत्रधरं मुनिम् । उपाश्रयागतोऽपृच्छदवन्द्यः किमहं सुत[10] ! ॥ १६२ ॥
तात[11] ! किमेवं वन्द्यः स्यान्मुञ्च छत्रं तथापि हि । पटं शिरसि देयास्त्वमुष्णताप उपस्थिते ॥ १६३ ॥
एवं भवत्विति प्राह वृद्धः स्नेहात् सुतप्रभोः । इत्थं स त्याजितो वाग्भिस्तेनालं[12] पादुके अपि ॥ १६४ ॥
अनुष्णक्षणबाह्योर्वीगामिन् ! मुक्तपरिग्रह[13] ! । उपवीतेन किं बाह्यजनप्रत्यायकेन ते ॥ १६५ ॥
इति को वा न जानाति यद् वयं द्विजसत्तमाः । एवं शनैः स गार्हस्थ्यवेषं संत्याजितस्तदा ॥ १६६ ॥
पूर्वरीत्याऽन्यदा बालाः [14]परिधानकृतेऽवदन् । स ब्रह्मतेजसाऽऽदीप्तस्तदाह पृथुकान् प्रति ॥ १६७ ॥
नग्नो न स्यामहं यूयं मा वन्दध्वं सपूर्वजाः । स्वर्गोऽपि सोऽथ मा भूयाद् यो भावी भवदर्चनात् ॥ १६८ ॥
अन्यदाऽनशनात् साधौ परलोकमुपस्थिते । संज्ञिता मुनयो देहोत्सर्गाय प्रभुणा दृढम् ॥ १६९ ॥
गीतार्था यतयस्तत्र क्षमाश्रमणपूर्वकम् । अहंप्रथमिकां चक्रुस्तत्तनूद्वहने तदा ॥ १७० ॥
कोपाभासाद् गुरुः प्राह पुण्यं युष्माभिरेव तत् । उपार्जनीयमन्यूनं न तु नः स्वजनव्रजैः ॥ १७१ ॥
श्रुत्वेति जनकः प्राह यदि पुण्यं महद् भवेत् । अहं वहे, प्रभुः प्राह भवत्वेवं पुनः शृणु ॥ १७२ ॥
उपसर्गा भवन्त्यस्मिन्नुह्यमाने ततो निजम् । किं तातमनुमन्येऽहमस्मिन् दुष्करकर्मणि ॥ १७३ ॥
उपसर्गैर्यदि क्षुभ्येत् तन्नः [15]स्यादपमङ्गलम् । विज्ञायेत्युचितं य तत् तद् विधेहि समाधिना ॥ १७४ ॥
वहिष्याम्येव[16] किमहं निःसत्त्वो दुर्बलोऽथवा । एतेभ्यो मामकीना तन्न कार्या काप्यनिर्वृतिः ॥ १७५ ॥
पुरा प्रत्यूहसंघातो वेदमन्त्रैर्मया हतः । समस्तस्यापि राज्यस्य राष्ट्रस्य नृपतेस्तथा ॥ १७६ ॥
ततः संवोढुरस्यांशे[17] शवं[18] शवरथस्थितम् । आचकर्षुर्निवसनं शिशवः पूर्वशिक्षिताः ॥ १७७ ॥
अन्तर्दूनोऽप्यसौ पुत्रप्रत्यूहभयतो न तत् । अमुञ्चन् तत उत्सृज्य स्थण्डिले [19]ववले रयात् ॥ १७८ ॥

---

1 A प्राप्तं । 2 B C निबिडः । 3 A B C सर्वस्तैः । 4 B कच्छादि° । 5 N °प्रायं । 6 N यथा । 7 A नहि । 8 A °ग्रहः । 9 A B च । 10 N पुनः । 11 A B N तातः । 12 N °नालं; A B °नाल्ल । 13 A °ग्रहः । 14 A °धाने । 15 B स्यादपि । 16 B N वहिश्या । 17 A °स्यांके; B °स्यान्ते । 18 A B शिवं । 19 N च वले ।

गुरुणाऽऽप्रच्छि किं नग्नस्तात[1] ! [2]सोऽप्युत्तरं ददौ । उपसर्गः समुत्तस्थौ त्वद्वचो [3]ह्यनृतं नहि ॥ १७९ ॥
स न्यषेधि मया दार्ढ्यादेवंवादिनि तत्र च । शाटकं पृथुलं दीर्घं गृहाणेत्यथ तेऽवदन् ॥ १८० ॥
तदाकर्ण्य पिता प्राह द्रष्टव्यं दृष्टमेव यत् । को नः परिग्रहस्तस्मान् नाग्न्यमेवास्त्वतः परम् ॥ १८१ ॥
एवं प्रायः प्रपञ्चैश्चावलेपान् पर्यहापयन् । गुरवो न तु भैक्ष्येऽस्य मनः शक्ता नियोजितुम् ॥ १८२ ॥
एवं *त्ववकरं[4] नायं त्यजति प्रभुणापि च । अनेकश उपायैस्तैः सुपरिच्छेदितोऽपि[5] सन् ॥ १८३ ॥
कदाचिदायुः क्षीयेतास्माकं तन्निस्तरिष्यति । कथं जरन्नसौ तस्माद् भिक्षां ग्राह्यः कथंचन[6] ॥ १८४ ॥
ध्यात्वेति शिक्षयन्ति स्म रहस्ते मुनिपुङ्गवान् । मण्डल्यां[7] नास्य दातव्य आहारो भोज्यमेककैः ॥ १८५ ॥
अरुच्यमपि चित्तस्य तथा ते प्रतिपेदिरे । तेभ्यो[8] गुरुवचःश्रद्धानिष्ठेभ्योऽस्तु नमो नमः ॥ १८६ ॥
विहारं चक्रुरन्यत्रान्यदा ते गुरवो बहिः । मण्डल्यां यतयो न न्यमन्त्रयन्त जरन्मुनिम् ॥ १८७ ॥
त्र्यहे गुरव आजग्मुरार्य[9] च समभापयन्[10] । ततः प्रमन्युराहासौ श्रूयतां सुत ! मद्वचः ॥ १८८ ॥
दिनानि चेद् बहूनि त्वमवास्थास्यो बहिर्भुवि । अकालेऽपि तदा प्राणान् पर्यत्याक्ष्यमहं ध्रुवम् ॥ १८९ ॥
मुनयोऽमी त्वदादिष्टा अपि वार्तां न मामकाम् । वहन्ति हेतोर्नो वेद्मि तन्न कस्याप्यहं प्रभो[11] ! ॥ १९० ॥
ततस्ते कृतकक्रोधाद् विनेयानूचिरे चिरम् । तातः कथं भवद्भिर्न भोजनेन निमन्त्रितः ॥ १९१ ॥
ते प्राहुः पूज्यपादेभ्यो विना नः शून्यचेतसाम् । क्षूणं †पतितमेवैतत् क्षन्तव्यं बालचेष्टितम् ॥ १९२ ॥
श्रुत्वेति तद्वचः प्राहुः सूरयः श्रूयतां पितः ! । न विधेया परस्याशा मूलहेतुः पराभवे ॥ १९३ ॥
वयं त्वदुचिताहारान्वेपणाय स्वयं ननु । यास्यामः कीदृशोऽमीषां पाटो व्रीडावहः‡ स्फुटम् ॥ १९४ ॥
इत्युक्त्वा स्वयमुत्थायादाय चाथ स्वपात्रकम् । चेलुस्तावच्च वर्षीयानाह§ साहसवद् वचः ॥ १९५ ॥
अहमेव प्रयास्यामि भिक्षायै किं मयि स्थिते । वत्स[12] ! गच्छपतिस्त्वं हि भिक्षुभिक्षां भ्रमिष्यसि ॥ १९६ ॥
इत्युक्त्वा मंक्षु¶ सोत्साहः[13] प्रतिषिद्धोऽपि सूरिभिः । सपात्रः संचचालासौ प्राग्श्रेष्ठ्यस्य मन्दिरम् ॥ १९७ ॥
अपद्वारा प्रविष्टोऽसौ भिक्षाशिक्षास्वनिष्ठितः । मूलद्वारा कथं नागा गृहिणेत्युदितस्ततः ॥ १९८ ॥
आयातीह[14] शुभा लक्ष्मीरपद्वाराऽपि धार्मिक[15] ! । श्रुत्वेति स गृही दध्यौ वृद्धस्तत्कालधीरयम् ॥ १९९ ॥
द्वात्रिंशन्मोदकांस्तेन तुष्टेन प्रतिलाभितः । आगत्योपाश्रये सूरेः[16] पुरश्चालोचयत् ततः ॥ २०० ॥
गुरुणा प्रथमे लाभे शकुनोऽत्र विचारितः । द्वात्रिंशत्संख्यया शिष्या भविष्यन्ति ममानुतः ॥ २०१ ॥
अपृच्छच्च पुनस्तात ! यदा राजकुलाद् धनम् । लब्धा ततो भुक्तशेषं ददध्वं कस्य भावतः ॥ २०२ ॥
आर्योऽप्याह गुणोदग्रश्रोत्रियेभ्यः प्रदीयते । ‖सत्पात्रेभ्यो यतो दत्ता लक्ष्मीः सुकृतभूर्भवेत् ॥ २०३ ॥
प्रधानाः साधवोऽस्माच्च वैयावृत्त्यादिसद्गुणैः । अमीषां देहि तत् तात ! जन्म स्वं सफलं कुरु ॥ २०४ ॥
बालग्लानादिसाधूनामानीतं चेन्मयाशनम् । उपकारि भवेदेषां किं न लब्धं मयात्र तत् ॥ २०५ ॥
एवं वदन्नसौ वृद्धो भिक्षायामादरं वहन् । परमाराध्यतां प्राप्तो गच्छे दानैकशुद्धधीः ॥ २०६ ॥

§१०. तत्र गच्छे त्रयः[17] **पुष्यमित्राः** $सुत्रामतेजसः । स्वप्रज्ञाज्ञातशास्त्रार्थाः सन्ति सन्तोपभूमयः ॥ २०७ ॥
**घृतपूर्व**स्तेषु पूर्वो **वस्त्रपूर्वो** द्वितीयकः । सुधी**र्दुर्बलिकापूर्वः**[18] **पुष्यमित्र**स्तृतीयकः ॥ २०८ ॥

---

1 N तातः । 2 C यो । 3 C नानृतं क्वचित्; A नानृतं महि । * 'उकर' इति B टि० । 4 B °कराभायं । 5 A परिच्छेदतो । 6 A C नः । 7 N मण्डल्या । 8 N ततो । 9 B °राज्यं च । 10 C °भापयन् । 11 C प्रभोः । † 'वरांसु पडिउ' इति B टि० । ‡ 'लज्जाहीन' इति B टि० । § 'वृद्ध बोलिउ' इति B टि० । 12 A वच्छ । ¶ 'शीघ्रं यास्यामि' इति B टि० । 13 A B सोत्साह; N सोत्साहं । 14 B आयातीह । 15 B धार्म्मिकः; C धार्म्मिकं । 16 C सूरिः ।

‖ पात्रे त्यागी गुणे रागी भोगी परजनैः सह । शास्त्रे बोद्धा रणे योद्धा पुरुषः पंचलक्षणः ॥ १ ॥ इति B टिप्पणी ।

17 A त्रयं । $ 'इंद्र सरीषा तेजिइ छइ' इति B टि० । 18 A °पूर्व° ।

तत्राद्य**पुष्यमित्रस्य** लब्धिरासीच्चतुर्विधा । द्रव्यतः क्षेत्रतश्चापि कालतो भावतस्तथा ॥ २०९ ॥
द्रव्यतो घृतमेव स्यात् क्षेत्रतोऽ**वन्तिमण्डलम्** । ज्येष्ठाषाढे कालतस्तु भावतोऽथ निगद्यते ॥ २१० ॥
दुर्गता ब्राह्मणी षड्भिर्मासैः प्रसवधर्मिणी । तद्भर्तेति विमृश्याज्यं भिक्षित्वा[1] संचये दधौ ॥ २११ ॥
ततः सा प्रसवे चायश्वीने क्षुद्राधितं द्विजम् । तद् घृतं याचमानं तं रुणद्ध्यन्यनिराशया ॥ २१२ ॥
स मुनिश्चेदर्थयेत दत्ते तदपि [2]सा मुदा । यावद्गच्छोपयोग्यं[3] स्यात् [*]तावदाप्नोति भावतः ॥ २१३ ॥
**वस्त्रादिपुष्यमित्र**स्य प्रेक्ष्यते [4]लक्षणं त्विदम् । द्रव्यतो लभते वस्त्रं क्षेत्रतो **मथुरापुरि**[5] ॥ २१४ ॥
वर्षा-शिशिरहेमन्ते कालतो भावतस्त्विदम् । तस्य लब्धिविशेषोऽयं क्षयोपशमसंभवः ॥ २१५ ॥
अनाथा महिला कापि [6]कार्पासोच्चयमूल्यतः । तूलं संपिण्ड्य[7] कर्तित्वा वानकर्मकृतां गृहे ॥ २१६ ॥
कर्म कृत्वा वेतनेन[†] पटं तेभ्यः [‡]प्रवाययेत् । शाटकं विपटा[8] तेनार्थिता तमपि यच्छति ॥ २१७ ॥
**दुर्बलः पुष्यमित्रो**ऽपि यथालब्धं घृतं घनम् । भुनक्ति स्वेच्छयाऽभीक्ष्णं पाठाभ्यासात् तु दुर्बलः ॥२१८॥
स मनीषाविशेषेण गृहीतनवपूर्वकः । समभ्यस्यत्यहोरात्रं[9] मा विस्मार्षीन्मम श्रुतम् ॥ २१९ ॥
सनाभयो **दशपुरे** तस्य तिष्ठन्ति विश्रुताः§ । **सौगतो**पासकास्ते च सूरिपार्श्वे समाययुः ॥ २२० ॥
ऊचुर्युष्माकधर्मेऽस्मिन् ध्यानं नास्ति स चावदत् । ध्यानमस्माकमस्तीह यत् तत् तेषां न विद्यते ॥२२१॥
भावत्कः पुष्यमित्रोऽयं ध्यानेनैवास्ति दुर्बलः । ते प्राहुर्मधुराहाराभावः कार्श्याय सत्रते ॥ २२२ ॥
गुरुः प्रोवाच वृद्धानां प्रसादेन घृतप्लुतम् । भुंक्ते यथेच्छं सततं गुणनेन त्वयं कृशः ॥ २२३ ॥
कुतो वः स्नेहसंपत्तिरित्युक्ते गुरुरुत्तरम् । प्रादाद् घृतं पुष्यमित्रः समानयति तद् घनम् ॥ २२४ ॥
अथ न प्रत्ययो वस्तन्नयतामुं निजे गृहे । दिनानि कतिचिच्चास्य स्निग्धाहारं प्रयच्छत ॥ २२५ ॥
स्वयं ज्ञास्यथ सद्भावं दौर्बल्यहेतुमप्यथ । तैराहूतोऽप्यनुज्ञातो गुरुभिस्तद्गृहं ययौ ॥ २२६ ॥
पोष्यमाणो वराहारैरप्यसौ कृशतां भजेत् । अहर्निशमधीयानो रसास्वादं न बुध्यते ॥ २२७ ॥
स्वजना [10]व्यमृशन्नस्य भुक्तं भस्मनि होमवत् । ददुर्बहुतरं ते च ततोऽप्यस्य न किंचन ॥ २२८ ॥
प्रेक्षिरे व्यतिरेकं ते प्रान्ताहारप्रदायिनः । [¶]न्यषेधयन्नध्ययने पुरावस्थाङ्गभागभूत् ॥ २२९ ॥
प्रतीतास्तेन संबोधिं[11] प्राप्यन्त स्वजना निजाः । पुनरागाद् गुरूपान्ते शान्ते चेतसि सुस्थितः ॥ २३० ॥
§ ११. तत्र गच्छे च चत्वारः प्राज्ञा मुनिमतल्लिकाः ।
**दुर्बलः पुष्यमित्रो**ऽथ **विन्ध्याख्यः**[12] **फल्गुरक्षितः** ॥ २३१ ॥
**गोष्ठामाहिल**नामा च जितौशनसचेतनः । तेषां विन्ध्योऽथ मेधावी गुरून् विज्ञपयत्यदः ॥ २३२ ॥
महत्यामनुयोगस्य मण्डल्यां|| पाठघोषतः ।
स्खलति श्रुतपाठो मे पृथग्मे कथ्यतां ततः ॥ २३३ ॥–त्रिभिर्विशेषकम् ।
सूरिराह स्वयमहं व्याख्यामि भवतः पुरः । [13]व्याख्यानमण्डलीं तूल्लङ्घयामि महतीं कथम् ॥ २३४ ॥
तस्मात् ते वाचनाचार्यो **दुर्बलः पुष्यमित्रकः** । महामतिरुपाध्यायोऽधीष्व शीघ्रं तदग्रतः ॥ २३५ ॥
एवं कृते [14]दिनैः कैश्चित्स विन्ध्याध्यापको[15] गुरून् । कृतांजलि [16]रहोऽवादीत् प्रभो! शृणुत मद्वचः ॥२३६॥
अहं वाचनया व्यग्रः स्वाधीतं विस्मरामि यत् । गुणने भङ्गपातेन तत् खिन्नः किं करोम्यहम् ॥ २३७ ॥

---

1 N भक्षिला । 2 N समुदा; C सुमुदा । 3 A °वत्सोपयोग्यं । * 'तृप्तपर्यंतं' इति B टि० । 4 C लवणं । 5 N पुरी । 6 B C कर्पासो । 7 A संपीड्य । † 'मूल्य' इति B टि० । ‡ 'निष्पन्नं' इति B टि० । 8 A विटपा । 9 B °भ्यस्यत्यतो बाढं । § 'विक्षात्' इति B टि० । 10 B विमृशन्न । ¶ एष उत्तरार्द्धः पतितः C आदर्शे । 11 B N संबोधं । 12 B विन्ध्याक्षः । || 'भणवानी मांडलिइं' इति B टि० । 13 A व्याख्यानं । 14 B दिने । 15 B विन्ध्योऽध्यापको । 16 C °जलिरवो° ।

यदा[1] स्वकगृहे प्रैषि पूज्यैर्गुणनवारणात् । तत्कृतात् स्खलितं किंचित् तदाऽधीतं पुरापि यत् ॥ २३८ ॥
यद्यतः परमेतस्य वाचनां दापयिष्यथ । ततो मे नवमं पूर्वं विस्मरिष्यत्यसंशयम् ॥ २३९ ॥
श्रुत्वेत्यचिन्तयत् सूरिरीदृग् मेधानिधिर्यदि । विस्मरत्यागमं तर्हि कोऽन्यस्तं धारयिष्यति ॥ २४० ॥
ततश्चतुर्विधः कार्योऽनुयोगोऽतः परं मया । ततोऽङ्गोपाङ्गमूलाख्यग्रन्थच्छेदकृतागमः ॥ २४१ ॥
अयं चरणकरणानुयोगः परिकीर्तितः । **उत्तराध्ययनाद्य**स्तु सम्यग्धर्मकथापरः ॥ २४२ ॥
**सूर्यप्रज्ञप्ति**मुख्यस्तु गणितस्य निगद्यते ।
द्रव्यस्य **दृष्टिवादो**ऽनुयोगाश्चत्वार ईदृशः ॥ २४३ ॥–त्रिभिर्विशेषकम् ।
**विन्ध्यार्थ**मिति सूत्रस्य व्यवस्था सूरिभिः कृता । पुरा चैकत्र सूत्रेऽभूदनुयोगचतुष्टयम् ॥ २४४ ॥
§ १२. अन्यदा **मथुरापुर्यामार्यरक्षित**सूरयः । तस्या भूमेर[2]धिष्ठातुर्व्यन्तरस्याश्रयेऽवसन् ॥ २४५ ॥
इतश्चास्ति विदेहेषु श्री**सीमंधर**तीर्थकृत् । तदुपास्त्यै ययौ **शक्रो**ऽश्रौषीद् व्याख्यां च तन्मनाः ॥२४६॥
निगोदाख्यानमाख्याच्च केवली तस्य तत्त्वतः[3] । इन्द्रः पप्रच्छ **भरते** कोऽन्यस्तेषां विचारकृत् ॥ २४७ ॥
अथार्हन् प्राह **मथुरानगर्यामार्यरक्षितः** । निगोदान् मद्वदाचष्टे ततोऽसौ विस्मयं ययौ ॥ २४८ ॥
प्रतीतोऽपि च चित्रार्थं वृद्धब्राह्मणरूपभृत् । आययौ गुरुपार्श्वे स शीघ्रं हस्तौ च धूनयन् ॥ २४९ ॥
काशप्रसूनसंकाशकेशो यष्टिश्रिताङ्गकः । सश्वासप्रसरो विष्वग्गलच्चक्षुर्जलप्लवः ॥ २५० ॥–युग्मम् ।
एवंरूपः स पप्रच्छ निगोदानां विचारणाम्[4] । यथावस्थं गुरुर्व्याख्यत् सोऽथ तेन चमत्कृतः ॥ २५१ ॥
जिज्ञासुर्ज्ञानमाहात्म्यं पप्रच्छ निजजीवितम् । ततः श्रुतोपयोगेन व्यचिन्तयदिदं गुरुः ॥ २५२ ॥
तदायुर्दिवसैः पक्षैर्मासैः संवत्सरैरपि । तेषां शतैः सहस्रैश्चायुतैरपि न मीयते ॥ २५३ ॥
लक्षाभिः कोटिभिः पूर्वैः पल्यैः पल्यशतैरपि । तल्लक्षकोटिभिर्नैव सागरेणापि नान्तभृत् ॥२५४॥–युग्मम् ।
सागरोपमयुग्मे च पूर्णे[5] ज्ञाते तदायुषि । भवान् सौधर्मसुत्रामा परीक्षां किं न ईक्षसे ॥ २५५ ॥
प्रकाश्याथ निजं रूपं मनुष्यप्रेक्षणक्षमम् । यथावृत्ते समाख्याते शक्रः[6] स्थाने निजेऽचलत् ॥ २५६ ॥
प्रतीक्षणे[7]ऽर्थिते किंचिद् यावद् यतिसमागमम् । रूपर्द्धिदर्शनैः साधुनिदानेन न्यषेधयत् ॥ २५७ ॥
तथापि किंचिदाधेहि चिह्नमित्यथ सोऽतनोत् । वेश्म तद्विपरीतद्वाः प्रययौ त्रिदिवं ततः ॥ २५८ ॥
आयाते मुनिभिर्द्वारेऽनाप्ते गुरुरुदैरयत् । विपरीतपथा याथा जग्मुस्ते चातिविस्मिताः[8] ॥ २५९ ॥
संभ्रमात् किं किमित्यूचिवांसस्ते बोधितास्तदा । गुरुभिर्गोत्रभिद्वृत्तं* याथातथ्यान्निवेदितम् ॥ २६० ॥
देवेन्द्रादर्शनात् खिन्ना इव किंचित् तदाऽवदन् । मन्दभाग्यैः कथं नाम दृश्यन्ते वासवा नरैः ॥ २६१ ॥
§ १३. अथो विजह्रुरन्यत्र प्रभवो **मथुरां** पुनः । आगतो नास्तिवादी च तं **गोष्ठामाहिलो**ऽजयत् ॥ २६२ ॥
असौ तत्रैव संघेन [9]चतुर्मासीं व्यधाप्यत । वादलब्धियुतस्तादृक् केनावस्थाप्यते नहि ॥ २६३ ॥
**आर्यरक्षित**सूरिश्च व्यमृशत् कः पदोचितः । **दुर्बलः पुष्यमित्रो**ऽयं तद्विचारे समागमत् ॥ २६४ ॥
सूरीणां निजवर्गीया व्यमृशन् **फल्गुरक्षितम् ।** गच्छाधिपत्ये तं **गोष्ठामाहिलं** चात्र मोहतः ॥२६५॥
कुम्भत्रितयमानायि तत्राचार्यैः सुपूरितम् । निष्पावतैलसर्पिर्भिरथ तच्च विरेचितम् ॥ २६६ ॥
वल्लाः सर्वेऽपि निर्यातास्तैलमीषत् पुनः स्थितम् । घृतं च बहुसंलग्नं पश्यतेमामुदाहृतिम्[10] ॥ २६७ ॥
**दुर्बले**ऽहं मुनौ जज्ञे †शतशिम्बिककुम्भवत् । **बन्धौ**[11] तैलकुटौपम्यो **मातुले** घृतकुम्भवत् ॥ २६८ ॥

---

1 A यथा । 2 A रतिष्ठातु । 3 A तत्त्वदः । 4 B C N विचारणम् । 5 A B ज्ञाते पूर्णे । 6 A B शक्रस्थाने । 7 B प्रतिक्षिणे । 8 N विस्मृताः । * 'इंद्रनूं' इति B टि० । 9 A चातु° । 10 B °दाहृतं° । † 'वल्ला इति B टि० । 11 B बन्ध्यौ ।

तन्मत्पदेऽयमेवास्तु प्रतीष्टं तैर्गुरोर्वचः । ततो न्यवेशयन् तत्र परमाक्षरमार्हतम् ॥ २६९ ॥
ततो गुरुभिरादिष्टं दुर्बलस्य नवप्रभोः । मदीयमातुल-भ्रात्रोर्वर्त्यं मद्वत् पितुश्च मे ॥ २७० ॥
यतयोऽन्येऽपि गच्छस्था गुरुभिः पितृसोदरौ । तावशिक्ष्यन्त साध्व्यश्च वचोभिर्मधुरैस्तदा ॥ २७१ ॥
यूयं मयीव वर्तध्वं मत्तोऽपि विनयाधिकाः । अस्मिन् यतो व्रताचारे स्मृते वा विस्मृतेऽपि वा ॥ २७२ ॥
अकृते वा कृते वापि तत्सर्वं ममृषे मया । पुनरेष[1] नवत्वेनाकृतेक्षणमवाप्स्यति ॥ २७३ ॥–युग्मम् ।
ततोऽस्यापतितं वाक्यं कार्यमेव सदोद्यतैः[2] । आमृत्यु पादमूलं च न मोक्तव्यममुष्य भो ! ॥ २७४ ॥
एवं गच्छव्यवस्था तैरार्यरक्षितसूरिभिः । विहिता प्रान्तकाले त्वनशनं प्रत्यपादि च ॥ २७५ ॥
निर्यामिताश्च गीतार्थैर्दैवीं भुवमुपाययुः । पृथक्करणतः सर्वानुयोगस्यानुवर्तकाः ॥ २७६ ॥–युग्मम् ।
§ १४. श्रीपुष्यमित्रसूरिश्च गच्छं वर्तयते ततः । गुरुतोऽभ्यधिकां चास्य समाधिमुदपादयत्[3] ॥ २७७ ॥
स गोष्ठामाहिलस्तत्र यथाविप्रतिपत्तिभूः । निह्नवः सप्तमो जज्ञे ज्ञेयं शास्त्रान्तराद्धि तत् ॥ २७८ ॥

इत्यार्यरक्षितविभोर्विशदं चरित्रं चित्रं जगत्त्रितयपावनगाङ्गवारि ।
विद्वज्जनश्रवणकुण्डलतां प्रयातमापुष्पदन्तरुचि नन्दतु वन्दनीयम् ॥ २७९ ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ सोमर्षिसूनोः कथा
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गो द्वितीयोऽगमत् ॥ २८० ॥

॥ ग्रन्थाग्रं० २८५, अक्षर ११ ॥ उभयं ४९२ अक्षर २२ ॥ छ ॥

---

1 C पुनरेव । 2 A सदाहतो । 3 N ॰मुपपादयत् ।

# ३. श्रीआर्यनन्दिलचरितम् ।

§१. **आर्यरक्षित**वंशीयः स श्रीमानार्य**नन्दिलः** । संसारारण्यनिर्वाहसार्थवाहः पुनातु वः ॥ १ ॥
क आर्यनन्दिलस्वामिगुणवर्णन ईशिता । अष्टौ कुलानि नागानां यदाज्ञां शिरसा दधुः ॥ २ ॥
यत्प्रसादेन **वैरोट्या** क्षमाया उपदेशतः । नागेन्द्रदयिता जज्ञे नाममन्त्राद् विषापहा ॥ ३ ॥
किंचित् प्रस्तौमि तद्वृत्तं गुरुणा गुरुणादृतः । प्रसादेन मृगाङ्कस्थो मृगः किं नाश्नुते नभः ॥ ४ ॥
अस्ति स्वस्तिनिधिः श्रीमत् **पद्मिनीखण्ड**पत्तनम् । मण्डितं सारकासारैः पद्मिनीखण्डमण्डितैः ॥ ५ ॥
तत्र *वित्रासिताशेषशत्रुपक्षः क्षमापतिः । **पद्मप्रभा**भिधः पद्मासद्म पद्मनिभाननः ॥ ६ ॥
तस्य **पद्मावती** कान्ता कान्ताशतशिरोमणिः । यया देहश्रिया जिग्ये कान्ता स्वर्गपतेरपि ॥ ७ ॥
तत्रामात्रश्रियां पात्रं श्रेष्ठी श्रेष्ठकलानिधिः । अर्थिचातकपाथोदः[1] **पद्मदत्तो**ऽस्ति विश्रुतः ॥ ८ ॥
तस्य **पद्मयशा** नाम वल्लभाऽस्ति रतिप्रभा । पुत्रः सुत्रामपुत्राभरूपः **पद्मा**भिधस्तयोः ॥ ९ ॥
कलाकलापसंपूर्णं तं मत्वा सार्थनायकः । **वरदत्तः** स्वकां पुत्रीं **वैरोट्या**ख्यां व्यवाहयत् ॥ १० ॥
अन्यदा वन्यदावाग्निदुस्सहे समुपागते । अन्तप्रतिभुवि न्यक्षपक्षेषु जगतोऽशिवे ॥ ११ ॥
युतः स परिवारेण पुण्यनैपुण्यसंक्षयात् । वरदत्तः पुरं प्राप विपापः समवर्तिनः† ॥ १२ ॥—युग्मम् ।
ततः प्रभृति तुच्छत्वात् श्वश्रूः शुश्रूषिताप्यलम् । वैरोट्यामवजानाति तां निष्पितृगृहामिति ॥ १३ ॥
रूपं राढा धनं तेजः सौभाग्यं प्रभविष्णुता । प्रभावात् पैतृकादेव नारीणां जायते ध्रुवम् ॥ १४ ॥
ततस्तद्वचनैर्दूना विनीतानां शिरोमणिः । साऽहोरात्रं भजेत् कार्श्यं कर्मोपालम्भतत्परा ॥ १५ ॥
अन्येद्युः साऽथ भोगीन्द्रस्वप्नसंसूचितं तदा । उवाह रत्नगर्भेव रत्नं गर्भं शुभाद्भुतम् ॥ १६ ॥
तृतीये मासि पूर्णेऽथ[2] दोहदं द्रोहदं द्विषाम् । बभार सारसत्त्वाढ्या दृढं पायसभोजने ॥ १७ ॥
§२. अथार्य**नन्दिलः** सूरिरुद्याने समवासरत् । साधुवृन्दवृतः सार्द्धनवपूर्वधरः प्रभुः ॥ १८ ॥
तस्यामापन्नसत्त्वायामपि श्वश्रूरदक्षिणा । वदन्ती कद्वदा‡ यत्किंचिदपि प्रतिकूलति ॥ १९ ॥
अस्याः कथं सुतो भावी निर्भाग्यैकशिरोमणेः । सुतैव भाविनी निष्पित्र्याया दारिद्र्यदीर्घिका ॥ २० ॥
इत्थं दुर्वचनैर्दूना साऽथ प्रभुपदान्तिकम् । आयाद् विमृश्य यच्चैत्यगृहं पितृगृहं ननु[3] ॥ २१ ॥
अभिवन्द्याथ साऽवादीदुदश्रु[4] प्राग्भवे मया । प्रभो ! विराधिताम्बा[5] किं यन्मय्यपि[6] विरोधिनी ॥ २२ ॥
प्रभुः [7]प्राह पुराकर्मकृते दुःखसुखे जने । तत् किमन्यस्य दोषो हि दीयतेऽत्र विवेकिभिः ॥ २३ ॥
मानुष्ये[8] दुर्लभे लब्धे सुखदा श्लाघ्यते क्षमा । यदस्यामादृतायां ते सर्वं भावि शुभं शनैः ॥ २४ ॥
ज्ञानाज्ज्ञातो मया वत्से ! दोहदस्तव पायसे । अवतीर्णः [9]सुपुण्येन सोऽपि संपूरयिष्यते ॥ २५ ॥
इति वागमृतैस्तस्या[10] विध्यायन्मन्युपावकः[11] । शीतीभूता ययौ गेहे स्मरन्ती तद्वचो[12] हृदि ॥ २६ ॥
पुण्डरीकतपश्चैत्रपौर्णिमास्यामुपोषिता । व्यधात् **पद्मयशा**स्तस्योद्यापनं च प्रचक्रमे ॥ २७ ॥
तद्दिने पायसापूर्णः प्रदीयेत पतद्ग्रहः । गुरूणां समधर्माणां वात्सल्यं क्रियतेऽथ सा ॥ २८ ॥
तस्मिन् कृते समस्तेऽपि कदर्यान्नं ददे तदा । [13]श्वश्र्वावज्ञावशाद् वध्वा धिग् दर्पं गुणदूषकम्[14] ॥ २९ ॥

* 'नसाख्या' इति B टि० । 1 A B °पाथोदपद्म° । † 'यमस्य पुरं प्राप' इति B टि० । 2 B C च । ‡ 'कटुभाषिणी' इति B टि० । 3 A C नतु । 4 C N °उदश्रुः । 5 A विराधितं वा । 6 N °मय्यति° । 7 N प्रभुराह । 8 C N मानुषे । 9 N सपुण्येन । 10 A तस्य । 11 A B °पावका । 12 A सद्वचो । 13 A स्वस्रा; B स्वश्रा । 14 A दूषणं° ।

वधूर्दौहृदमाहात्म्यात् किंचिच्छेषं च पायसम् । वस्त्रे बद्ध्वा घटे क्षिप्त्वा जलाय[1] च बहिर्ययौ ॥ ३० ॥
कुम्भं मुक्त्वा तरोर्मूले यावद् याति जलाश्रये । अंह्रिशौचाय सद्वृत्ता क्षैरेयीस्वादत[2]न्मनाः ॥ ३१ ॥
ततोऽ**लिञ्जर**नागेन्द्रकान्ताप्यागाद् रसातलात् । भ्रमन्ती पायसे लुब्धा तदैक्षिष्ट घटे च सा ॥ ३२ ॥
वस्त्रखण्डात् समाकृष्य बुभुजे चाथ तत्तया । पुनर्यथागतं प्रायात् पातालं नागवल्लभा ॥ ३३ ॥
प्रत्यावृत्ता च **वैरोट्या** तदप्रेक्ष्य घटान्तरा । न शुशोच न चाकुप्यत् सा सती किंत्विदं जगौ ॥ ३४ ॥
येनेदं भक्षितं भक्ष्यं पूर्यतां तन्मनोरथः । यादृग्ममेति शान्तान्तःकरणेत्याशिषं ददौ ॥ ३५ ॥

§ ३. इतश्च पन्नगेन्द्रस्य कान्तया पत्युरग्रतः । निवेदितेऽवधेर्ज्ञात्वा सर्वं तां स विगीतवान् ॥ ३६ ॥
सानुतापा[3] ततः सापि तदुपन्नगृहस्थितेः* । स्त्रियः स्वप्नं ददौ तस्याः क्षमया रञ्जिता सती ॥ ३७ ॥
यद**लिञ्जरनाग**स्य प्रियाऽहं तनया च मे । **वैरोट्या** पायसं दद्या अस्या दोहदपूरकम् ॥ ३८ ॥
तथा च मद्वचः कथ्यं तवाहं यत्पितुर्गृहम् । ध्रुवं निवारयिष्यामि श्वश्रूभवपराभवम् ॥ ३९ ॥
भोजिता पायसं भक्त्या तया सा पुण्यवर्णिनी । संपूर्णदोहदा[4] प्रीताऽजीजनत् सुतमद्भुतम् ॥ ४० ॥
नागकान्तापि सूते स्म नागानां शतमुत्तमम् । वर्द्धन्ते तेजसा तेऽपि तेजःप्रतिनिभप्रभाः ॥ ४१ ॥
वैरोट्या नागिनीं दध्यौ नामारोपण[5]पर्वणि । नन्दनस्य ततोऽम्बाया आदेशान् पन्नगोत्तमैः ॥ ४२ ॥
वयं पितृगृहं तस्याः प्रतिश्रुत्येति मानुषे । लोके तैरेत्य तद्गेहमलञ्चक्रे ससंमदैः ॥ ४३ ॥—युग्मम् ।
केचिन्मतङ्गजारूढा अश्वारूढाश्च केचन । सुखासनगताः केचित् केचिन्नरविमानगाः ॥ ४४ ॥
वैक्रियातिशयाद् रूपशतभाजः सुरा अथ । तद्वेश्म संकटं चक्रुः पाटकं चापि पत्तनम् ॥ ४५ ॥
केऽपि बाला घटे क्षिप्त्वा अपिधानावृतास्यके । रक्षार्थमंबया सर्पा वैरोट्यायाः समर्पिताः ॥ ४६ ॥
वधूपितृकुले तस्मिन्नायाते [6]श्रीकलाद्भुते । श्वश्रूः स्नानादिभिस्तेषां सत्कर्तुमुपचक्रमे ॥ ४७ ॥
अहो ! लक्ष्मीवतामेव पक्षः श्रेयान् जयी जने । यज्जातेयं विगीता सा तन्निजा गौरवास्पदम् ॥ ४८ ॥
कयापि कर्मकर्याऽथ पर्वकर्मविहस्तया । अश्मन्तकस्थितस्थालीमुखे नागघटो ददे ॥ ४९ ॥
दृष्ट्वा व्याकुलया वैरोट्यया चोत्तारितो घटः । स्नातया जननीवाक्यात् केशाद्भिः सोऽभ्यषिच्यत ॥ ५० ॥
ते तत्प्रभावतः स्वस्थास्तस्थुरेकः पुनः शिशुः । अस्पर्शाज्जलबिन्दूनां विपुच्छोऽजायत क्षणात् ॥ ५१ ॥
स्खलिते यत्र तत्रापि क्षुतादौ वदति स्म सा । बण्डो जीवत्विमां वाचं तस्य स्नेहेन मोहिता ॥ ५२ ॥
बन्धवो नागरूपास्ते सर्वेभ्यो ददुरद्भुतम् । क्षौमसौवर्णरत्नौघमुक्ताभरणमण्डलम् ॥ ५३ ॥
तत्र पर्वणि संपूर्णे यथास्थानं च ते ययुः । नागास्तेन प्रभावेण गौरव्या साऽभवद् गृहे[7] ॥ ५४ ॥
अन्यदा**लिञ्जरः** पुत्रान् नागराजो निभालयन् । बण्डं ददर्श कोपश्च चक्रेऽवयवखण्डनात् ॥ ५५ ॥
तज्ज्ञात्वाऽवधिना गेहे वैरोट्यायाः समाययौ । दंशमस्या विधास्यामि ध्रुवं मन्नन्दनद्रुहः ॥ ५६ ॥
इति संश्रवमाकर्ण्य पत्युस्तद्रक्षणोद्यता । समागान्नागिनी भक्ता **वैरोट्ये**ति प्रवादिनी ॥ ५७ ॥
गिरेति श्रुतया पत्न्याः[8] किञ्चिच्छान्तः परीक्षितुम् । अन्तर्गृहं कपाटस्य पश्चाद्गूढतनुः स्थितः ॥ ५८ ॥
प्रदोषतामसात् किंचिदररि† स्थितमग्रतः । अदृष्ट्वा रभसा यान्ती सा गुल्फे पीडिता भृशम् ॥ ५९ ॥
बण्डो जीवत्विति ततो वादिनी फणभृत्पतिम् । सद्यः सन्तोषयामास तुष्टोऽसौ नूपुरे ददौ ॥ ६० ॥
यातायतं चानुजज्ञे तस्याः पातालवेश्मसु । तेन नागाश्च तद्गेहमायान्त्यपि यथा तथा ॥ ६१ ॥

1 A जलायेव; B जलयेव । 2 B वन्मनाः । 3 A °तापात्त° । * 'उपन्नं लन्तिकाश्रयः' इति B टि० । 4 C N दोहदप्रीता । 5 B N °रोपणि° । 6 B N श्रीकुला° । 7 A ततोऽभवत् । 8 A पत्न्या । † 'ऊलालमनी रहणइ आवी रहिड' इति B टि० ।

ततो बालाबलामुख्यो[1]ऽभवल्लोको भयभ्रमि[2] । इति ख्यातं च तद्गेहं दुर्गमं नागमन्दिरम् ॥ ६२ ॥
विज्ञप्तं **पद्मदत्तेन** गुरूणां तद् यथातथम् । जगदुस्ते च नागानां स्ववध्वा ख्यापयेरिदम् ॥ ६३ ॥
अस्मद्गृहे न वस्तव्यं[3] जनानुग्रहकाम्यया । वस्तव्यं वा न दष्टव्यमिति कृत्यं मदाज्ञया ॥ ६४ ॥
वैरोट्यायाः समादिष्टं त्वं गच्छाशीविषाश्रये । वक्तव्या नागिनीपुत्रा उल्लङ्घ्याऽऽज्ञा हि मे नहि ॥ ६५ ॥
तया गत्वा च पाताले ज्ञापिताः फणभृद्वराः[4] । आज्ञां प्रभोस्ततो मान्याऽमीषामाख्येयमद्भुता[5] ॥ ६६ ॥
[6]जीवतान्नागिनी नागशतं चास्यास्तथा पिता । [7]अलिञ्जरश्च नागेन्द्रो विषज्वाला[8]हुताम्बरः ॥ ६७ ॥
अनाथाऽहं च सन्नाथा कृता येन सनूपुरौ । चरणौ रचिताविल्याशिषं प्रादात् सुधोर्मिभाम् ॥ ६८ ॥
छत्रध्वजावृतिध्यानाद्[9] देवदेवजिनेशितुः । पन्नग-प्रेत-भूताग्नि-चौर-व्यालभयं नहि ॥ ६९ ॥
डाकिनी-शाकिनीवृन्दं योगिन्यश्च निरन्तरम् । न विद्रवन्ति जैनाज्ञा यस्य मूर्धनि शेखरः ॥ ७० ॥
यश्च तस्य गुरोराज्ञां वैरोट्यायास्तथा स्तवम् । नित्यं ध्यायति तस्य स्यान्नैव क्षुद्रभवं भयम् ॥ ७१ ॥
गुडाज्यपायसैः स्वाद्यं बलिं ढौकयते च यः । जिनस्य जैनसाधोश्च दत्ते सा तं च रक्षति ॥ ७२ ॥
उपदेशं प्रभोरेनमाकर्ण्यान्येऽपि भोगिनः । उपशान्तास्तथा पूज्या वैरोट्याख्याऽभवत् सती ॥ ७३ ॥
**नागदत्त**श्च तत्पुत्रो भाग्यसौभाग्यरङ्गभूः । तत्कुलोन्नतिमाधत्त धर्मकर्मणि कर्मठः ॥ ७४ ॥
संसारानित्यतामन्यदिने सद्गुरुगीर्भरात् । संभाव्य नागदत्तं स्वे पदे न्यास्थद्[10] गुणोज्ज्वलम् ॥ ७५ ॥
पद्मदत्तः प्रियापुत्रसहितो जगृहे व्रतम् । उग्रं ततस्तपस्तप्त्वा **सौधर्मे** ससुतो ययौ ॥ ७६ ॥
तथा **पद्मयशाः**[11] पूज्यादेशाद् वध्वा तया सह । मिथ्यादुष्कृतमाधाय देवी तत्रैव साभवत् ॥ ७७ ॥
**वैरोट्या**ऽपि फणीन्द्राणां ध्यानाद् धर्मोद्यता सती । मृत्वाऽभूद् धरणेन्द्रस्य देवी श्रीपार्श्वसेवितुः ॥ ७८ ॥
सापि [12]प्रभौ भक्तिमतां चक्रे साहाय्यमद्भुतम् । विषवह्न्यादिभीतानां दधात्युपशमं ध्रुवम् ॥ ७९ ॥
श्री**आर्यनन्दिलः** स्वामी वैरोट्यायाः स्तवं तदा । 'नमिऊण जिणं पास' मिति मन्त्रान्वितं व्यधात् ॥८०॥
एकचित्तः पठेन्नित्यं त्रिसन्ध्यं य इमं स्तवम् । विषाद्युपद्रवाः सर्वे तस्य न स्युः कदाचन ॥ ८१ ॥

**[13]ये वैरोट्याख्यानमेतत् पवित्रम् [14]क्षान्त्यक्षीणश्रेयसां मूलशाला ।**
**श्रुत्वा मर्त्या ये क्षमामाद्रियेरन् तेषां स्वर्गो नापि मोक्षो दुरापः ॥ ८२ ॥**

**श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-**
**चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।**
**श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीनन्दिलाख्यानकं**
**श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गस्तृतीयोऽजनि ॥ ८३ ॥**

**प्रभो श्रीप्रद्युम्नाभिघनरसधाराधर ! विना**
**भवन्तं सद्गुर्वक्षरविषयतृष्णातरलितम् ।**
**सुलभ्भान्यश्रीमद्भुवननिरपेक्षं विशदनै[15]-**
**[16]र्गिरासारैः शिष्यं ननु धिनु निजं चातक[17]शिशुम् ॥ ८४ ॥**

## ॥ *इति श्रीनन्दिलाचार्यप्रबन्धः, तृतीयः ॥

॥ ग्रंथाग्र ८७, अक्षर २४ ॥ उभयं ५७७, अक्षर २४ ॥

---

1 C बालामुख्यो । 2 C N °भ्रमिः । 3 B वास्तव्यं° । 4 C N फणवद्° । 5 A B °मद्भुताः । 6 A B N जीविता° । 7 C N आलि° । 8 N °ज्याला° । 9 A ध्यानादेव° । 10 N न्याधाद् । 11 B पद्मजसा । 12 B N प्रभोः । 13 A यैः । 14 A क्षांतक्षी° । 15 A विशदिनै° । 16 N गिरां सारैः । 17 C चातकं । * A C आदर्शे नोपलभ्यते समाप्तिसूचका पंक्तिरियम् ।

# ४. श्रीकालकसूरिचरितम् ।

§ १. श्रीसीमंधरतीर्थेशविदितोऽनणुतो गुणात् । कुतश्चिदपि सोऽव्याद्वः कालकः सूरिकुञ्जरः ॥ १ ॥
प्राच्यैर्बहुश्रुतैर्वृत्तं यस्य पर्युषणाश्रयम् । आदृतं कीर्त्यते किं न शकटी शकटानुगा ॥ २ ॥
श्रीधरा[1]वासमित्यस्ति नगरं न[2] गरो जयी । द्विजिह्वास्यसमुद्गीर्णो यत्र साधुवचोऽमृतैः ॥ ३ ॥
आशाकम्बावलंबाढ्या[3] महाबलभरोच्छ्रिता ।
कीर्ति-पताकिका यस्याक्रान्तव्योमा गुणाश्रया ॥ ४ ॥–युग्मम् ।
श्रीवैरिसिंह[4] इत्यस्ति राजा विक्रमराजितः । यत्प्रतापो रिपुस्त्रीणां पत्रवल्लीरशोषयत् ॥ ५ ॥
तस्य श्रीशेषकान्तेव कान्ताऽस्ति सुरसुन्दरी । उत्पत्तिभूमिर्भद्रस्य महाभोगविराजिनः[5] ॥ ६ ॥
जयन्त इव शक्रस्य शशाङ्क इव वारिधेः । कालको कालकोदण्डखण्डितारिः सुतोऽभवत् ॥ ७ ॥
सुता सरस्वती नाम्ना ब्रह्मभूर्विश्वपावना । यदागमात् समुद्रोऽपि गुरुः सर्वाश्रयोऽभवत् ॥ ८ ॥
कालकोऽश्वकलाकेलिकलनायान्यदा बहिः । पुरस्य भुवमायासीदनायासी हयश्रमे ॥ ९ ॥
तत्र धौरितकात् प्लुत्या वल्गितेनापि वाहयन् । उत्तेजिताल्लसद्गत्या हयानुत्तेरितादपि ॥ १० ॥
*श्रान्त[6]स्तिमितगन्धर्वो गन्धर्व इव रूपतः । अशृणोन्मसृणोदारं स्वरमाराममध्यतः ॥ ११ ॥
अथाह मन्त्रिणं राजपुत्रः कीदृक् स्वरो ह्यसौ । मेघगर्जितगम्भीरः[7] कस्य वा ज्ञायतां ततः ॥ १२ ॥
व्यजिज्ञपत् स विज्ञाय नाथ ! सूरिर्गुणाकरः । प्रशान्तपावनीं मूर्तिं बिभ्रद् धर्मं दिशत्यसौ ॥ १३ ॥
विश्राम्यद्भिर्नृपारामे श्रूयतेऽस्य वचोऽमृतम् । अस्त्वेवमिति सर्वानुज्ञाते तत्राभ्यगादसौ ॥ १४ ॥
गुरुं नत्वोपविष्टे च विशेषादुपचक्रमे । धर्माख्यां योग्यतां ज्ञात्वा तस्य ज्ञानोपयोगतः ॥ १५ ॥
[8]धर्मार्हद्-गुरुतत्त्वानि सम्यग् विज्ञाय संश्रय[9] । ज्ञान-दर्शन-चारित्ररत्नत्रयविचारकः[10] ॥ १६ ॥
धर्मो जीवदयामूलः, सर्वविद् देवता जिनः । ब्रह्मचारी गुरुः संगभङ्गभू रागभङ्गभित् ॥ १७ ॥
व्रतपञ्चकसंवीतो यतीनां संयमाश्रितः । दशप्रकारसंस्कारो धर्मः कर्मच्छिदाकरः ॥ १८ ॥
य एकदिनमप्येकचित्त आराधयेदमुम् । मोक्षं वैमानिकत्वं वा स प्राप्नोति न संशयः ॥ १९ ॥
अथो गृहस्थधर्मश्च व्रतद्वादशकान्वितः । दानशीलतपोभावभङ्गीभिरभितः शुभः ॥ २० ॥
स सम्यक्पाल्यमानश्च शनैर्मोक्षप्रदो नृणाम् । जैनोपदेश एकोऽपि संसाराम्भोनिधेस्तरी ॥ २१ ॥
श्रुत्वेत्याह कुमारोऽपि भगिनीभंगिनीं दिश[11] । दीक्षां मोक्षं यथाज्ञानवेलाकूलं लभे लघु ॥ २२ ॥
पितरौ स्वावनुज्ञाप्यागच्छ तत्[12] तेऽस्तु चिन्तितम् । अत्यादरेण तत् कृत्वागाज्जाम्या† सहितस्ततः ॥ २३ ॥
प्रव्रज्याऽदायि तैस्तस्य तया युक्तस्य च स्वयम् । अधीती[13] सर्वशास्त्राणि स प्रज्ञातिशयादभूत् ॥ २४ ॥
स्वपट्टे[14] कालकं[15] योग्यं प्रतिष्ठाप्य गुरुस्ततः । श्रीमान् गुणाकरः सूरिः प्रेत्यकार्याण्यसाधयत् ॥ २५ ॥

§ २. अथ श्रीकालकाचार्यो विहरन्नन्यदा ययौ । पुरीमुज्जयिनीं बाह्यारामेऽस्याः समवासरत् ॥ २६ ॥
मोहान्धतमसे तत्र मग्नानां भव्यजन्मिनाम् । सम्यगर्थप्रकाशोऽभूत् ‡प्रभूष्णुर्मणिदीपवत् ॥ २७ ॥
तत्र श्रीगर्दभिल्लाख्यः पुर्यां राजा महाबलः । कदाचित् पुरबाह्योर्व्यां कुर्वाणो राजपाटिकाम् ॥ २८ ॥

---

1 N °धारावास° । 2 C नरो । 3 N आशशाङ्कं बलं वाढ्या । 4 N °वीरसिंह° । 5 N विराजिता । † 'थोड्डु थाकु' इति B टि० । 6 A शान्त° । 7 A गंभीरं । 8 A B धर्मो° । 9 B संश्रियः । 10 विचारकं । 11 N B दिशः । 12 A N °गच्छतस्ते । † 'भगिन्या सहित आविउ' इति B टि० । 13 A अधीता । 14 A B स्वे पट्टे । 15 A B कालिकं । ‡ 'श्रीसूर्य' इति B टि० ।

कर्मसंयोगतस्तत्र व्रजन्तीमैक्षत स्वयम् । जामिं कालकसूरीणां काको दधिघटीमिव ॥ २९ ॥–युग्मम् ।
हा रक्ष रक्ष सोदर्य ! [1]क्रन्दन्तीं करुणस्वरम्[2] । अपाजीहरदत्युग्रकर्मभिः पुरुषैः स ताम् ॥ ३० ॥
साध्वीभ्यस्तत् परिज्ञाय कालकप्रभुरप्यथ । स्वयं राजसमज्यायां गत्वावादीत् तदग्रतः ॥ ३१ ॥
वृत्तिर्विधीयते कच्छे रक्षायै फलसंपदः । फलानि भक्षयेत् [3]सैवाख्येयं कस्याग्रतस्तदा[4] ॥ ३२ ॥
राजन् ! समग्रवर्णानां दर्शनानां च रक्षकः । त्वमेव तन्न ते युक्तं दर्शनि[5]व्रतलोपनम् ॥ ३३ ॥
उन्मत्तकभ्रमोन्मत्तवदुन्मत्तो नृपाधमः । न मानयति गामस्य म्लेच्छवद् ध्वंसते तथा ॥ ३४ ॥
संघेन मन्त्रिभिः पौरैरपि विज्ञापितो दृढम् । अवाजीगणदारूढो मिथ्यामोहे गलन्मतिः ॥ ३५ ॥
प्राक्क्षात्रतेज आचार्य उन्निद्रमभजत् ततः । प्रतिज्ञां विदधे घोरां तदा कातरतापनीम्[6] ॥ ३६ ॥
जैनापभ्राजिनां ब्रह्मबालप्रमुखघातिनाम् । अर्हद्बिम्बविहन्तॄणां लिप्येऽहं पाप्मना स्फुटम् ॥ ३७ ॥
न चेदुच्छेदये शीघ्रं सपुत्रपशुबान्धवम् । अन्यायकर्दमक्रोडं विभ्रुवन्तं नृपभ्रुवम्[7] ॥ ३८ ॥–युग्मम् ।
असंभाव्यमिदं तत्र सामान्यजनदुष्करम् । उक्त्वा निष्क्रम्य दम्भेनोन्मत्तवेषं चकार सः ॥ ३९ ॥
एकाकी भ्रमति स्मायं चतुष्के चत्वरे त्रिके । असम्बद्धं वदन् द्वित्रिश्चेतनाशून्यवत् तदा ॥ ४० ॥
**गर्दभिल्लो** नरेन्द्रश्चेत् ततस्तु किमतः परम् । यदि देशः समृद्धोऽस्ति ततस्तु किमतः परम् ॥ ४१ ॥
वदन्तमिति तं श्रुत्वा जनाः प्राहुः कृपाभरात् । स्वसुर्विरहितः सूरिस्तादृग्ग्रहिलतां गतः ॥ ४२ ॥–युग्मम् ।
दिनैः कतिपयैस्तस्मान्निर्ययावेक एव सः । पश्चिमां दिशमाश्रित्य **सिन्धुतीर**मगाच्छनैः ॥ ४३ ॥
§ ३. **शाखिदेश**श्च तत्रास्ति राजानस्तत्र शाखयः । **शका**पराभिधाः सन्ति नवतिः षड्भिरर्गला ॥ ४४ ॥
तेषामेकोऽधिराजोऽस्ति सप्तलक्षतुरङ्गमः । *तुरङ्गायुतमानाश्चापरेऽपि[8] स्युर्नरेश्वराः ॥ ४५ ॥
एको माण्डलिकस्तेषां प्रैक्षि कालकसूरिणा । अनेककौतुकप्रेक्षाहृतचित्तः कृतोऽथ सः ॥ ४६ ॥
असौ विश्वासतस्तस्य वयस्यति तथा नृपः । तं विना न रतिस्तस्य तं बहूकैर्यथा क्षणम् ॥ ४७ ॥
सभायामुपविष्टस्य मण्डलेशस्य सूरिणा । सुखेन तिष्ठतो गोष्ठ्यां राजदूतः समाययौ ॥ ४८ ॥
प्रवेशितश्च विज्ञप्ते[9] प्रतीहारेण सोऽवदत् । प्राचीनरूढितो भक्त्या गृह्यतां राजशासनम् ॥ ४९ ॥
असिधेनुं च भूपोऽथ तद्गृहीत्वाशु मस्तके । उर्द्ध्वीभूयाथ संयोज्य वाचयामास च स्वयम् ॥ ५० ॥
इति कृत्वा विवर्णास्यो वक्तुमप्यक्षमो नृपः । विलीनचित्तः श्यामाङ्गो[10] निःशब्दाषाढमेघवत् ॥ ५१ ॥
पृष्टश्चित्रान्मुनीन्द्रेण[11] प्रसादे स्वामिनः स्फुटे । आयाते प्राभृते हर्षस्थाने किं विपरीतता ॥ ५२ ॥
तेनोचे मित्र ! कोपोऽयं न प्रसादः प्रभोर्ननु । प्रेष्यं मया शिरश्छित्वा स्वीयं शस्त्रिकयानया ॥ ५३ ॥
एवं कृते च वंशे नः[12] प्रभुत्वमवतिष्ठते । नो चेद् [13]राज्यस्य राष्ट्रस्य विनाशः समुपस्थितः ॥ ५४ ॥
शस्त्रिकायामथैतस्यां षण्णवत्यङ्कदर्शनात् । मन्ये षण्णवतेः सामन्तानां क्रुद्धो धराधिपः ॥ ५५ ॥
§ ४. सर्वेऽपि गुप्तमाहूय सूरिभिस्तत्र मेलिताः । तरीभिः **सिन्धु**मुत्तीर्य **सुराष्ट्रां** ते समाययुः ॥ ५६ ॥
घनागमे समायाते तेषां गतिविलम्बके । विभज्य षण्णवत्यंशैस्तं देशं तेऽवतस्थिरे ॥ ५७ ॥
राजानस्ते तथा सूरा वाहिनीव्यूहवृद्धिना । राजहंसद्रुहा भूयस्तरवारितरङ्गिणा ॥ ५८ ॥
बलभिद्धनुरुल्लासवता चाशुगमीभृतां । समारुध्यन्त मेघेन‡ बलिष्ठेनेव शत्रुणा ॥ ५९ ॥

---

1 B C क्रन्दन्ती । 2 N करुणं° । 3 N भक्षये शैवा° । 4 N तथा । 5 B दर्श्यनि° । 6 N °तापिनीं° । 7 A °भ्रुवं । * 'दस सहस्र' इति B टि० । 8 A °श्च परेऽपि । 9 N विज्ञप्तेः । 10 B श्यामांको । 11 C नरेन्द्रेण । 12 N मे । 13 N राष्ट्रस्य राज्यस्य । † एतत्पूर्वार्द्धस्थाने मुद्रितपुस्तके–'साध्वी साध्वी त्वया पाप श्येनेन चटकेव यत्' एतादृशः पाठो लभ्यते । ‡ 'बाण' इति B टि० ।

निर्गमय्यासनादुग्रमुपसर्गमुपस्थितम् । प्रापुर्घनात्ययं *मित्रमिवाब्जास्यविकाशकम् ॥ ६० ॥
परिपक्किमवाक्शालिः प्रसीदत्सर्वतोमुखः । अभूच्छरदृतुस्तेषामानन्दाय सुधीरिव ॥ ६१ ॥
सूरिणाथ सुहृद्राजा प्रयाणेऽजल्प्यत स्फुटम् । स प्राह शंबलं नास्ति येन नो भावि शं बलम् ॥ ६२ ॥
श्रुत्वेति कुम्भकारस्य गृह एकत्र जग्मिवान् । वह्निना पच्यमानं चेष्टकापाकं ददर्श च ॥ ६३ ॥
कनिष्ठिकानखं[1] पूर्णं चूर्णयोगस्य कस्यचित् । आक्षेपात् तत्र चिक्षेपाक्षेप्यशक्तिस्तदा गुरुः ॥ ६४ ॥
विध्यातेऽत्र ययावमे राज्ञः प्रोवाच यत्सखे ! । विभज्य हेम गृह्णीत यात्रासंवाहहेतवे ॥ ६५ ॥
तथेत्यादेशमाधाय तेऽकुर्वन् पर्व सर्वतः । प्रास्थानिकं[2] गजाश्वादिसैन्यपूजनपूर्वकम् ॥ ६६ ॥
**पञ्चाल-लाट**राष्ट्रेश[3]भूपान् जित्वाऽथ सर्वतः । **शका मालव**सन्धि ते प्रापुराक्रान्तविद्विपः ॥ ६७ ॥
श्रुत्वाऽपि बलमागच्छद्[4] विद्यासामर्थ्यगर्वितः । **गर्दभिल्ल**नरेन्द्रो न पुरीदुर्गमसज्जयत् ॥ ६८ ॥
अथाप[5] **शाखि**सैन्यं च **विशाला**तलमेदिनीम् । पतङ्गसैन्यवत् सर्व[6]प्राणिवर्गभयंकरम् ॥ ६९ ॥
मध्यस्थो भूपतिः सोऽथ गर्दभीविद्यया बले[7] । नादर्युन्मादरीतिस्थः[8] सैन्यं सज्जयति स्म न ॥ ७० ॥
कपिशीर्षेषु नो ढिंबा कोट्टकोणेषु न ध्वजाः । विद्याधरीषु नो काण्डपूरणं चूरणं द्विपाम् ॥ ७१ ॥
न वा भटकपाटानि पूःप्रतोलीष्व[9]सज्जयत् । इति चारैः परिज्ञाय सुहृद्भूपं जगौ गुरुः ॥ ७२ ॥
अनावृतं समीक्ष्येदं दुर्गं मा भूरनुद्यमः । यदष्टमी-चतुर्दश्योरर्चयत्येष गर्दभीम् ॥ ७३ ॥
अष्टोत्तरसहस्रं च जपत्येकाग्रमानसः । शब्दं करोति जापान्ते विद्या सा रासभीनिभम्[10] ॥ ७४ ॥
तं बूत्कारस्वरं घोरं द्विपदो वा चतुष्पदः । यः शृणोति स वक्त्रेण फेनं मुञ्चन् विपद्यते ॥ ७५ ॥
अर्द्धतृतीयगव्यूतमध्ये स्थेयं न केनचित् । आवासान् विरलान् दत्वा स्थातव्यं सबलैर्नृपैः ॥ ७६ ॥
इत्याकर्ण्य कृते तत्र देशे **कालक**सद्गुरुः । सुभटानां शतं साष्टं प्रार्थयच्छब्दवेधिनाम् ॥ ७७ ॥
स्थापिताः स्वसमीपे ते लब्धलक्षाः सुशिक्षिताः[11] । स्वरकाले मुखं तस्या बभ्रुर्बाणैर्निषङ्गवत् † ॥ ७८ ॥
सा मूर्ध्नि **गर्दभिल्ल**स्य कृत्वा विण्मूत्रमीर्ष्यया । हत्वा च पादघातेन रोषेणान्तर्दधे खरी ॥ ७९ ॥
अबलोऽयमिति ख्यापयित्वा तेषां पुरो गुरुः । समग्रसैन्यमानीय मानी तं दुर्गमाविशत् ॥ ८० ॥
पातयित्वा धृतो बद्धा प्रपात्य च गुरोः पुरः । **गर्दभिल्लो** भटैर्मुक्तः प्राह तं **कालक**प्रभुः[12] ॥ ८१ ॥
साध्वी साध्वी त्वया पाप ! श्येनेन‡ चटकेव[13] यत् । नीता गुरुविनीताऽपि तत्कर्मकुसुमं ह्यदः ॥ ८२ ॥
फलं तु नरकः प्रेत्य तद् विबुध्याधुनापि हि । उपशान्तः समादत्स्व प्रायश्चित्तं शुभावहम् § ॥ ८३ ॥
आराधकः[14] परं लोकं भविता रुचितं निजम् । विधेहीति श्रुतेर्दूनस्त्यक्तोऽरण्ये ततोऽभ्रमत् ॥ ८४ ॥
व्याघ्रेण भक्षितो भ्राम्यन् दुर्गतो दुर्गतिं गतः । तादृक्साधुद्रुहामीदृक् गतिर[15]त्यल्पकं फलम् ॥ ८५ ॥
सूरेरादेशतो मित्रं भूपः स्वामी ततोऽभवत् । विभज्य देशमन्येऽपि तस्थुः **शाखि**नराधिपाः ॥ ८६ ॥
आरोपिता व्रते साध्वी गुरुणाऽथ सरस्वती । आलोचितप्रतिक्रान्ता गुणश्रेणिमवाप च ॥ ८७ ॥
विद्यादेव्यो यतः[16] सर्वा अनिच्छुस्त्रीव्रतच्छिदः । कुप्यन्ति रावणोऽपीदृग् सीतायां न दधौ[17] हठम् ॥ ८८ ॥
एतादृक् शासनोन्नत्या जैनतीर्थं प्रभावयन् । बोधयन् शाखिराजांश्च कालकः सूरिराड् बभौ ॥ ८९ ॥

---

* 'चंद्र' इति B टि० । 1 B नखः । 2 N प्रस्थानकं; C प्रस्थानिकं । 3 N C °देशेश° । 4 B C °गच्छन् । 5 B अवाप । 6 N सर्वं । 7 N बलैः । 8 A रीतिस्था । 9 A प्रतोलीश्च; B प्रतोलीषु । 10 B निभान्; C निभात् । 11 N सुरक्षिताः । † 'भाथानी परिं' इति B टि० । 12 C N कालको गुरुः । ‡ सींचाणा हाथि चटकीनी परिइं' इति B टि० । 13 C चटिकेव । § 'जे अन्याइं धन मिलइ ते धन सुथिर न होइ । घोर पाप जेह कुलि हुइ तस कुलि उदय म जोइ ॥' इति B टिप्पणी । 14 B आराधय । 15 गतिरित्य° । 16 B C जितः । 17 A ददौ ।

§५. **शकानां** वंशमुच्छेद्य कालेन कियताऽपि[1] हि । राजा श्री**विक्रमादित्यः** सार्वभौमोपमोऽभवत् ॥ ९० ॥
स चोन्नतमहासिद्धिः सौवर्णपुरुषोदयात् । मेदिनीमनृणां कृत्वाऽचीकरद् वत्सरं निजम् ॥ ९१ ॥
ततो वर्षशते पञ्चत्रिंशता साधिके पुनः । तस्य राज्ञोऽन्वयं हत्वा वत्सरः स्थापितः **शकैः** ॥ ९२ ॥
इति प्रसङ्गतोऽजल्पि; प्रस्तुतं प्रोच्यते ह्यदः । श्री**कालक**[2]प्रभुर्देशे विजह्रे राजपूजितः ॥ ९३ ॥

§६. इतश्चास्ति पुरं **लाट**ललाटतिलकप्रभम् । **भृगुकच्छं** नृपस्तत्र **बलमित्रो**ऽभिधानतः ॥ ९४ ॥
**भानुमित्रा**ग्रजन्मासीत् स्वस्रीयः **कालक**प्रभोः ।
स्वसा तयोश्च **भानुश्रीः**, **बलभानुश्च** तत्सुतः ॥ ९५ ॥—युग्मम् ।
अन्यदा कालकाचार्यवृत्तं तैर्लोकतः श्रुतम् । तोषादाहूतये मन्त्री तैर्निजः प्रैष्यत प्रभोः ॥ ९६ ॥
विहरन्तस्ततस्ते चाप्रतिबद्धं विबुद्धये । आययुर्नगरे तत्र बहिश्च समवासरन् ॥ ९७ ॥
राजा श्रीबलमित्रोऽपि ज्ञात्वाभिमुखमभ्यगात् । उत्सवातिशयात् सूरि[3]प्रवेशं विदधे मुदा ॥ ९८ ॥
उपदेशामृतैस्तत्र सिञ्चन् भव्यानसौ प्रभुः । पुष्करावर्तवत्तेषां विश्वं तापमनीनशत् ॥ ९९ ॥
श्रीमच्छ**कुनिकातीर्थ**स्थितं श्रीमुनिसुव्रतम् । प्रणम्य तच्चरित्राख्यादिभिर्नृपमबोधयत् ॥ १०० ॥
अन्येद्युस्तत्पुरोधाश्च मिथ्यात्वग्रहसद्ग्रहः । कुविकल्पवितण्डाभिर्वदन् वादे जितः स तैः ॥ १०१ ॥
ततोऽनुकूलवृत्त्याथ[4] तं सूरिमुपसर्गयन्[5] । उवाच दम्भभक्त्या स राजानमृजुचेतसम् ॥ १०२ ॥
नाथामी गुरवो देवा इव पूज्या जगत्यपि[6] । एतेषां पादुका[7] पुण्या[8] जनैर्धार्या स्वमूर्धनि ॥ १०३ ॥
किञ्चिद् विज्ञप्यते लोकभूपालानां हितं मया । अवधारय तच्चित्ते[9] भक्तिश्चेत्[10] मातुले[11] गुरौ ॥ १०४ ॥
विशतां नगरान्तर्यच्चरणा बिम्बिताः पथि । उल्लङ्घ्यन्ते जनैरन्यैः सामान्यैस्तदघं बहु ॥ १०५ ॥
धर्मार्जनं *तनीयोऽत्रापरं[12] कुरु महामते ! । प्रतीत आर्जवाद् राजा प्राहास्ते संकटं महत् ॥ १०६ ॥
विद्वांसो मातुलास्तीर्थरूपाः सर्वार्चिता इमे । तथा वर्षा अवस्थाप्य पार्यन्ते प्रेषितुं किमु ॥ १०७ ॥
द्विजः प्राह महीनाथ ! मच्चये ते हितं सुखम् । तव धर्मो यशस्ते च प्रयास्यन्ति स्वयं सुखात् ॥ १०८ ॥
नगरे डिण्डिमो वाद्यः सर्वत्र स्वामिपूजिताः । प्रतिलाभ्या वराहारैर्गुरवो राजशासनात् ॥ १०९ ॥
आहारमाधाकर्मादि दृष्ट्वानेषणयान्वितम्[13] । स्वयं ते निर्गमिष्यन्ति काप्यश्लाघा न ते पुनः ॥ ११० ॥
अस्त्वेवमिति राज्ञोक्ते स तथेति व्यधात् पुरे । अनेषणां च ते दृष्ट्वा यतयो गुरुमभ्यधुः ॥ १११ ॥
प्रभो ![14] सर्वत्र मिष्टान्नाहारः संप्राप्यतेतराम् । गुरुराहोपसर्गोऽयं प्रत्यनीकादुपस्थितः ॥ ११२ ॥
गन्तव्यं तत् **प्रतिष्ठानपुरे** संयमयात्रया । श्री**सातवाहनो** राजा तत्र जैनो दृढव्रतः ॥ ११३ ॥

§७. ततो यतिद्वयं तत्र प्रैषि सङ्घाय सूरिभिः । प्राप्तेष्वस्मासु कर्त्तव्यं पर्वपर्युषणं ध्रुवम् ॥ ११४ ॥
तौ तत्र सङ्गतौ संघमानितौ वाचिकं गुरोः । तत्राकथयतां मेने तेनैतत् परया मुदा ॥ ११५ ॥
श्री**कालक**प्रभुः[15] प्राप शनैस्तन्नगरं ततः । श्री**सातवाहन**स्तस्य प्रवेशोत्सवमातनोत् ॥ ११६ ॥
उपपर्युषणं तत्र राजा [16]व्यज्ञपयद् गुरुम् । अत्र देशे प्रभो ! भावी शक्रध्वजमहोत्सवः ॥ ११७ ॥
नभस्यशुक्लपञ्चम्यां ततः षष्ठ्यां विधीयताम् । स्वं पर्व नैकचित्तत्त्वं धर्मे नो लोकपर्वणि ॥ ११८ ॥
प्रभुराह प्रजापाल ! पुराऽर्हद्गणभृद्गणः । पञ्चमीं नात्यगादेतत् पर्वास्मद्गुरुगीरिति ॥ ११९ ॥
कम्पते मेरुचूलापि रविर्वा पश्चिमोदयः । नातिक्रमति पर्वेदं पञ्चमीरजनीं ध्रुवम् ॥ १२० ॥

---

1 A कियतामपि । 2 N कालकः । 3 A सूरिः । 4 A वृत्यर्थ° । 5 B N °मुपसर्प्पयन् । 6 A B जगत्पतिः । 7 C N पादुकाः । 8 A पुण्याज्ञ° । 9 A चित्तेन; C चित्ते: । 10 A भक्तिस्ते । 11 N मातुजे । * 'स्वल्पं' इति B टि० । 12 N ऽत्रपरं । 13 A B °णयाश्रितं । 14 B N प्रभोः । 15 A °कालकगुरुः । 16 B विज्ञप° ।

राजाऽवदच्चतुर्थ्यां तत् पर्व पर्युषणं ततः । इत्थमस्तु गुरुः प्राह पूर्वैरप्याहृतं ह्यदः ॥ १२१ ॥
अर्वागपि यतः पर्युषणं कार्यमिति श्रुतिः । महीनाथस्ततः प्राह हर्षादेतत् प्रियं प्रियम्[1] ॥१२२॥
यतः कुहूदिने पर्वोपवासे पौषधस्थिताः[2] । [3]अन्तःपुरपुरन्ध्र्यो मे पक्षादौ पारणाकृतः ॥ १२३ ॥
तत्राष्टमं विधातॄणां निर्ग्रन्थानां महात्मनाम् । भवतु प्राशुकाहारैः श्रेष्ठमुत्तरपारणम् ॥ १२४ ॥
उवाच प्रभुरप्येतन्महादानानि पञ्च यत् । निस्तारयन्ति दत्तानि जीवं दुष्कर्मसागरात् ॥ १२५ ॥
पथश्रान्ते तथाग्लाने कृतलोचे बहुश्रुते । दानं महाफलं दत्तं तथा चोत्तरपारणे ॥ १२६ ॥
ततःप्रभृति पञ्चम्याश्चतुर्थ्यामागतं ह्यदः । कषायोपशमे हेतुः पर्व सांवत्सरं महत् ॥ १२७ ॥
श्रीमत्**कालक**सूरीणामेवं कत्यपि वासराः । जग्मुः परमया तुष्ट्या कुर्वतां शासनोन्नतिम् ॥ १२८ ॥
§८. अन्येद्युः[4] कर्मदोषेण सूरीणां तादृशामपि । आसन्नऽविनयाः शिष्या दुर्गतौ दोहदप्रदाः ॥ १२९ ॥
अथ शय्यातरं प्राहुः सूरयोऽवितथं वचः । कर्मबन्धनिषेधाय यास्यामो वयमन्यतः ॥ १३० ॥
त्वया कथ्यममीषां च प्रियकर्कशवाग्भरैः । शिक्षयित्वा **विशाला**यां प्रशिष्यान्ते ययौ गुरुः ॥ १३१ ॥
इत्युक्त्वाऽगात् प्रभुस्तत्र तद्विनेयाः प्रगे ततः । अपश्यन्तो गुरूनूचुः परस्परमवाङ्मुखाः ॥ १३२ ॥
एष शय्यातरः पूज्यशुद्धिं जानाति निश्चितम् । एष दुर्विनयोऽस्माकं शाखाभिर्विस्तृतोऽधुना ॥ १३३ ॥
पृष्टस्तैः स यथौचित्यमुक्त्वोवाच प्रभुस्थितिम् । ततस्ते संचरन्ति स्मो**ज्जयिनीं** प्रति वेगतः ॥ १३४ ॥
गच्छन्तोऽध्वनि लोकैश्चानुयुक्ता अवदन् मृषा । पश्चाद्प्रस्थिता अग्रे पश्चात्स्याः प्रभवो ननु ॥ १३५ ॥
यान्तस्तन्नामशृङ्गारात् पथि लोकेन पूजिताः । नारी-सेवक-शिष्याणामवज्ञा स्वामिनं विना ॥ १३६ ॥
इतः श्रीकालकः सूरिर्वस्त्रवेष्टितरत्नवत् । यत्याश्रये विशालायां प्राविशच्छन्नदीधितिः ॥ १३७ ॥
प्रशिष्यः[5] **सागरः** सूरिस्तत्र व्याख्याति चागमम् । तेन नो विनयः सूरेरभ्युत्थानादिको दधे ॥ १३८ ॥
तत ईर्यां प्रतिक्रम्य कोणे कुत्रापि निर्जने । परमेष्ठिपरावर्त्तं कुर्वंस्तस्थावसङ्गधीः ॥ १३९ ॥
देशनानन्तरं भ्राम्यंस्तत्रत्यः[6] सूरिराह च । किंचित्तपोनिधे जीर्ण ! पृच्छ सन्देहमादृतः ॥ १४० ॥
अकिंचिज्ज्ञो जरत्त्वेन नावगच्छामि ते वचः । तथापि पृच्छ येनाहं संशयापगम[7]क्षमः ॥ १४१ ॥
अष्टपुष्पीमथो पृष्टो दुर्गमां सुगमामिव । गर्वाद् यत्किंचन व्याख्याद्[8]नादरपरायणः ॥ १४२ ॥
दिनैः कैश्चित्ततो गच्छ आगच्छत् तदुपाश्रयम् । सूरिणाऽभ्युत्थितोऽवादीद् गुरवोऽग्रे समाययुः ॥१४३॥
वास्तव्या अवदन् वृद्धं विनैकं कोऽपि नाययौ । तेष्वागच्छत्सु गच्छोऽभ्युदस्थात् सूरिश्च सत्रपः ॥ १४४ ॥
गुरूनक्षमयद् गच्छः पल्गः सूरिरप्यमून्[9] । तं च तं चानुशिष्यैते सूरिमित्थमबोधयन् ॥ १४५ ॥
सिकतासंभृतः प्रस्थः स्थाने स्थाने विरेचितः । रिक्ते तत्रावदद् वत्स ! दृष्टान्तं विद्ध्यमूदृशम् ॥ १४६ ॥
श्री**सुधर्मा** ततो **जम्बूः** श्रुतकेवलिनस्ततः । पट्स्थाने पतितास्ते च श्रुते[10] न्यूनत्वमाययुः ॥ १४७ ॥
ततोऽप्यनुप्रवृत्तेषु न्यूनं न्यूनतरं श्रुतम् । अस्मद्गुरुपु यादृक्षं तादृग् न मयि निष्प्रभे ॥ १४८ ॥
यादृग्मे त्वद्गुरोस्तन्न यादृक् तस्य न तेऽस्ति तत् । सर्वथा मा कृथा वत्स ! गर्वं सर्वंकषं ततः ॥ १४९ ॥
अष्टपुष्पीं च तत्पृष्टः प्रभुर्व्याख्यानयत् तदा । अहिंसासूनृतास्तेयब्रह्माकिंचनता तथा ॥ १५० ॥
रागद्वेषपरीहारो[11] धर्मध्यानं च सप्तमम् । शुक्लध्यान[12]मष्टमं च पुष्पैरात्मार्चनाच्छिवम् ॥ १५१ ॥
एवं च शिक्षयित्वा तं मार्दवातिशये स्थितम् । आपृच्छ्य व्यचरत् सङ्गहीनोऽन्यत्र पवित्रधीः ॥ १५२ ॥

---

1 B N प्रियाम् । 2 A पौषधः स्थित. । 3 B अन्तः पुरः । 4 A B अन्यदा । 5 A प्रशिष्य° । 6 A N तत्रैत्य । 7 B C संशयोपगम° । 8 B व्याख्यादः । 9 N C °प्यभूद् । 10 श्रुतेर्न्यू°; N श्रुते हीनत्व । 11 N परित्यागो । 12 N शुक्लध्यान° ।

श्रीसीमंधरतीर्थेशनिगोदाख्यानपूर्वतः । इन्द्रप्रभादिकं ज्ञेयमार्यरक्षितकथया ॥ १५३ ॥
श्रीजैनशासनक्षोणीसमुद्धारादिकच्छपः । श्रीकालकप्रभुः प्रायात् प्रायादेवभुवं शमी ॥ १५४ ॥

श्रीमत्कालकसूरिसंयमनिधेर्वृत्तं प्रवृत्तं श्रुतात्
श्रुत्वात्मीयगुरोर्मुखादवितथख्यातप्रभावोदयम् ।
संदृब्धं मयका तमस्ततिहरं श्रेयःश्रिये जायताम्
श्रीसंघस्य पठन्तु तच्च विबुधा नन्द्याच्च कोटीः समाः ॥ १५५ ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीकालकाख्यानकं
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गश्चतुर्थोऽभवत् ॥ १५६ ॥

॥ इति श्रीकालकाचार्यप्रबन्धः* ॥

॥ ग्रंथाग्र १५७ । अ० २३ ॥ उभयं ७३४ ॥ अक्षर ॥ १५ ॥

---

* इयं समाप्तिसूचिका पंक्तिर्नोपलभ्यते A C N आदर्शेषु ।

# ५. श्रीपादलिप्तसूरिचरितम् ।

§ १. जयन्ति **पादलिप्त**स्य प्रभोश्चरणरेणवः । श्रियः संवनने वश्यचूर्णं तत्प्रणताङ्गिनाम् ॥ १ ॥
गुणैकदेशमप्यस्य किमहं वर्णितुं क्षमः । जडस्तथापि [1]तद्भक्तिर्लोक*युग्मोपकारिणी ॥ २ ॥
विमृश्यैवं भणिष्यामि पूज्यैर्मस्तकहस्तितः । खण्डखण्डश्रुतं वृत्तं चित्रं शृणुत कौतुकात् ॥ ३ ॥
**सरयू-जाह्नवी**वारिसेवाहेवाकिमानवा । अस्ति विस्तारकुशला **कोशला** नामतः पुरी ॥ ४ ॥
तत्रासीद् हास्तिकाश्वीया[2]पहस्तितरिपुव्रजः । **विजयब्रह्म** इत्याख्याविख्यातः[3] क्षितिनायकः ॥ ५ ॥
संफुल्लमल्लिकावल्लीकुसुमप्रोल्लसद्यशाः । **फुल्लाख्यः** फुल्ललक्ष्मीकः श्रेष्ठी श्रेष्ठगुणावनिः ॥ ६ ॥
रूपेणाप्रतिमा[4] तस्य **प्रतिमा**ख्याऽतिवल्लभा । सुधा मुधाकृता यस्या गिरयाऽगाद् रसातलम् ॥ ७ ॥
अपत्यीयितचित्तायास्तस्या हस्तनिरीक्षणम् । होराविद्यामहामन्त्रावन्ध्यागर्भकराण्यपि ॥ ८ ॥
औषधानि प्रयुक्तानि क्षेत्रपद्रादिदेवताः । उपयाचितलक्षैश्चाराद्धा आसंश्च निष्फलाः ॥ ९ ॥–युग्मम् ।
तीर्थस्नानप्रयोगाश्च यथाकथनतः कृताः । †अपत्यार्थमहो ! मोहः स्त्रीणां सौहृत्यवज्जने[5] ॥ १० ॥
अस्ति श्रीपार्श्वनाथस्य चैत्ये शासनदेवता । **वैरोट्या** नामटाख्या[6] या निर्विण्णा सा समाश्रयत् ॥ ११ ॥
कर्पूरमृगनाभ्यादिभोगैः संपूज्य तामसौ । उपवासैर्व्यधादष्टाह्निकामेकाग्रमानसा ॥ १२ ॥
अष्टमेऽह्नि तुष्टा सा प्रत्यक्षीभूय तां जगौ । वरं वृणु तया पुत्रो ययाचे कुलदीपकः ॥ १३ ॥
अथो फणीन्द्रकान्ताऽसावादिदेश सुते ! शृणु । पुरा **नमि-विनम्या**ख्यविद्याधरवरान्वये ॥ १४ ॥
आसीत् **कालिक**सूरिः श्रीश्रुताम्भोनिधिपारगः । गच्छे **विद्याधरा**ख्यस्या**र्यनागहस्ति**सूरयः ॥ १५ ॥
खेलादिलब्धिसम्पन्नाः सन्ति त्रिभुवनार्चिताः ।
पुत्रमिच्छसि चेत्तेषां पादशौचजलं पिबेः[7] ॥ १६ ॥–त्रिभिर्विशेषकम् ।
श्रुत्वेति चैत्यतः प्रातस्तेपामागादुपाश्रये । प्रविशन्ती च साऽपश्यत् साधुमेकं तटस्थितम् ॥ १७ ॥
करस्थप्रभुपादाब्जक्षालनोदकपात्रकम् । तत्पार्श्वे प्रार्थनापूर्वं तत्पयः साऽपिबन्मुदा ॥ १८ ॥–युग्मम् ।
अथ तत्राग्रतो गत्वा नमश्चक्रे प्रभोः पदौ । धर्मलाभाशिपं दत्वा निमित्तं[8] चाह सद्गुरुः ॥ १९ ॥
असत्तो दशभिर्हस्तैर्दूरे पीतं त्वयोदकम् । दशभिर्योजनैरन्तरितो वर्धिष्यते सुतः ॥ २० ॥
**यमुना**[9]परतीरेऽत्र[10] **मथुरायां** प्रभावभूः । भविष्यन्ति तथान्ये ते नवपुत्रा महाद्युतः ॥ २१ ॥
साहाथ प्रथमः[11] पुत्रो भवतामर्पितो मया । अस्तु श्रीपूज्यपार्श्वस्थो दूरस्थस्यास्य को गुणः ॥ २२ ॥
श्रुत्वेत्याह प्रभुः सज्ज्ञानन्तोद्धारादिशङ्करः । स भविष्यति ते पुत्रः सुत्रामसचिवो धिया ॥ २३ ॥
इत्यादाय प्रभोर्वाक्यं शकुनग्रन्थिबन्धिनी । गृहं ययौ गृहेशस्य तुष्टा वृत्तं न्यवेदयत् ॥ २४ ॥
गर्भोऽभूत् तद्दिनेऽमुष्या नागेन्द्रस्वप्नसूचितः । तदौचित्यकृत[12]श्चास्या वृद्धः सार्धं मनोरथैः ॥ २५ ॥
दिनेषु परिपूर्णेषु सुतो जज्ञे सुलक्षणः । रूपेणातिस्मरः श्रीमांस्तेजसा चातिभानुमान् ॥ २६ ॥

---

1 N तस्योक्ति° । * 'अहिलोक परलोक' इति B टि० । 2 N °कास्सीया° । 3 C विज्ञातः; A B °विख्यातक्षि° । 4 N °प्रतिमानस्य ।

† विन्ध्यो गजेन मलयो मलयोद्भवेन रत्नेन रोहणगिरिर्जगति प्रसिद्धः ।
मुक्ताफलेन सरितामधिपो यथैव गोत्रं तथैव तनयेन कुलोद्भवेन ॥ १ ॥ इति B टिप्पणी ।

5 B N सौहृत्यहृज्जने; । B सौहृत्यवज्जने । 6 N नाम विद्याया । 7 A पिब, C पिबे । 8 B N नमित्तं । 9 B यमुनापुर° । 10 N च । 11 A प्रथमपु° । 12 A °कृतेश्चा° ।

**वैरोट्या**यास्ततः पूजां कृत्वा तत्पादयोः पुरः । न्यस्यातो गुरुपादान्ते मुक्तस्तेषां तथार्पितः ॥ २७ ॥
वर्द्धतामस्मदायत्त इति प्रत्यर्पितः स तैः । प्रवर्धितोऽतिवात्सल्यात् तथा तद्गुरुगौरवात् ॥ २८ ॥
**नागेन्द्रा**ख्यां ददौ तस्मै **फुल्ल** उत्फुल्ललोचनः । आत्तो[1] गुरुभिरागत्य स गर्भाष्टमवार्षिकः ॥ २९ ॥
तद्गुरुभ्रातरः सन्ति **संगमसिंह**सूरयः । आदेशं प्रददुस्तेषां प्रभवः शुभमायतौ ॥ ३० ॥
प्रव्रज्यां प्रददुस्तस्य शुभे लग्ने स्वरोदये । उपादानं गुरोर्हस्तं शिष्यस्य प्राभवेन तु ॥ ३१ ॥
गणिश्च **मण्डनो** नाम तदीयगणमण्डनः । आदिष्टः प्रभुभिस्तस्य शुश्रूषाध्यापनादिषु ॥ ३२ ॥
वैदग्ध्यातिशयादन्यपाठकानां पुरोऽपि यत् । ख्यातं तदपि गृह्णाति स्वपाठ्येषु तु का कथा ॥ ३३ ॥
लसल्लक्षण-साहित्य-प्रमाण-समयादिभिः । शास्त्रैरनुपमो जज्ञे विज्ञेशो वर्षमध्यतः ॥ ३४ ॥
गुणैरुत्तमतां प्राप्य नृषु प्रथमरेखया । धूनम्रवनवाविश्वलक्षणेभ्योऽधिकस्ततः ॥ ३५ ॥

§ २. अन्येद्युरारनालाय प्रहितो गुरुभिस्तदा । विधिना तत् समादायोपाश्रये पुनराययौ ॥ ३६ ॥
तदीर्यापथिकीपूर्वमालोचयदनाकुलः । गाथया कोविदश्रेणीहृदयोन्माथया ततः ॥ ३७ ॥

तथा हि—

**अंबं तंबच्छीए अपुप्फियं पुप्फदंतपंतीए ।**
**'नवसालिकंजियं नववहूइ कुडएण' मे दिन्नं ॥ ३८ ॥**

श्रुत्वेतिगुरुभिः प्रोक्तः शब्देन प्राकृतेन सः । **पलित्तो** इति शृङ्गाराग्निप्रदीप्ताभिधायिना ॥ ३९ ॥
स च व्यजिज्ञपत् पूज्यैः शिष्यः कर्णात्प्रसाद्यताम् । श्रुत्वेति प्रज्ञया तस्य तुतुषुर्गुरवो भृशम् ॥ ४० ॥
विमृश्येत्यतिहृल्लासपूरितास्ते* तदग्रतः । **पादलिप्तो** भवान् व्योमयानसिद्ध्या विभूषितः ॥ ४१ ॥
इत्यसौ दशमे वर्षे गुरुभिर्गुरुगौरवात् । प्रत्यष्ठाप्यत पट्टे स्वे कषपट्टे प्रभावताम्[4] ॥ ४२ ॥
**मथुरा**यां गुरुः प्रैषीदसंख्यातिशयाश्रयम् । तेजोविस्तारसंघोपकारहेतोस्तमन्यदा ॥ ४३ ॥

§ ३. दिनानि कतिचित् तत्र स्थित्वाऽसौ **पाटलीपुरे** । जगाम तत्र राजास्ति **मुरण्डो** नाम विश्रुतः ॥ ४४ ॥
केनापि तस्य चित्रायसूत्र[5]ग्रथित[6]वृत्तकः । गूढवक्त्रमिलत्तन्तुचयाज्ञाताव[7]सानकः ॥ ४५ ॥
ढौकितः कन्दुकः पादलिप्तस्य च गुरोः पुरः ।
राज्ञा प्राहीयत प्रज्ञापरीक्षावीक्षणोद्यमात् ॥ ४६ ॥—युग्मम् ।
अथोत्पन्नधिया सूरिर्विला[8]ल्योष्णोदकाप्लवैः[9] । सिक्तकं[10] निपुणं प्रेक्ष्य तत्तन्तुप्रान्तमाप सः ॥ ४७ ॥
उन्मोच्य प्रहितो राज्ञे तद्वद्ध्वासौ चमत्कृतः । प्रज्ञाविज्ञाततत्त्वाभिः कलाभिः को न गृह्यते ॥ ४८ ॥
तथा गङ्गातरोर्यष्टिः समा श्लक्ष्णा समर्पिता[11] । तन्मूलाग्रपरिज्ञानहेतवे स्वामिना भुवः ॥ ४९ ॥
तारयित्वा जले मूले गुरुत्वात् तन्निमज्जनात् । अग्र-मूले परिज्ञायाचख्यौ राज्ञः पुरस्ततः ॥ ५० ॥
तथा समुद्गकोऽनीक्ष्यसन्धिः सूरेः प्रदर्शितः । उष्णोदकात् समुद्घाट्य तच्चित्रं प्रकटीकृतम् ॥ ५१ ॥
श्री**पादलिप्ता**चार्येण तन्तुग्रथिततुम्बकम् । पेशीकोशायितं वृत्तं प्रहितं राजपर्षदि ॥ ५२ ॥
उन्मोचितं न तत् तत्र केनापि मुमुचे ततः । तद्गुप्तं तेन मोच्येत नान्यैरित्यभि[12]भाषिभिः ॥ ५३ ॥

---

1 A अतो । 2 B °नवचवा° । 3 'घडाथी' इति B टि० ।
* 'प्रीणाति यः स्वचरितैः पितरं स पुत्रो यद् भर्तुरेव हितमिच्छति तत्कलत्रम् ।
तन्मित्रमापदि सुखे च समक्रियं यत् एतत् त्रयं जगति पुण्यकृतो लभन्ति ॥ १ ॥ इति B टिप्पणी ।
4 B प्रभावनां । 5 N चित्रायस्तत्र । 6 C °ग्रंथित° । 7 N °तंतुवयात्क्रान्ता° । 8 C N विलोल्यो° । 9 B °दकोप्लु° ।
10 C N सिक्थकं । 11 A समार्पिता । 12 N °त्यतिभाषि° ।

भूपाहूतः स [1]आगत्योज्जमन्थ च यतीश्वरः । मुरण्डनृपतिस्तत्राक्षिप्तश्चिन्तयते तदा ॥ ५४ ॥
बालाचार्योऽयमीदृक्षैः खेलनीयः कुहेतुभिः । दध्यावहमयं किंत्वधृष्यः केसरिवच्छिशुः ॥ ५५ ॥
'वयस्तेजसि नो हेतु'रिति सत्यं पुरा वचः । को हि सिंहार्भकं सत्रेऽणुरूपमपि लंघयेत् ॥ ५६ ॥
शिरोवेदनयाक्रान्तः सोऽन्यदा भूपतिः प्रभुम् । व्यजिज्ञपत् प्रधानेभ्यः क्षुते* नष्टे स्मृती रवेः ॥ ५७ ॥
तर्जनीं प्रभुरप्येष त्रिः स्वजानावचालयत् । भूपतेर्वेदना शान्ता तस्य किं दुष्करं प्रभोः ॥ ५८ ॥

तथा हि–

**जह जह पएसिणिं† जाणुयंमि पालित्तउ भमाडेइ ।**
**तह तह [2]से सिरवियणा[3] पणस्सई मुरण्डरायस्स ॥ ५९ ॥**

मन्त्ररूपामिमां गाथां पठन् यस्य शिरः स्पृशेत् । शाम्येत वेदना तस्याद्यापि मूर्ध्नोऽतिदुर्धरा ॥ ६० ॥
स तत्कालोपकारेण हृतान्तःकरणो नृपः । सूरेर्बालस्य पादानां प्रणामेच्छू रवेरिव ॥ ६१ ॥
समाययौ ययौ श्रेष्ठे द्रागारुह्य तदाश्रयम् । सकर्णः को न गृह्येत गुणैः सत्यैर्लघोरपि ॥ ६२ ॥–युग्मम् ।
§ ४. प्रभोरुपान्तमासीनो रहः पप्रच्छ भूपतिः[4] । भृत्याः कृत्यानि नः[5] कुर्युर्वेतनस्यानुसारतः‡ ॥ ६३ ॥
तद्विनामी विनेयाश्च युष्माकं तु कथं विभो ! । भिक्षैकवृत्तिमात्राणां[6] ते कार्यकरणोद्यताः ॥६४॥–युग्मम् ॥
सूरयः प्राहुरस्माकं विना दानं सदोद्यताः । कार्याणि भूप ! कुर्वन्ति लोकद्वयहितेच्छया ॥ ६५ ॥
भूपः प्राह न मन्येऽहं द्रव्यस्था[7] हि जनस्थितिः[8] । निःस्वस्त्याज्यः पुमाँल्लोकेऽरण्यं दग्धं मृगैरिव ॥ ६६ ॥
अथाह सूरिरुर्वीश ! त्वद्भृत्या बहुवृत्तयः । तादृगुक्तं न कुर्वन्ति यादृङ् मे दानमन्तरा ॥ ६७ ॥
इहार्थे प्रत्ययो भूप ! कौतुकादवलोक्यताम् । दक्षः शुचिर्गुणी कश्चित् प्रतिष्ठां प्रापितः सदा ॥ ६८ ॥
ताम्बूलाभरणक्षौमैरात्मतुल्यः सदेक्षितः । विश्वासस्य परा भूमिर्मूर्त्यन्तरमिवापरम् ॥ ६९ ॥
आहूयतां पुमान् प्रष्ठः सौष्ठवी कोऽपि भृत्यराट् ।
यथा प्रतीतिसम्पत्तिर्मद्वाक्यस्य भवेत्ततः ॥ ७० ॥–त्रिभिर्विशेषकम् ॥
क्ष्माक्षत्रपतिस्तत्राहूतवान् प्राग्गुणान्वितम् । प्रधानमाजगामायं मूर्धन्यस्तकरद्वयः ॥ ७१ ॥
स प्रोवाच प्रसादं मे स्वामिन् ! आदेशतः कुरु । सुदुष्करतरेऽप्यर्थे भृत्यलेशे निजे मयि ॥ ७२ ॥
राजा प्राह–'सखे ! गङ्गा वहतीह कुतोमुखी ? ।' इत्युक्तेऽन्तःस्मितः सोपहासं चिन्तयति स्म सः ॥ ७३ ॥
अहो ! बालर्षिसंसर्गाद् राज्ञः शैशवमागतम् । 'गङ्गा कुतोमुखी !' बालाङ्गनाख्यातमिदं वचः ॥ ७४ ॥
ततः प्रमाणमादेश इत्युक्त्वा स ययौ बहिः । ऐश्वर्यग्रहिलो राजा नाहमप्यस्मि तादृशः ॥ ७५ ॥
फल्गुवाग्भिस्ततः स्वीयं सुखं परिहरामि किम् । ध्यात्वेति व्यसनी तत्र प्रायः प्रायाद् दुरोदरे ॥ ७६ ॥
खेलन्निर्वाह्य तत्रासौ चतस्रः पञ्च नाडिकाः । गत्वा स्वामिपुरः 'पूर्वामुखी'त्युत्तरमाह सः ॥ ७७ ॥
अपसर्प्पैः[9] प्रसर्प्पद्भिस्तद्वृत्तं भूपतेः पुरः । न्यवेद्यथ[10] यतिस्वामी स्मितं कृत्वाऽभ्यधादिति ॥ ७८ ॥
भूपाल ! चेष्टितं दृष्टं धनमानातिशायिनः । निजप्रसादवित्तस्यापरेषां तु कथापि का ॥ ७९ ॥
अद्यश्चीनविनेयस्याशिक्षितस्य व्यवस्थितिम् । पश्य नश्यन्मदस्येह[11] चित्तान्तश्चित्रकारिणीम् ॥ ८० ॥
आगच्छाभिनवक्षुल्ल ! व्याहृते चेति सूरिभिः । इच्छामीति वदन् शीघ्रमुत्तस्थौ सरजोहृतिः ॥ ८१ ॥

---

1 A समागव° । * 'छींक नावह' इति B टि० । † 'तर्जनी' इति B टि० । 2 B N सिसिर° । 3 A वेयण; C विअणा । 4 नास्ति C आदर्शे । 5 A वः । ‡ 'मूल्यनइ मेलि' इति B टि० । 6 B N °पात्राणां । 7 B C द्रव्यस्थादे; A द्रव्यस्थादि । 8 A जनं स्थितः; B जनस्थितः; C जनः स्थितिः । 9 A अवसर्पैः । 10 A निवेद्याथ; C न्यवेद्यत । 11 N °मदस्येहं; C मदस्येहश्चि° ।

विनयानम्रमौलिश्च मेदिनीं प्रतिलेखयन् । पुर आगाद् गुरोर्जानू भुव्यास्ये न्यस्य पोतिकाम् ॥ ८२ ॥
प्रभो! ऽनुशास्तिमिच्छामीत्युक्ते तेनावदत् प्रभुः । 'गङ्गा कुतोमुखी वत्स ! वहत्या'ख्याहि निर्णयम् ॥ ८३ ॥
तदा चावश्यकीपूर्वं निर्गच्छन्नाश्रयाद् बहिः[1] । विन्यस्य कम्बलं स्कन्धे कृत्वा दण्डं करे निरैत् ॥ ८४ ॥
प्रश्नानुचिततां जानन् बालवृद्धयुवस्त्रियाम्[2] । अपृच्छन् मध्यवयसं प्रवीणं पुरुषं ततः ॥ ८५ ॥
'गङ्गा कुतोमुखी ?' 'पूर्वामुखी'ति प्रापितोत्तरः । तेनेति त्रिःकृते प्रश्ने सर्वत्रासीत् समोत्तरः ॥ ८६ ॥
तथापि निश्चिकीर्षुः स स्वर्धुनीजलसन्निधौ । प्रत्युपेक्ष्य ततो दण्डं करस्थितं[3] तदग्रकः ॥ ८७ ॥
जलान्तरेऽमुचत् तं च श्रोतसाऽतिरयात् ततः । प्राग्वाहिते करे दण्डसहिते प्रत्ययं ययौ ॥८८॥–युग्मम् ।
आगत्याश्रयमत्रेर्यापथिकीपूर्वकं ततः । आलोचयद् यथावृत्तं प्रवृत्तश्च स्वकर्मणि ॥ ८९ ॥

उक्तं च '[4]श्रीजिनभद्रगणिक्षमाश्रमणभाष्यकारेण–

**निवपुच्छिएण भणिओ गुरुणा गंगा [5]कुओमुही वहइ ।**
**संपाइयवं सीसो जह तह सव्वत्थ कायव्वं ॥ ९० ॥**

प्राग्वत्सारैर्यथाख्याते सत्य एव निवेदिते । प्रतीतः प्राह भूपालस्त्वद्वृत्तं हि कथातिगम् ॥ ९१ ॥
इति प्रभु[6]कृतैश्चित्रैः सर्वलोकोपकारकैः । नृपो विभ्रच्चमत्कारं कालं यान्तं न बुध्यते ॥ ९२ ॥
अन्यदा **मथुरायां** स सूरिर्गत्वा महायशाः । श्रीसुपार्श्वजिनस्तूपेऽनमत् श्रीपार्श्वमञ्जसा ॥ ९३ ॥
§९. ततोऽसौ **लाटदेशान्तश्चोङ्काराख्यपुरे** प्रभुः । आगतः स्वागतान्यस्य तत्राधाद् **भीम**भूपतिः ॥ ९४ ॥
शरीरस्थस्य बाल्यस्य[7] माहात्म्यं वितरन्निव । स [8]क्रीडत्यन्यदा डिम्भैर्विजने विश्ववत्सलः ॥ ९५ ॥
भरेण रमते यावत् श्रावकास्तावदाययुः । देशान्तरात् तदाकुण्ठोत्कण्ठास्तद्वन्दनोत्सुकाः ॥ ९६ ॥
कलौ[9] युगप्रधानस्य **पादलिप्त**प्रभोः कुतः । उपाश्रयोऽस्ति शिष्याभं पप्रच्छुश्च तमेव ते ॥ ९७ ॥
तत्रोत्पन्नमतिः सूरिर्दूरभ्रमणहेतुभिः । प्रकटैस्तदभिज्ञानैस्तेषामकथयत् तदा ॥ ९८ ॥
स्वयं पटीं च प्रावृत्य संवृत्याकारमात्मनः । [10]आचार्यासन्युपाविक्ष(श)द् दक्षः स क्षिप्रमुन्नते ॥ ९९ ॥
श्राद्धाश्च तावदाजग्मुः प्रणेमुरतिभक्तितः । क्रीडन् दृष्टः स एवायं तैरुपालक्षि दाक्ष्यतः ॥ १०० ॥
विद्या-श्रुत-वयोवृद्धसदृशीं धर्मदेशनाम् । विधाय तत्पुरोऽवादीत् तद्विकल्पापलापकृत् ॥ १०१ ॥
अवकाशः शिशुत्वस्य दातव्यश्चिरसंगतेः[11] । इति सत्यवचोभङ्ग्या जहृषुस्ते शिशुप्रभोः ॥ १०२ ॥
गते विहर्तुमन्येद्युः प्रौढसाधुकदम्बके । विजने स ययौ रथ्यां गच्छत्सु शकटेषु च ॥ १०३ ॥
कुर्वन् मर्कटकीक्रीडां पृष्टः पूर्ववदाश्रयम् । परप्रवादिभिर्दूरदेशेनैषामुदाहरत् ॥ १०४ ॥
चिरेणायान्ति यावत् ते सम्पन्नातिभ्रमश्रमाः । गुरुः सिंहासने तावत् सुष्वापासौ पटीवृतः ॥ १०५ ॥
ताम्रचूड[12]स्वरश्चक्रे तैः प्रातःक्षणशंसकः । ओतुस्वरं[13] ततोऽधासीत् सूरिस्तत्परिपन्थिनम्[14] ॥ १०६ ॥
तेषां द्वारमपावृत्य तस्थौ सिंहासने प्रभुः । तस्य ते विस्मयस्मेरा ददृशुर्मूर्तिमद्भुताम् ॥ १०७ ॥
तर्कोक्तिभिर्जितास्ते च प्रश्नमेकं च गाथया । एतज्जिगीषवः सन्तो विदधुर्दुर्घटं तदा ॥ १०८ ॥

तथा हि–

**पालित्तय! कहसु फुडं सयलं महिमंडलं भमंतेण ।**
**दिट्ठो सुओ व कत्थ वि चंदणरससीयलो अग्गी ॥ १०९ ॥**

---

1 A °त्ताश्रमाद्बहिः । 2 A °स्त्रियम् । 3 A C °स्थिततदग्रकः; B स्थितमग्रकः । 4 A श्रीभद्र° । 5 A B कओ° । 6 B N प्रभुकैस्ते° । 7 A बाल्यस्य । 8 B क्रीडयत्य° । 9 N कालो । 10 N आचार्याः संत्युपाविशद्दक्षः । 11 N °संगतैः । 12 N ताम्रचूडः । 13 N उत°; B ओत°, C उतु° । 14 N °पन्थिनाम् ।

सूरिः **श्रीपादलिप्तो**ऽपि तत्क्षणं प्राह गाथया । उत्तरं द्राग् विलम्बो हि प्रज्ञा-बलवतां कुतः ॥ ११० ॥

सा च[1]–

**अयसाभिओग[2]संदूमियस्स पुरिसस्स सुद्धहिययस्स ।**
**होइ वहन्तस्स फुडं चंदणरससीअलो अग्गी ॥ १११ ॥**

इत्युत्तरेण ते सूरेर्मुदमापुर्जिता अपि । पराजयोऽपि सत्पात्रैः कृतो महिमभूर्भवेत् ॥ ११२ ॥
ततः सङ्घेन विज्ञप्ते सद्गुणेषु प्रमोदिना । **शत्रुंजयगिरौ** यात्रां **पादलिप्त**प्रभुर्व्यधात् ॥ ११३ ॥

§ ६. **मानखेटपुरं** प्राप्ताः **कृष्णभूपाल**रक्षितम् । प्रभवः **पादलिप्ता**ख्या राज्ञाभ्यर्च्यंत भक्तितः ॥११४॥
तत्र [3]**पांशुपुरात्** प्राप्ताः[4] श्री**रुद्रदेव**सूरयः । ते चावबुद्धतत्त्वार्थाः श्री**योनिप्राभृते** श्रुते ॥ ११५ ॥
अन्येद्युर्निजशिष्याणां पुरस्तस्माच्च शास्त्रतः । व्याख्याता शफरोत्पत्तिः पापसन्तापसाधिका ॥ ११६ ॥
सा कैवर्तेन कुड्यान्तरितेन प्रकटं श्रुता । अनावृष्टिस्तदा चासीत् [5]विश्वलोकभयङ्करी ॥ ११७ ॥
मीनानुत्पत्तिरत्रासीत् तत्र श्रौतप्रयोगतः । मत्स्यान् कृत्वा बहूनेषोऽजीवयद् बन्धुमण्डलम् ॥ ११८ ॥
कदापि हर्षतस्तत्र प्रभूपकृतिरञ्जितः । आययौ धीवरो भक्त्या नत्वा च प्रोचिवानिति ॥ ११९ ॥
युष्मत्कथितयोगेनादानो मीनान् व्यधामहम् । खादित्वा तांश्च दुर्भिक्षे कुटुम्बं निरवाहयम् ॥ १२० ॥
श्रुत्वेति सूरयः पश्चादतप्यन्त कृतं हि किम् । यतो वधोपदेशेनास्माभिः कल्मषमर्जितम् ॥ १२१ ॥
जीवन् जीववधात् पापमयं[6] बह्वर्जयिष्यति । तस्मात् किमपि तत्कार्यं येनाधत्ते न स स्वयम् ॥ १२२ ॥
इति ध्यात्वोचिवान् सूरिर्निष्पत्तौ रत्नसन्ततेः । प्रयोगं शृणु दारिद्र्यं कदापि न भवेद् यथा ॥ १२३ ॥
स च स्फुरति नो मांसाशन-जीवविघातयोः । विधीयमानयोस्तत् त्वममू वर्जयसे यदि ॥ १२४ ॥
कथयामि तदा तत् ते श्रुत्वेत्याहेदमप्यहम् । जाने जीववधात् पापं कुटुम्बं तु न वर्त्तते ॥ १२५ ॥
नाथ ! प्रसादतश्चेत्[7] ते विना पापं धनं भवेत् । सद्गतिः प्रेत्य तन्मे स्यात् प्रमाणं पूज्यवाक् ततः ॥१२६॥
अतःपरं गृहे गोत्रे न मे पिशितभक्षणम् । इत्युक्ते रत्नयोगस्तैरुक्तः सोऽभूच्च धार्मिकः ॥ १२७ ॥

तथा केचिदिति वदन्ति–

§ ७. शिक्षितः सिंहयोगं च चक्रे तं तेन भक्षितः । यतोऽल्पदोषतः पुण्यं बहु किं न समर्ज्यते ॥ १२८ ॥

तथा–

**विलासनगरे** पूर्वं **प्रजापति**रभूत् ततः । तत्र[8] **श्रमणसिंहा**ख्याः सूरयश्च समाययुः ॥ १२९ ॥
तानाहूय नृपः प्राह चित्रं किमपि दर्श्यताम् । सूरयः प्राहुरर्कस्य कोऽपि वेत्तीह संक्रमम् ॥ १३० ॥
भूपतिः सिद्धदैवज्ञानाहूय वदति स्म सः । रविसंक्रान्तिसमयमाख्यातास्मत्पुरःसरम् ॥ १३१ ॥
नाडिकापलसङ्ख्याभिस्तं स्फुटं वीक्ष्य तेऽब्रुवन् । आचार्याः[9] स्माहुरेकोऽश्मा ससूचिर्नः समर्प्यताम् ॥१३२॥
सांवत्सरस्य च ततो नृपस्तदकरोदरम् । सूरिस्तं समयं सूक्ष्मं ज्ञात्वाऽश्मन्यक्षिपच्च ताम् ॥ १३३ ॥
उवाच सूचिकामेनां [10]मौहूर्त्तिक ! विनिःकषः । संक्रान्तिसमये यस्मात् सर्वं जलमयं भवेत् ॥ १३४ ॥
गणकोऽपि ततः प्राह ज्ञानं मे नेयतीदृशाम्[11] । प्राप्तं तत्सूरिविज्ञानं दृष्ट्वा भूपो विसिष्मिये ॥ १३५ ॥
एकदा सूरयो राज्ञा पृष्टा वृष्टिविधौ पुनः । विचिन्त्य कथयिष्यामः प्रोच्येति स्वाश्रये ययुः ॥ १३६ ॥
तैर्**देवेन्द्राभिधः** शिष्यः प्रैक्ष्यत क्षितिपाग्रतः । कथ्यं किंचिद् विसंवादि* यथासौ स्यादनादरः ॥ १३७ ॥

---

1 'सा च' नास्ति A । 2 A C N °अभिदूमियस्सं । 3 A प्रांशु° । 4 A B प्रापुः । 5 A सर्वलोक° । 6 N पापभयं । 7 N °श्चित्ते । 8 N ततः । 9 N आचार्यः । 10 C मुहूर्तिक । 11 N ज्ञाने मे नियतिर्दशा । * 'कांइ विपरीत कहुं' इति B टि० ।

इति तच्छिक्षितः प्राज्ञो ययौ तत्र जगौ च सः । उत्तरस्या दिशो वृष्टिरमुतः पञ्चमेऽहनि ॥ १३८ ॥
संजज्ञे वर्षणं पूर्वदिशस्तत्र दिने स्फुटम् । दिग्विसंवादतो* राजा किंचिन्मन्दादरोऽभवत् ॥ १३९ ॥
कर्मबन्धनिषेधाय तदुपेत्य कृतं च तैः । अभीक्ष्णं राजकार्याणां कथनं कल्मषावहम् ॥ १४० ॥
**मानखेटपुरं** प्रापुस्तेऽथ कालेन केनचित् । निमित्तग्रन्थनिष्णाता राज्ञां ज्ञाताः[1] कलावशात् ॥ १४१ ॥

*

§८. अथार्य**खपुटाः** सन्ति विद्याप्राभृतसंभृताः । तद्वृत्तमिह जैनेन्द्रमतोज्ञासि प्रतन्यते ॥ १४२ ॥

तद्यथा—

**विन्ध्यो**दधिकृताघाट[2]**लाटदेश**ललाटिका । पुरं श्री**भृगुकच्छा**ख्यमस्ति **रेवा**पवित्रितम् ॥ १४३ ॥
यानपात्रं भवाम्भोधौ यत्र श्रीमुनिसुव्रतः । पातकातङ्कतः पाति स्वर्भुवोभूर्भवं जनम् ॥ १४४ ॥
तत्रास्ति **बलमित्रा**ख्यो राजा बलभिदा समः । **कालिकाचार्य**जामेयः स्थेयः श्रेयधियां निधिः ॥१४५॥
भवाध्वनीनभव्यानां सन्ति विश्रामभूमयः[3] । तत्रार्यखपुटा नाम सूरयो विशयोदिताः[4] ॥ १४६ ॥
तेषां च भागिनेयोऽस्ति विनेयो [5]**भुवना**भिधः । कर्णश्रुत्याप्यसौ प्राज्ञो विद्या जग्राह सर्वतः ॥ १४७ ॥
बौद्धान् वादे पराजित्य यैस्तीर्थं संघसाक्षिकम् । तद्गृहध्वान्ततो भानुप्रतिरूपैरमोच्यत ॥ १४८ ॥
तदा च सौगताचार्य एको [6]**वड्डकरा**भिधः । **गुडशस्त्रपुरात्** प्राप्तो जिगीषुर्जैनशासनम् ॥ १४९ ॥
गुडपिण्डैः पुरा तत्र शत्रुसैन्यमभज्यत । गु ड श स्त्र मिति ख्यातिरतोऽस्याजनि विश्रुता ॥ १५० ॥
सर्वानित्यप्रवादी स चतुरङ्गसभापुरः । जैनाचार्यस्य शिष्येण जितः स्याद्वादवादिना ॥ १५१ ॥
कांदिशीकस्ततो मन्युपूरपूरितमानसः । कोपादनशनं कृत्वा मृत्वा यक्षो बभूव मः ॥ १५२ ॥
निजस्थानेऽवतीर्यासौ सकोपः श्वेतभिक्षुषु । अवजानाति तांस्तेषामुपसर्गान् दधाति च ॥ १५३ ॥
तत्पुरस्थेन सङ्घेन तदार्य**खपुट**[7]प्रभुः । तत्र प्रतिद्वयं प्रेष्य ज्ञापितस्तत्पराभवम् ॥ १५४ ॥
†एषा कपलिका वत्स ! नोन्मोच्या कौतुकादपि । कदापि शिक्षयित्वेति जामेयमचलत् ततः ॥ १५५ ॥
पुरे तत्र गतस्तस्य यक्षस्यायतनेऽवसत् । उपानहौ निधायास्य कर्णयोः शयनं व्यधात् ॥ १५६ ॥
यक्षार्चकः समायातस्तं तथा वीक्ष्य भूपतेः । व्यजिज्ञपदथो तस्मै कुपितः [8]कुपतिस्ततः ॥ १५७ ॥
समेत्य शयितं बाढं पटं प्रावृत्य सर्वतः । निजैरुत्थापयामास तेऽद्राक्षुः परितः पुतौ[9] ॥ १५८ ॥
तैराख्याते पुनः क्रुद्धो नृपस्तं लेष्टुयष्टिभिः । अघातयत् स घातानां प्रवृत्तिमपि वेत्ति न[10] ॥ १५९ ॥
क्षणेन तुमुलो जज्ञे पुरेऽप्यन्तःपुरेऽपि च । पूत्कुर्वन्तः समाजग्मुः सौविदा अवदंस्तथा ॥ १६० ॥
रक्ष रक्ष प्रभो ! न्यक्षः शुद्धान्तो लेष्टुयष्टिभिः । अदृष्टविहितैः कैश्चित् प्रहारैर्जर्जरीकृतः ॥ १६१ ॥
तदाकर्ण्य नृपो दध्यौ विद्यासिद्धोऽसकौ ध्रुवम् । संचारयति शुद्धान्ते प्रहारान् स्वं तु रक्षति ॥ १६२ ॥
तदयं माननीयो मे ध्यात्वेति तमसान्त्वयत् । चटुभिः पटुभिर्भूपः साधिष्ठायकदेववत् ॥ १६३ ॥
अथार्य**खपुटाचार्यः** कृत्वा कपटनाटकम् । उत्थितः प्रणतो भूमिभुजा भून्यस्तमस्तकम् ॥ १६४ ॥
यक्षं प्रोचे मया सार्द्धं चलेति स ततोऽचलत् । तमनुप्राचलन्[11] देवरूपकाण्यपराण्यपि ॥ १६५ ॥
चाल्यं नरसहस्रेण तत्र द्रोणीद्वयं तथा । चालितं कौतुकेनेत्थं तत्प्रवेशोत्सवोऽभवत् ॥ १६६ ॥
तत्प्रभावाद्भुतं वीक्ष्य जनेशोऽपि जनोऽपि च । जिनशासनभक्तोऽभून्महिमानं च निर्ममे ॥ १६७ ॥
सूरिर्नृपेण विज्ञप्तो यक्षं स्थाने न्ययोजयत् । स शान्तो द्रोणियुगलं तत्रैव स्थापितं पुनः ॥ १६८ ॥

* 'दिसिनु बहिरु पडिउ' इति B टि० । 1 A B ज्ञाता । 2 B N °घाटा° । 3 A विश्वासभू° । 4 B C विथतोथताः । 5 B भवना° । 6 N बहुकरा°; C वदुकरा°; A वड्डकरा° । 7 A °खपुटः † A B आदर्शद्वये नोपलभ्यते श्लोकोऽयम् । 8 A कुपितः कुपितः; N कुपतिः कुपितः । 9 B N ब्रुतौ; A मुतौ । 10 C N नः । 11 B भारवाहकवद् ।

§९. इतश्च श्रीभृगुक्षेत्रात् यतिद्वितयमागमत् । तेन प्रोचे प्रभो ! प्रैषीत् संघो नौ भवदन्तिके ॥ १६९ ॥
स्वकीयः स विनेयो *वः [1]बलात् कपलिकां ततः । उन्मोच्य पत्रमेकं सोऽवाचयद्वारितप्रियः[2] ॥ १७० ॥
तत्राकृष्टिर्महाविद्या पाठसिद्धाऽस्य संगता । तत्प्रभावाद् वराहारमानीय स्वादतेतराम् ॥ १७१ ॥
स्थविरैः शिक्षितः कोपात्* सौगतान्तः स्वयं गतः । अतीव भोजने गृद्धः स्वविद्यागर्वनिर्भरः ॥ १७२ ॥
तत्प्रभावेण पात्राणि गतानि गगनाध्वना । भोज्यपूर्णान्युपायान्ति बौद्धोपासकवेश्मतः[3] ॥ १७३ ॥
पात्राणां पुरतः श्राद्धगृहे याति पतद्ग्रहः । स प्रधानासने न्यस्य भ्रियते सह पात्रकैः ॥ १७४ ॥
प्रातिहार्यमिदं दृष्ट्वा श्राद्धा[4] अपि तदादृताः । ततोऽपभ्राजनामेतां हरतागत्य वेगतः ॥ १७५ ॥
गुडशस्त्रपुरात् ते च भृगुकच्छं समाययुः । भुवनेन च पात्राणि प्रैष्यन्त श्राद्धवेश्मनि ॥ १७६ ॥
पूर्णानि तानि भोज्यानामायान्ति गगनाध्वना । गुरुभिः कृतयाऽदृश्यशिलया व्योम्नि पुस्फुटुः[5] ॥ १७७ ॥
स प्रभूनागतान् ज्ञात्वा चिह्नेनानेन[6] भीतिभृत् । प्राणेशदथ पूज्याश्च बौद्धानामालये ययुः ॥ १७८ ॥
बौद्धैर्बुद्धनताबुक्तैः सूरिभिर्जल्पितं तथा । वत्स शुद्धोदनसुत[7] ! वन्दस्वाभ्यागतं हि माम् ॥ १७९ ॥
प्रतिमास्थस्ततो बुद्ध आगत्यांह्रिपुरोऽपतत् । तद्द्वारे चास्ति बुद्धांडः प्रोक्तस्तैः स पदोः पत ॥ १८० ॥
समेत्य प्रणतः सोऽपि प्रभुपादाम्बुजद्वये । उत्तिष्ठेति गिरा सूरेरेषोऽर्द्धावनतः स्थितः ॥ १८१ ॥
अद्यापि स तथैवास्ति 'निर्ग्रन्थनमिता'भिधः । बुद्धस्थाने तदादेशादेकपार्श्वेन तु स्थितः ॥ १८२ ॥

*

§१०. अथो महेन्द्रनामाऽस्ति शिष्यस्तेषां प्रभावभूः । सिद्धप्राभृतनिष्णातस्तद्वृत्तं प्रस्तुवीमहि ॥ १८३ ॥
नगरी पाटलीपुत्रं वृत्रारिपुरसप्रभम् । दाहडो नाम राजाऽत्र[8] मिथ्यादृष्टिर्निकृष्टधीः ॥ १८४ ॥
दर्शनव्यवहाराणां विलोपेन वहन्मुदम् । बौद्धानां नम्रतां शैवव्रजे निर्जटतां च सः ॥ १८५ ॥
वैष्णवानां विष्णुपूजात्याजनं कौलदर्शने । धम्मिल्लं मस्तके नास्तिकानामास्तिकतां तथा ॥ १८६ ॥
ब्राह्मणेभ्यः प्रणामं[9] च जैनर्षीणां स पापभूः । तेषां च मदिरापानमन्विच्छन् धर्मनिह्नवी ॥ १८७ ॥
आज्ञां ददौ च सर्वेषामाज्ञाभङ्गे स चादिशत् । तेषां प्राणहरं दण्डमत्र प्रतिविधिर्हि कः ॥ १८८ ॥
नगरस्थितसंघाय समादिष्टं च भूभुजा । प्रणम्या ब्राह्मणाः पुण्या भवद्भिर्वोऽन्यथा वधः ॥ १८९ ॥
धन-प्राणादिलोभेन मेने तद्वचनं परैः । निष्किंचनाः पुनर्जैनाः पर्यालोचं प्रपेदिरे ॥ १९० ॥
देहत्यागान्न नो दुःखं शासनस्याप्रभावना । तत् पीडयति को मोहो देहे यायावरे पुनः ॥ १९१ ॥
विमृश्य गुरुभिः प्रोचे श्रीआर्यखपुटप्रभोः । शिष्याग्रणीर्महेन्द्रोऽस्ति सिद्धप्राभृतसंभृतः ॥ १९२ ॥
भृगुक्षेत्रे ततः संघो गीतार्थं स्थविरद्वयम् । प्रहिणोतु स चामुष्मिन्नर्थे प्रतिविधास्यति ॥ १९३ ॥
तथाकृते[10] च संघेन तत्पूज्यैः प्रहितोऽथ सः । अभिमन्त्रितमानैषीत् करवीरलताद्वयम् ॥ १९४ ॥
उवाच च नृपादेशः प्रमाणं गणकैः पुनः । वीक्षणीयो मुहूर्त्तोऽसौ य आयतिशुभावहः ॥ १९५ ॥
इति स ज्ञापयामास भूपालाय कृतीश्वरः । स चोत्सेकं दधौ शक्तिरपूर्वकरणे मम ॥ १९६ ॥
दैवज्ञैश्चर्चिते लग्ने स्वीयप्रज्ञानुमानतः । महेन्द्राधिष्ठिता जग्मुः सूरयस्तन्नरैः सदः ॥ १९७ ॥
याज्ञिका दीक्षिता वेदोपाध्याया होमशालिनः । सायंप्रातर्व्रता आवसथीयाः स्मार्तऋत्विजः ॥ १९८ ॥
गाङ्गमृच्चन्दनालेपतिलकौघपवित्रिताः । कापायधौतपोताढ्याः सोपवीतपवित्रिकाः ॥ १९९ ॥

---

* द्वितारकान्तर्गतः पाठो नोपलभ्यते A आदर्शे । 1 C य भवत्कपलि° । 2 B वापि च प्रियः । 3 C N वेश्मनः । 4 B N शाक्या । 5 A प्रस्फुटुः । 6 N चिह्नेन तेन । 7 N सुद्धोदनि° । 8 N राजास्ति । 9 N प्रमाणं । 10 N °कृतेन ।

सिंहासनेषु चित्रेषु गब्दिकाद्यास्तृतेषु ते ।
उपविष्टास्तदा दृष्टा **महेन्द्रेण** मनीषिणा ॥ २०० ॥–विशेषकम् ।
ऊचे तेन क्षितेर्नाथ ! यदपूर्वमिदं हि नः । पूर्वं पूर्वामुखान् किं वा नमामः पश्चिमामुखान् ॥ २०१ ॥
जल्पन्निति[1] करेणासौ करवीरलतां किल ।
संमुखीनां[2] परावृत्य पृष्ठे चाभ्रामयत् ततः ॥ २०२ ॥–युग्मम् ।
आसन् लुठितशीर्षास्ते निश्चेष्टा मृतसन्निभाः । अभूच्च [3]भूपतेर्वक्त्रं विच्छायं शशिवद्दिने ॥ २०३ ॥
सम्पन्नाश्च तथा सम्बन्धिनस्तेषां कृपाभुवः । जल्पयन्त्यभिधाग्राहं को हि जल्पत्यचेतनः ॥ २०४ ॥
क्रन्दन्ति स्वजनाः सर्वे विकर्म फलितं हि नः । अदृष्टश्रुतपूर्वा हि जैनर्षीणां नतिः परे ॥ २०५ ॥
भूपरूपेण कालोऽयं दर्शनानामुपस्थितः । पुस्तकस्थपुराणेषु कथापीदृग् नहि श्रुता ॥ २०६ ॥
उत्थायाथासनाद्भूपः पश्चात्तापमुपागतः । **महेन्द्रस्य** महेन्द्रस्य धौरेषु न्यपतत् पदोः ॥ २०७ ॥
रक्ष रक्ष महाविद्य ! प्रसीद त्वं ममोपरि । क्षमस्वैकं व्यलीकं मे सन्तो हि नतवत्सलाः ॥ २०८ ॥
संजीवय द्विजानेतान् रुदत्संबन्धियोषितः । कस्ते माहात्म्यसात्म्यस्य पारं प्राप्तः सुधीरपि ॥ २०९ ॥
इत्याकर्ण्य गिरं प्राह **महेन्द्रः** शमिनां पतिः । अनात्मज्ञ धराधीश ! कस्ते मिथ्याग्रहोऽलगत् ॥ २१० ॥
निर्वाणमधितस्थुश्चेज्जिना आनन्दचिन्मयाः । [4]तदधिष्ठायकाः सन्ति प्रत्ययाढ्यास्तथाप्यहो ! ॥ २११ ॥
एवं मृष्यति को नाम प्राकृतोऽपि विडम्बनम्[5] । ब्राह्मणानां गृहस्थानां प्रणामो यद् व्रतस्थितैः[6] ॥ २१२ ॥
दैवतैः शिक्षिता एते त्वदन्यायप्रकोपिभिः । न मे कश्चित् प्रकोपोऽस्ति मादृशां मण्डनं शमः ॥ २१३ ॥
पुनर्बाढं नृपः प्राह त्वमेव शरणं मम । देवो गुरुः पिता माता किमन्यैर्लल्लिभाषितैः ॥ २१४ ॥
अमून् जीवय जीवातो ! जीवानां करुणां कुरु । अथावोचत् कृती देवान् सान्त्वयिष्ये प्रकोपिनः ॥२१५॥
विद्यादेव्यः षोडशापि चतुर्विंशतिसंख्यया । जैना यक्षास्तथा यक्षिण्यश्च वोऽभिदधाम्यहम् ॥ २१६ ॥
अज्ञानादस्य भूपस्यापराद्धं जिनशासने । द्विजैरमीभिस्तत् क्षम्यं मानवाः स्युः कियद्दृशः ॥ २१७ ॥
इत्युक्ते [7]तेन दैवी वाक् प्रादुरासीद् दुरासदा । एषां प्रव्रज्यया मोक्षोऽन्यथा नास्त्यपि जीवितम् ॥ २१८ ॥
अभिषेकेण तेषां गीर्मुत्कला च व्यधीयत । पृष्टा अङ्गीकृतं तैश्च को हि प्राणान् न वाञ्छति ॥ २१९ ॥
उत्तिष्ठतेति तेनोक्त्वाऽभ्राम्यताथापरा[8] लता । सज्जीबभूवुः प्राग्वत् ते जैना ह्यमितशक्तयः ॥ २२० ॥
संघेन सह रोमाञ्चाङ्कुरकन्दलितात्मना । राज्ञा कृतोत्सवेनाथ स्वं विवेशाश्रयं मुनिः ॥ २२१ ॥
प्रव्रज्योत्सवमाधास्यन् सङ्घस्तेन द्विजन्मनाम् । न्यषेध्यतार्यखपुटप्रभुः[9] कर्तेति जल्पता[10] ॥ २२२ ॥
एवं प्रभावभूमेस्ते कीदृगस्ति गुरुः [11]प्रभो ! । इत्युक्तः श्री**महेन्द्रो**ऽसौ प्राह कोऽहं तदग्रतः ॥ २२३ ॥
मार्जारेभ्य इव क्षीरं सौगतेभ्यो व्यमोच्यत । **अश्वावबोधतीर्थं** श्री**भृगुकच्छपुरे** हि यैः ॥ २२४ ॥
श्री**आर्यखपुटा**ख्यानां प्रभूणां महिमाद्भुतम् ।
तेषां स्तोतुमलं कः स्याद् वादिद्विपहरिश्रियाम् ॥ २२५ ॥– युग्मम् ।

चारित्राश्मनि संप्रपीष्य मदनं पात्रे[12] वरिष्ठात्मके
वृद्धस्नेहभरे तपोऽनलमिलज्ज्वाले विपक्वः स्फुटम् ।

---

1 N जल्पन्ति निकरे° । 2 C N संमुखानां । 3 A नृपतेर्व° । 4 A तदाधि° । 5 A विडंबितं । 6 A व्रतस्थितिः । 7 A C ऽनेन । 8 A भ्रास्यताथापरा°; B भ्राम्यताथोऽपरा । 9 A °खपुटः । 10 A जल्पतां । 11 B N प्रभोः । 12 A पात्रेप्यरिष्ठा° ।

रोदःकुञ्जरकुण्डके सितरुचिज्योत्स्नाम्लके यद्यशो-
राशिः स्यादवसेकिमो[1]ऽभ्रविवरः स्वाद्यः सतां सो[2]ऽवतात् ॥ २२६ ॥

अथासौ ब्राह्मणैः सार्द्धं संघेनानुमतो ययौ । उपपूज्यं दीक्षिताश्च वाडवाः प्रभुभिस्ततः ॥ २२७ ॥
इत्यार्यखपुटश्चक्रे शासनस्य प्रभावनाम् । उपाध्यायो महेंद्रश्च प्रसिद्धिं प्रापुरद्भुताम् ॥ २२८ ॥
अश्वावबोधतीर्थे च प्रभावकपरम्परा । अद्यापि विद्यते यस्य सन्ताने सूरिमण्डली ॥ २२९ ॥

*

§ ११. सूरिः श्रीपादलिप्तः प्रागाख्यातगुरुसन्निधौ । प्रतीतप्रातिहार्याणि तानि शास्त्राण्यधीतवान् ॥ २३० ॥
पादलिप्ताख्यभाषा च विद्वत्सङ्केतसंस्कृता । कृता तैरपरिज्ञेयोऽन्येषां यत्रार्थ इष्यते ॥ २३१ ॥
आवर्जितश्च भूपालः कृष्णाख्यः संसदा सह । न ददात्यन्यतो गन्तुं गुणगृह्यो मुनीशितुः ॥ २३२ ॥
अथार्यखपुटः सूरिः कृतभूरिप्रभावनः । अन्तेऽनशनमाधाय दैवीभुवमशिश्रियत् ॥ २३३ ॥
श्रीमहेन्द्रस्ततस्तेषां पट्टे सूरिपदेऽभवत् । तीर्थयात्रां प्रचक्राम शनैः संयमयात्रया ॥ २३४ ॥
पुरा ये पाटलीपुत्रे द्विजाः प्रव्रजिता बलात् । जातिवैरेण तेनात्र ते मत्सरमधारयन् ॥ २३५ ॥
संघेन पादलिप्तस्य विज्ञैर्विज्ञापितं नरैः । ततस्तेषां समादिक्षत् स विमृश्य प्रभुस्तदा ॥ २३६ ॥
कार्त्तिक्यामहमेष्यामीत्युक्त्वा तान् स व्यसर्जयत् । ततो राजानमापृच्छ्य भृगुकच्छं समाययौ ॥२३७॥
पूर्वाह्णे व्योममार्गेण रत्नवद्भास्वराकृतिः । अवतीर्णो विशीर्णैनाः श्रीसुव्रतजिनालये ॥ २३८ ॥
तत्रागतं तमुत्प्रेक्ष्य भास्वन्तमिव भूगतम् । लोकः कोक इवानन्दं प्राप दुष्प्रापदर्शनम् ॥ २३९ ॥
चित्रात् तत्रागमद् राजा नमश्चक्रे च[3] तं गुरुम् । महादानं[4] ददौ तत्र भक्त्या संघसमन्वितः ॥ २४० ॥
तत्र प्रदापितमर्थिभ्यो द्रव्यं गुरुभिरद्भुतम् । द्विजा व्योमाध्वगं तं च दृष्ट्वाऽतिभयतोऽनशन् ॥ २४१ ॥
राजाह सुकृती कृष्णः पूज्यैर्यो न विमुच्यते । दर्शनस्यापि नार्हाः स्मो मूले जाता वयं कथम् ? ॥ २४२ ॥
कियन्त्यपि दिनान्यत्रावतिष्ठध्वं सुखाय नः । प्राहुः पूज्याश्च युक्तैवावस्थितिर्भवदन्तिके ॥ २४३ ॥
संघादेशो ह्यनुल्लङ्घ्यः स्नेहश्च नृपतेरपि । पुरस्तस्यापराह्णे चागमनं प्रतिशुश्रुवे ॥ २४४ ॥
ततः शत्रुञ्जये रैवतके संमेतपर्वते । अष्टापदे च कर्त्तव्या तीर्थयात्रा ममाधुना ॥ २४५ ॥
[5]आपृष्टोऽपि महाराज ! तज्जैने भव भक्तिमान् । इत्युक्त्वाऽऽकाशमार्गेण यथारुचि ययौ प्रभुः ॥ २४६ ॥

*

§ १२. तीर्थयात्रां प्रकुर्वाणः पादचारेण सोऽन्यदा । सुराष्ट्राविषयं प्रापदपारश्रुतपारगः ॥ २४७ ॥
तत्रास्ति विगतातङ्का ढंकानाम महापुरी । श्रीपादलिप्तस्तत्रायाद्[6] विहरन् व्रतलीलया ॥ २४८ ॥
तत्र नागार्जुनो नाम रससिद्धिविदां वरः । भाविशिष्यो गुरोस्तस्य तद्वृत्तमपि कथ्यते ॥ २४९ ॥
अस्ति क्षत्रियमूर्धन्यो धन्यः समरकर्मसु । संग्रामनामा विख्यातस्तस्य भार्याऽस्ति[7] सुव्रता ॥ २५० ॥
सहस्रफणशेषाहिस्वप्नसंसूचितस्थितिः । कृतनागार्जुनाभिख्यस्तयोः पुत्रोऽस्ति पुण्यभूः ॥ २५१ ॥
स वर्षत्रयदेशीयोऽन्यदा क्रीडन् शिशुव्रजैः । सिंहार्भकं विदार्यागात् तस्मान् किञ्चिच्च भक्षयन् ॥ २५२ ॥
पित्रा निवारितः क्षात्रे कुले भक्ष्यो नखी नहि । तदागतेन चैकेन सिद्धपुंसेति वर्णितम् ॥ २५३ ॥
मा विषीद स्वपुत्रस्य विहितेन नरोत्तम ! । अशक्यास्वादतस्तस्यास्वादं प्राप्स्यत्यसौ सुतः ॥ २५४ ॥
विनिद्र उद्यमी भास्वानाबाल्यादपि तेजसा । प्रवृद्धपुरुषैः संगमङ्गीचक्रे कलाद्भुतैः ॥ २५५ ॥

1 A C स्यादथ सेकिमो । 2 A वो । 3 A ऽथ । 4 N महानन्दं । 5 A अपृष्टोऽपि । 6 A तत्रागाद् । 7 नार्यस्ति ।

गिरयः सरितो यस्य गृहाङ्गणमिवाभवन्। दूरदेशान्तरं गेहान्तरं [1]भूरिकलादरात्॥ २५६॥
*नाग-वंगीकृताभ्यासस्तारस्त्रस्य† रङ्गभूः। संग्रही चौषधीनां यो रससिद्धिकृतामिह॥ २५७॥
यः सत्त्वं तालके पिष्टं गन्धके द्रावमभ्रके। जारणं मारणं सूते वेत्ता छेत्ता सुदुःस्थितेः॥ २५८॥
सहस्रलक्षकोट्यंशधूमवेधान् रसायनम्। [2]पिण्डबद्धान् चकाराथ नदीष्णो रससाधने॥ २५९॥
स महीमण्डलं भ्रान्त्वाऽन्यदा स्वपुरमासदत्। **पादलिप्तं** च तत्रस्थं जज्ञे निःसंख्यसिद्धिकम्॥ २६०॥
पर्वताश्रितभूमौ च कृतावासः स्वशिष्यतः। अकार्षीत् पादलेपार्थी ज्ञापनं गणभृत्पतेः॥ २६१॥
तृणरत्नमये पात्रे सिद्धं रसमढौकयत्। छात्रो **नागार्जुन**स्य श्री**पादलिप्त**प्रभोः पुरः॥ २६२॥
स प्राह रससिद्धोऽयं ढौकने कृतवान् रसम्। स्वान्तर्द्धनमहो स्नेहस्तस्येत्येवं स्मितोऽभ्यधात्[3]॥ २६३॥
पात्रं हस्ते गृहीत्वा च भित्तावास्फाल्य खण्डशः। चक्रे च तन्नरो दृष्ट्वा व्यषीदद् वक्रवक्त्रभृत्॥ २६४॥
मा विषीद तव श्राद्धपार्श्वतो भोजनं वरम्। प्रदापयिष्यते चैवमुक्त्वा संमान्य भोजितः॥ २६५॥
तस्मै चापृच्छयमानाय काचामत्रं[4] प्रपूर्य सः। प्रश्रावस्य ददौ तस्मै प्राभृतं रसवादिने॥ २६६॥
नूनमस्मद्गुरुर्मूर्खो योऽनेन स्नेहमिच्छति। विमृशन्निति स स्वामिसमीपं जग्मिवांस्ततः॥ २६७॥
पूज्यैः सहाद्भुता मैत्री तस्येति स्मितपूर्वकम्। सम्यग् विज्ञप्य वृत्तान्तं तदमत्रं समार्पयत्॥ २६८॥
द्वारमुन्मुद्र्य यावत् स सन्निधत्ते दृशोः पुरः। आजिघ्रति ततः क्षारविश्रगन्धं स बुद्धवान्‡॥ २६९॥
अहो निर्लोभतामेष मूढतां [5]चास्पृशेदथ। विमृश्येति विषादेन बभंजाश्मनि सोऽपि तत्॥ २७०॥
दैवसंयोगतस्तत्रैकेन वह्निः प्रदीपितः। भक्ष्यपाकनिमित्तं च क्षुत् सिद्धस्यापि दुःसहा॥ २७१॥
पक्ता नृजलवेधेन वह्नियोगे सुवर्णकम्। [6]सुवर्णं सिद्धमुत्प्रेक्ष्य सिद्धशिष्यो विसिष्मिये[7]॥ २७२॥
व्यजिज्ञपद् गुरुं सिद्धं सिद्धिस्तस्याद्भुता प्रभो!। ग्रावा हैमी भवेद् यस्य मलमूत्रादिसङ्गमे॥ २७३॥
ततो **नागार्जुनः** सिद्धो विस्मयस्मेरमानसः। दध्यौ स मम का सिद्धिर्दौरिद्र्यं कुर्वतः सदा॥ २७४॥
कास्तेऽत्र चित्रको रक्तः कृष्णमुण्डी च कुत्र सा। **शाकम्भर्या**श्च लवणं वज्रकन्दश्च कुत्र च[8]॥ २७५॥
इत्येवं दूरदेशस्थौषधपिण्डान् प्रपिण्डयन्। भिक्षाभोजनतो म्लानदेहोऽहं सर्वदाऽभवम्॥ २७६॥–युग्मम्
आचार्योऽयं शिशुत्वादप्यारभ्य प्राप्तपूजनः। सुखी विहायोगामिन्या सिद्धया साध्यानि साधयन्॥ २७७॥
तथा यद्देहमध्यस्था मलमूत्रादयो वसु। साधयन्ति[9] मृदश्मादिद्रव्यैस्तस्यास्तु का कथा॥ २७८॥
रसोपकरणं मुक्त्वा ततोऽसौ प्रभुसन्निधौ। जगाम विनयानम्रमौलिर्मदभरोज्झितः॥ २७९॥
प्रणम्य चावदन्नाथ! सिद्धिगर्वः स सर्वतः। समागलत् प्रभौ दृष्टे देहसिद्धे जितस्पृहे॥ २८०॥
ततः प्रभुपदाम्भोजं सदाप्यवलगाम्यहम्। मिष्टान्नं लभमानस्य कदन्नं कस्य रोचते॥ २८१॥
इति श्री**पादलिप्त**स्य चरणक्षालनादिकम्। देहशुश्रूषणं नित्यं विदधाति प्रशान्तगीः॥ २८२॥
सूरयश्च मुनिव्राते गते विचरितुं तदा। प्रागुक्तपञ्चतीर्थ्यां[10] ते गत्वा व्योम्ना प्रणम्य च॥ २८३॥
समायान्ति मुहूर्तस्य मध्ये नियमपूर्वकम्। विद्याचारणलब्धीनां समानास्ते कलौ युगे॥ २८४॥
आयातानामथैतेषां चरणक्षालनं ध्रुवम्। जिज्ञासुरौषधानीह निर्विकारश्चकार सः॥ २८५॥

---

1 A सूरिक। * 'सीसू तरूउं' इति B टि०। † 'सुवर्ण' इति B टि०। 2 B बडिबद्धान्; C विडबद्धान्। 3 N व्यधात्। 4 B N काचपात्रं। ‡ एतत्पदोपरि B आदर्शे निम्नगतं पद्यमुट्टिप्पितं लभ्यते पृष्ठपार्श्वभागे–

छेद्यश्चम्पकचूतचन्दनवने रक्षा करीरद्रुमे हिंसा हंसमयूरकोकिलकुले काकेषु लीलारतिः।
मातंगे खरविक्रयः समतुलां कर्पूरकर्पासयो एषा यत्र विचारणा गुणगणे देशाय तस्मै नमः॥

5 N वा। 6 N सुवर्णसिद्धि। 7 B शिष्यो विसिष्मियेषु च। 8 N वा। 9 N साधयन्ती। 10 N °तीर्थ्यान्ते।

स जिघ्रन् विमृशन् पश्यन् स्वादयन् संस्पृशन्नपि । प्रज्ञाबलादौषधानां[1] जज्ञे सप्ताधिकं शतम् ॥ २८६ ॥
विधायौषधसंयोगं ततः कल्कं चकार सः । पादमालेपयत् तेनोच्छलितो गगनं प्रति ॥ २८७ ॥
स ताम्रचूडसंपातं कृत्वा च न्यपतद् गुणी । उच्चैःप्रदेशात् पातेन जानौ गुल्फे च पीडितः ॥ २८८ ॥
रक्ताभ्यक्तव्रणक्लिन्नजङ्घो दृष्टः शमीश्वरैः । उक्तं च किमहो ! पादलेपः सिद्धो गुरुं विना ? ॥ २८९ ॥
सोऽब्रवीच स्मितं कृत्वा नास्ति सिद्धिर्गुरुं विना । निजप्रज्ञाबले किंतु परीक्षां चक्रिवानहम् ॥ २९० ॥
प्राह श्रीपादलिप्तोऽपि प्रसन्नस्तस्य सत्यतः । शृणु नाहं नतेस्तुष्टो रससिद्ध्या न तेऽनया ॥ २९१ ॥
शुश्रूषयानया नापि; परं प्रज्ञाबलेन ते । तोयोंह्रिक्षालनात् को हि वस्तुनामानि बुध्यते ॥ २९२ ॥
ततो दास्यामि ते विद्यां परं मे गुरुदक्षिणाम् । कां दास्यसि[2] स चोवाच यामादिशसि मे प्रभो !॥ २९३ ॥
ऊचे च गुरुणा सिद्ध ! त्वयि स्निग्धं मनो मम । उपदेक्ष्यामि ते पथ्यं तथ्यं गाथां ततः शृणु ॥ २९४ ॥

सा च—

**दीहरफणिंदनाले महिहरकेसरदिसाबहुदलिल्ले ।**
**ओपियइ कालभमरो जणमयरन्दं [3]पुहइपउमे ॥ २९५ ॥**

ततो विश्वहितं धर्ममाद्रियस्व जिनाश्रयम् । तथेति प्रतिपन्ने च तेन तद् गुरुरादिशत् ॥ २९६ ॥
आरनालविनिर्धौततन्दुलामलवारिणा । पिष्ट्वौषधानि पादौ च लिप्त्वा व्योमाध्वगो भव[4] ॥ २९७ ॥
तथैव विहितेऽसौ च जगाम गगनाध्वना । पक्षिराजवदुड्डीय यथाभिलषितां भुवम् ॥ २९८ ॥
कृतज्ञेन ततस्तेन विमलाद्रेरुपत्यकाम् । गत्वा समृद्धिभाक् चक्रे **पादलिप्ताभिधं पुरम्** ॥ २९९ ॥
अधित्यकायां श्रीवीरप्रतिमाधिष्ठितं पुरा । चैत्यं विधापयामास स सिद्धः साहसीश्वरः ॥ ३०० ॥
गुरुमूर्तिं च तत्रैवास्थापयत् तत्र च प्रभुम् । प्रत्यष्ठापयदाहूयार्हद्बिम्बान्यपराण्यपि ॥ ३०१ ॥
श्री**पादलिप्त**सूरिश्च श्रीवीरपुरतः स्थितः । स्तवं चक्रे वरं '**गाहाजुअलेणे**'ति संज्ञितम् ॥ ३०२ ॥
गाथाभिश्चेति सौवर्ण-व्योमसिद्धी सुगोपिते । प्रभुर्जजल्प नाभाग्याः प्रबुध्यन्तेऽधुनातनाः ॥ ३०३ ॥
तथा **रैवतक**क्ष्माभृदधो दुर्गसमीपतः । श्रीनेमिचरितं श्रुत्वा तादृशात्प्रभोर्मुखात् ॥ ३०४ ॥
कौतुकात् तादृशं सर्वमावासादि व्यधादसौ । दशार्हमण्डपं श्रीमदुग्रसेननृपालयम् ॥ ३०५ ॥
विवाहादिव्यवस्थां च वेदिकायां व्यधात् तदा । अद्यापि धार्मिकैस्तत्र गतैस्तत् प्रेक्ष्यतेऽखिलम् ॥ ३०६ ॥

❀

§ १३. इतः पृथ्वी**प्रतिष्ठाने** नगरे **सातवाहनः** । सार्वभौमोपमः श्रीमान् भूप आसीद् गुणावनिः ॥ ३०७ ॥
तथा श्री**कालकाचार्य**स्वस्त्रीयः श्रीयशोनिधिः । **भृगुकच्छपुरं** पाति **बलमित्रा**भिधो [5]नृपः ॥ ३०८ ॥
अन्येद्युः पुरमेतच्च रुरुधे सातवाहनः । द्वादशाब्दानि तत्रास्थाद् बहिर्न व्याहतं तु तत्[6] ॥ ३०९ ॥
अथाशक्यग्रहे दुर्गे निर्विण्णश्चिरकालतः । श्री**पादलिप्त**शिष्यस्तन्मन्त्री नाथं व्यजिज्ञपत् ॥ ३१० ॥
ग्राहयिष्याम्यहो दुर्गं भेदात् तत् प्रेषयस्व माम् । एवमस्त्विति तेनोक्ते निर्ययौ शिबिरात्ततः ॥ ३११ ॥
स भागवतवेषेण प्राविशन्नगरान्तरा । भूपालमन्दिरे गत्वा तन्नाथं च व्यलोकयत् ॥ ३१२ ॥
जीर्णदेवगृहोद्धारो[7] महादानानि[8] सत्क्रिया । पुण्याय स्युर्यतो[9] दुर्गरोधाद्यापन्निवर्तते[10] ॥ ३१३ ॥
सोऽपि संरोधनिर्विण्णस्तदाक्षिप्तो व्यधाददः । धर्मोपदेश आपत्सु कार्य्यपक्षे हि जायते ॥ ३१४ ॥
धर्म्मस्थानानि भज्यन्ते बहिर्यन्त्राश्म[11]गोलकैः । समारचयते राजा तस्य धर्मोपदेशतः ॥ ३१५ ॥

---

1 B N °षधीनां । 2 N दापयसि । 3 B N तुहइ° । 4 B N ऽभवत् । 5 N नृप । 6 N भवत् । 7 A °गृहोद्धारे । 8 N दानादि° । 9 N स्फूर्यते; A B स्फुर्यतो । 10 N °रोधाद्यावन्नि° । 11 A यन्त्रा° ।

पौनःपुन्येन भज्यन्ते निष्पाद्यन्ते पुनः पुनः । एवं च **बलमित्रस्य** सर्वस्वं निष्ठितं तदा ॥ ३१६ ॥
श्री**सातवाहनो** दुर्गं मंत्रिबुद्ध्या ततोऽग्रहीत् । तन्निगृह्य महीपालं नगरं स्वं ययौ मुदा ॥ ३१७ ॥
§ १४. अन्यदा तस्य राजेन्द्रो राज्यं विदधतः सतः । चत्वारः शास्त्रसंक्षेपकवयो द्वारमभ्ययुः ॥ ३१८ ॥
प्रतीहारेण ते राज्ञो विज्ञप्य भवनान्तरा । मुक्ता एकैकपादं च श्लोकस्याहुर्नृपाग्रतः ॥ ३१९ ॥

तथा हि–

**जीर्णे भोजनमात्रेयः; कपिलः प्राणिनां दया ।**
**बृहस्पतिरविश्वासः; पाञ्चालः[1] स्त्रीषु मार्दवम् ॥ ३२० ॥**

पूर्वं प्रशस्य[2] तेषां स महादानं ददौ प्रभुः । परिवारो न किं स्तौतीत्युक्ते तैराह भूपतिः ॥ ३२१ ॥
**भोगवत्य**भिधां वारवनितां त्वं स्तुतिं कुरु । **पादलिप्तं** विना नान्यः स्तोतव्यो मम साऽब्रवीत् ॥३२२॥
आकाशमार्गजंघालो विद्यासिद्धो महाक्रियः । पादलिप्ताद् ऋते कोऽन्य एवंविधगुणावनिः ॥ ३२३ ॥
सांधिविग्रहिको राज्ञः **शंकरो** नाम मत्सरी । असहिष्णुः स्तुतिं तस्यावादीदादीनवस्थितिः ॥ ३२४ ॥
मृतो जीवति यस्तस्य पाण्डित्यं प्रकटं वयम् । मन्यामहेऽपि ते कीरा विद्वांसो गगनेचराः ॥ ३२५ ॥
भोगवत्याह तत्रेदमपि संभाव्यते ध्रुवम् । अतुल्यप्रभावा जैना देवा इव महर्षयः ॥ ३२६ ॥
**मानखेट**पुरात् **कृष्ण**मापृच्छ्य स भूपतिः । श्रीपादलिप्तमाह्वासीदेतस्मादेव कौतुकात् ॥ ३२७ ॥
आययौ नगराद्बाह्योद्याने जैनो मुनीश्वरः । विद्वान् बृहस्पतिर्ज्ञात्वा परीक्षामस्य चक्रिवान् ॥ ३२८ ॥
विलीनसर्पिषा पूर्णं रौप्यकच्चोलकं ततः । प्रेषिवान् निपुणेनैष स प्रभोस्तददर्शयत् ॥ ३२९ ॥
धारिणीविद्यया सूचीमवस्थाप्योर्द्ध्वसंस्थितिं[3] । प्रैषयत् तेन तद् दृष्टं विषण्णोऽथ **बृहस्पतिः** ॥ ३३० ॥
अथाभ्यागत्य भूपालः प्रवेशोत्सवमादधे । गुरोरुपाश्रयस्तस्य महार्हश्च प्रदर्शितः ॥ ३३१ ॥
कथा **तरङ्गलोला**ख्या व्याख्याताऽभिनवा पुरः । भूपस्य तत्र **पाञ्चालः** कविर्भृशमसूयितः ॥ ३३२ ॥
प्रशंसति कथां नैव दूषयेत्[4] प्रत्युताधिकम् । रासभस्य मुखात् किं स्यात् शान्तिपानीयनिर्गमः ॥ ३३३ ॥
मद्ग्रंथेभ्यो मुषित्वार्थबिन्दुं कंथेयमग्रथि । बालगोपाङ्गनारङ्गसङ्गि ह्येतद्वचः सदा ॥ ३३४ ॥
विदुषां चित्तरङ्गं नोत्पादयेत् प्राकृतं हि तत् । स्तौति **भोगवती** ह्येतत् तादृशां तादृगौचिती ॥ ३३५ ॥
§ १५. अन्यदा कपटात् स्वस्य मृत्युमैक्षयत प्रभुः । [5]हाहा ! पूत्कारपूर्वं च जनस्तत्रामिलद् घनः ॥ ३३६ ॥
शिबिकान्तस्तनुः साधूत्क्षिप्ता[6] यावत्समाययौ । वादित्रैर्वाद्यमानैश्च **पञ्चाल**भवनाग्रतः ॥ ३३७ ॥
तावद् गेहाद् विनिष्क्रामन् जज्ञेऽसौ शोकपूरितः । आह हाहा ! महासिद्धिपात्रं सूरिर्ययौ दिवम् ॥ ३३८ ॥
मादृशोऽसूययाक्रान्तः सत्पात्रे सूनृतव्रते । अकुर्वत दृशो रक्ता मोक्षो नास्ति तदेनसः ॥ ३३९ ॥

यत उक्तम्–

**आकरः सर्वशास्त्राणां रत्नानामिव सागरः ।**
**गुणैर्न परितुष्यामो यस्य मत्सरिणो वयम् ॥ ३४० ॥**

तथा–

**सीसं कहवि न फुट्टं जमस्स पालित्तयं हरंतस्स ।**
**जस्स मुहनिज्झराओ तरंगलोला नई वूढा ॥ ३४१ ॥**

पंचालसत्यवचनाज्जीवितोहऽमिति ब्रुवन् । उत्तस्थौ जनताहर्षारावेण सह सूरिराट् ॥ ३४२ ॥

---

1 A N पाञ्चालश्री° । 2 A प्रवेश्य । 3 N संस्थिति । 4 A B द्वेषयेत्; C द्वेषाय । 5 N दाहात् । 6 N साधुक्षिप्त्वा; C साधूत्क्षिप्त्वा ।

अनैराकुश्यमानश्च ततोऽसौ गुणिमत्सरी । निर्वास्यमानो न्यक्कारपूर्वमुर्वीपतेर्गिरा ॥ ३४३ ॥
रक्षितो मानितश्चाथ बन्धुबन्धुरसौहृदैः । श्रीपादलिप्तगुरुभिर्गुरुविद्यामदोज्झितैः ॥ ३४४ ॥
श्रावकाणां यतीनां च प्रतिष्ठा दीक्षया सह । उत्थापना प्रतिष्ठार्हद्बिम्बानां द्युसदामपि ॥ ३४५ ॥
यदुक्तविधितो बुद्ध्वा विधीयेतात्र सूरिभिः । **निर्वाणकलिका**शास्त्रं प्रभुश्चक्रे कृपावशात् ॥ ३४६ ॥
**प्रश्नप्रकाश** इत्याख्यं ज्योतिःशास्त्रं च निर्ममे । लाभालाभादिपृच्छासु **सिद्धादेशः**[1] प्रवर्तते ॥ ३४७ ॥
अन्यदायुः परिज्ञाय सह **नागार्जुनेन** ते[2] । **विमलाद्रि**मुपाजग्मुः श्रीनाभेयं ववंदिरे ॥ ३४८ ॥
सिद्धिक्षेत्रशिरःसारशिलां सिद्धिशिलातुलाम् । शमसंवेगनिधय एकामासेदुरादरात् ॥ ३४९ ॥
प्रायोपवेशनं सद्य आस्थाय शशिरोचिषा । धर्मध्यानाम्भसा विध्यापितरागादिवह्नयः ॥ ३५० ॥
मनोवचनकायानां चेष्टाः[3] संहृत्य सर्वतः । शुक्लध्यानसमानान्तःकरणावस्थितिस्थिराः[4] ॥ ३५१ ॥
द्वात्रिंशद्वासरान् सम्यग् लयलीनमनःक्रमाः । देहं जीर्णकुटीतुल्यमुज्झित्वा प्रकटप्रभाः ॥ ३५२ ॥
द्वितीयकल्पे देवेन्द्रसामानिकतनूभृतः ।
अभूवन्नर्चिता भूपैः श्रीपादलिप्तसूरयः ॥ ३५३ ॥—चतुर्भिःकलापकम् ।

उत्पत्तिसिद्धिपटुरत्र स रुद्रदेवसूरिर्गुरुः श्रमणसिंहनिमित्तसिद्धः[5] ।
विद्याभृदार्यखपुटप्रभुरेष सिद्धोपाध्याय इत्यतिशयप्रकटो महेन्द्रः ॥ ३५४ ॥
चत्वार इत्यनवधिप्रभसिद्धविद्याः श्रीपादलिप्तसहिता विनुता मयैते ।
यत्किंचिदत्र गदितं न चरित्रशेषमज्ञानतस्तदिह वृत्तविदः क्षमन्ताम् ॥ ३५५ ॥

श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीपादलिप्ताख्यया
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गोऽगमत् पञ्चमः ॥ ३५६ ॥

पूर्वमुनिवृत्तवीते मम गौश्चरितातितृप्तितो मत्ता ।
कूटपथे गच्छन्ती वशिता प्रद्युम्नगोपतिना ॥ ३५७ ॥

## ॥ *इति श्रीपादलिप्ताचार्यप्रबन्धः पञ्चमः ॥

॥ ग्रन्थाग्रं० ३७३, अक्षर २८ उभयं ११०८ अक्षर ११ ॥ छ ॥

---

1 A B सिद्धादेशं । 2 N मते । 3 A C चेष्टां । 4 A °स्थितिः स्थिरा; C °स्थिति स्थिरां । 5 N °सिंहः । * B आदर्शे 'इति श्रीप्रद्युम्नसूरिविरचिते श्रीपादलिप्ताचार्यप्रबन्धः' एतादृशोऽयं पुष्पिकालेखो लभ्यते ।

# ६. श्रीविजयसिंहसूरिचरितम् ।

§१. **श्रीविजयसिंह**सूरिर्गुटिकासिद्धः कथं पथि गिरां स्यात् ।
तुष्टा दर्शनमात्राद् यस्याम्बाऽदात् सुरी गुटिकाः ॥ १ ॥
अष्टमहासिद्धिनिधेस्तस्य वदिष्यामि कमपि वृत्तलवम् । वृद्धकृतिवचःश्रवणप्रवणप्रणिधानपरतन्त्रः ॥ २ ॥
तीर्थम**श्वावबोधं** श्री**मेकलकन्यका**तटे जयति । तत्र गुरुरसौ समभूत् तद्वृत्तान्तोऽपि वक्तव्यः ॥ ३ ॥
कनकगिरिशिखरसोदरतुङ्गप्राकारवलयपरिकलितम् । **श्रीपुर**मिति नाम्नासीत् पुरा पुरं सकलपुरमुकुटः ॥ ४ ॥
तस्य च बहिरुद्याने समवासार्षीद् द्वितीयजिननाथः । श्रीमानजितस्वामी तत्तीर्थं पूर्वमिति विदितम् ॥ ५ ॥
पश्चात्पुष्कलकालेऽतीते चन्द्रप्रभः प्रभुरवात्सीत् । उद्यान एतदीये नाम्ना च **सरस्वतीपीठे** ॥ ६ ॥
पुनरपि बहुकालेन क्षीणं तद् **भृगु**रिति प्रथितनामा । उदध्रे च महर्षि**र्भृगुपुर**मभवत् ततःप्रभृति ॥ ७ ॥
वंशे मेरुगिरीन्द्रे चन्द्रार्यमकिरणरज्जुविस्तारे । यत्कीर्तिवंशनटी नृत्यति विश्वेषु सभ्येषु ॥ ८ ॥
स नृपतिरिह **जितशत्रुः** शत्रुश्रेणीपतङ्गगणदीपः ।
कलिकालकलुषतामसविघटनपटुरात्मविषयोऽभूत् ॥ ९ ॥–युग्मम् ।
छागानां शतषट्कं त्रिन्यूनं सोऽन्यदा महीनाथः । विप्रोपदेशमासाद्य यज्ञविधये जुहाव भृशम् ॥ १० ॥
अन्त्ये दिने द्विजैस्तैरानाय्यत होतुमत्र पट्टाश्वः । **रेवा**दर्शनतोऽस्य च पूर्वभवः [1]स्मृतिपथं प्राप्तः ॥ ११ ॥
अथ मुनिसुव्रतनाथस्तं सप्तिं पूर्वजन्मसुहृदम् । ज्ञात्वा निश्येकस्यामतीत्य गव्यूतिविंशशतम् ॥ १२ ॥
तस्य प्रबोधनार्थं तदा **प्रतिष्ठान**नामतो नगरात् । **सिद्धपुरे** विश्रम्य क्षणमेकमुपाजगामात्र ॥ १३ ॥
**कोरिंटका**भिधाने परिकरितस्त्रिंशता मुनिसहस्रैः ।
बाह्योद्याने समवासार्षीच्चूतद्रुमस्याधः ॥ १४ ॥–त्रिभिर्विशेषकम् ।
सर्वज्ञं तं मत्वा सम्प्राप्तस्तेन वाजिना सहितः । राजा गत्वा नत्वा[2] यज्ञफलं तदनु पप्रच्छ ॥ १५ ॥
अवदच्च जिनाधीशः प्राणिवधात् ते भवन्ति नरकफलाः । अश्वश्च साश्रुनेत्रः प्रभुदर्शनतस्तदा जज्ञे ॥ १६ ॥
जिनपतिरबोधयदमुं नृपतिसमक्षं यथा शृणु तुरङ्ग ! । स्वं पूर्वभवं धीमन्नवधानपरश्च बुध्यस्व ॥ १७ ॥
§२. प्रागत्र पुरेऽवात्सीत् **समुद्रदत्ता**ख्यया वणिग् जैनः ।
तस्य च **सागरपोतो** मिथ्यादृष्टिः सुहृत् समभूत् ॥ १८ ॥
जीवाहिंसामुख्ये समुद्रदत्तेन बोधितो धर्म्मे । स द्वादशव्रतधरः शनैश्च सुकृतीश्वरः[3] समभूत् ॥ १९ ॥
तस्य प्राक्कर्मवशात् क्षयनामा चान्यदाऽभवद् रोगः । निजधर्मत्यागादयमस्याभूत् तन्निजाः प्राहुः ॥ २० ॥
तस्यापि "भावहानि[4]र्व्याधिग्रस्तस्य[5] संबभूव तदा । स्वकजनवचनैः को विप्रलभ्यते[6] न चटुपटुभिर्वा ॥ २१ ॥
पर्वण्युदगयनाख्ये क्रियमाणे लिङ्गपूरणमहे[7] च । आह्रियमाणेषु तथा[8] प्राज्येष्वाज्येषु कुतपेभ्यः ॥ २२ ॥
अध्वन्युज्झिततल्लेशसंगताः किल घृतेलिमा अमिताः । किंकरपादाघातैः क्षुण्णाः स ददर्श सघृणमनाः ॥ २३ ॥
प्रत्यावृत्तः **सागरपोतः** सदयो निनिन्द तं धर्म्मम् । निःशूकैस्तैश्च तदा स यष्टिमुष्ट्यादिभिः प्रहतः ॥ २४ ॥
आर्त्तध्यानान्मृत्वा तिर्यग्गतिभवशतेषु विभ्रम्य । अश्वः समभूच्च भवानथ मे शृणु भवमहो पूर्वम् ॥ २५ ॥
अजनि पुरा **चन्द्रपुरे श्रीवर्मा** नरपतिः प्रथितकीर्तिः । आबोधिबीजलाभादहं भवे सप्तमे श्रीमान् ॥ २६ ॥

---

1 A श्रुतिपथं । 2 N नास्ति 'नत्वा' । 3 N सुकृतेश्वरः । 4 N C धर्महानि° । 5 A C व्यसनस्य । 6 N प्रलुभ्यते ।
7 N °पूर्णमहे । 8 N तदा ।

उक्तं चागमे—

**सिवकेऊ सोहम्मे कुबेरदत्तो सणंकुमारम्मि ।**
**सिरिवज्जकुंडलो बंभलोयकप्पंमि सिरिवम्मो ॥ २७ ॥**
**पाणयकप्पे मुणिसुव्वओ य तित्थाहिवो भवे नवमे ।**
**इय संखेवो भणिओ वित्थरमेयं अओ वुच्छं ॥ २८ ॥**

व्यवहारी च **भृगुपुरात् समुद्रदत्ता**ख्य आययौ तत्र ।
निःसंख्यपण्यपूरितयानं स्थानं समस्तलक्ष्मीना(णा)म् ॥ २९ ॥

नृपतिस्तेन समैक्ष्यत तदर्पितप्राभृतैर्मुदितचित्तः । दानगुणादिस्वागतकरणादेषोऽपि तमनुजग्राह ॥ ३० ॥
राज्ञः प्रसादवृद्ध्या साधोस्तदुचितविधानतश्चापि । सख्यमभूज्जिनधर्मे बोधश्चास्मादवनिपस्य ॥ ३१ ॥
**सागरपोते**नापि च तत्रायातेन तद्वयस्येन । मैत्री राज्ञः समजनि तद्बोधसमानधर्मत्वात्[1] ॥ ३२ ॥
अन्ते समाधिमरणात् प्राणतकल्पे नृपोऽभवद् देवः । सोऽहं तस्माच्च्युत्वा **भरतक्षेत्रे** नृपो जज्ञे ॥ ३३ ॥
इत्याकर्ण्य तुरङ्गः प्रभुधर्मकथां[2] नृपेण सोऽनुमतः । सप्तदिनान्यनशनभृत् समाहितोऽगात सहस्रारम् ॥ ३४ ॥
तत्र पुरन्दरसामानिकतां सप्तदशसागरायुरसौ । भुञ्जानोऽवधिना प्राग्भवमस्मार्षीच्च तत्रस्थः ॥ ३५ ॥
सार्धद्वादशकोट्यस्तेन सुवर्णस्य ववृषिरे तत्र । राजा पुरलोकश्च प्रबोधितो जैनवरधर्म्मे ॥ ३६ ॥
चामीकररत्नमयं श्रीमुनिसुव्रतविभोस्तदा चैत्यम् । माघस्य पूर्णिमास्यां सुकृती स स्थापयामास ॥ ३७ ॥
माघस्य सितप्रतिपदि विभुरायादश्वरत्नबोधाय । तस्यैव सिताष्टम्यां तुरङ्गः सुरलोकमायासीत् ॥ ३८ ॥
इति **नर्मदा**तटेऽभूद् **भृगुकच्छेऽश्वावबोध** इति नाम्ना । तीर्थं समस्ततीर्थातिशायि पुण्यं प्रवृत्तमदः ॥ ३९ ॥
श्रीसुव्रतनिर्वाणात् द्वादशसु ततः समासहस्रेषु । अधिकेषु द्वादशभिः **पद्म**श्चक्रीदमुदध्रे ॥ ४० ॥
**हरिषेण**चक्रवर्ती पुनरुद्धारं चकार दशमोऽस्य । एवं च वर्षलक्षा एकादश जग्मुरभ्यधिकाः ॥ ४१ ॥
षण्णवतिसहस्राब्दैरुद्धारशते च तत्र जातेऽस्य । **सुदर्शना**भ्युद्धारः प्रकीर्त्यते तदुत्पत्तिरथ ॥ ४२ ॥

§ ३. **वैताढ्य**पर्वतोपरि **रथनूपुरचक्रवालनाम्नि** पुरे ।
राजा **विजयरथो**ऽभूत् तत्कान्ता **विजयमाले**ति ॥ ४३ ॥

**विजया**थो तद्दुहिता तीर्थानां प्रणमनाय किल यान्ती । कुक्कुटसर्पं पुरतोऽवतीर्णमालोकयामास ॥ ४४ ॥
अशकुन[3] इति पत्तिजनैरुपेक्षितवती प्रहण्यमानं सा । श्रीशान्तिनाथतीर्थं गत्वा च ननाम सा भावात् ॥ ४५ ॥
तत्र च विद्याचारणयतिनीर्यतनैकनिष्ठचारित्राः । नत्वा जीववधस्योपेक्षायां[4] सानुतापाभूत् ॥ ४६ ॥
तत्कर्म तनूचक्रे किञ्चिदथान्ते[5] स्वजीवितव्यस्य । निजगृहधनमोहार्त्तध्यानान्मृत्वाभवच्छकुनिः ॥ ४७ ॥
स व्यालो व्याधोऽभूत् ततोऽन्यदा मासि भाद्रपदसंज्ञे । बहुदिनवर्षोपशमे वटवृक्षस्था च सा क्षुधिता ॥ ४८ ॥
सप्तापत्यनिमित्तं स्वार्थं चाहारवीक्षिका शकुनिः । व्याधस्य तस्य गेहे चञ्च्वा जगृहे पललखण्डम् ॥ ४९ ॥—**युग्मम्** ।
उड्डीय चान्तरिक्षे गच्छन्ती प्रणिहितेषुणा तेन । श्रीसुव्रतचैत्यपुरः पतिता कण्ठागतप्राणा ॥ ५० ॥
तत्पुण्यतोऽथ **भानुर्भूषण** इति यतियुगं च तत्रागात् । कृपया ताभ्यामाश्वासिता च पानीयसंसेकात् ॥ ५१ ॥
**पञ्चपरमेष्ठिमन्त्रं** साऽश्राव्यत तत्र यामयुगलाभ्याम् । तत्तीर्थध्यानपरा परलोकं सा ततः समगात् ॥ ५२ ॥
अस्ति च सागरतीरे दक्षिणखण्डेऽथ **सिंहलद्वीपः** । राजाऽत्र **चन्द्रशेखर**नामा कामाकृतिर्जज्ञे ॥ ५३ ॥

1 A समानबोधत्वात् । 2 N °कर्मकथां । 3 C अवशकुन; N अपश° । 4 N °पेक्षया । 5 N °दपान्ते ।

तस्यास्ति **चन्द्रकान्ता** कान्ता[1] रूपेण जितरतिप्रीतिः ।
शकुनिस्तद्दुहिताऽभूत् **सुदर्शने**त्याख्यया विदिता ।। ५४ ।।
अथ च[2] **जिनदास**नामा**भृगुपुर**सार्थेश्वरः प्रवहणेन । तत्रायासीद् भूपतिरथ तेन प्राभृतैर्ददृशे ।। ५५ ।।
आयुर्वेदी च तदा नृपतेः श्लेष्मोपशामकं चूर्णम् । प्रददे तीव्रत्रिकटुकयुक्तं तल्लेश उत्पतितः ।। ५६ ।।
तेन घ्राणगतेन क्षुतमायातं बलाच्च वणिजोऽस्य । पञ्चपरमेष्ठिमन्त्रः प्रोक्तोऽनेन प्रभावनिधिः ।। ५७ ।।
राजसुता तं श्रुत्वा मूर्च्छां प्राप्ता पुरातनं जन्म । सस्मार जनकपृष्टा प्राच्यं निजगाद निजचरितम्[3] ।।५८।।
अत्याग्रहेण पितरं तत्तीर्थोत्कण्ठिता तदाऽपृच्छत् । अप्रेषयति गुरौ सा प्रतिशुश्रावानशनमेव ।। ५९ ।।
अतिवल्लभापि दुहिता प्रहिता **जिनदास**सार्थवाहेन । आलिभिरष्टादशभिः पदातिभिः षोडशसहस्रैः ।।६०।।
अष्टादशभिर्यानैः मणिकाञ्चनरजतमौक्तिकापूर्णैः । अष्टाभिः कञ्चुकिभिस्तथाङ्गरक्षैश्च तत्संख्यैः ।। ६१ ।।
सहसा सह साऽचालीदशेषपरिवारपरिवृताथ ततः ।
सा प्राप राजपुत्री मासेनोपोषिता तीर्थम् ।। ६२ ।।–त्रिभिर्विशेषकम् ।
श्रीमुनिसुव्रतनाथं प्रणम्य तत्रोत्सवं च विदधेऽसौ ।
तौ **भानु-भूषण**मुनी प्रणनाम च [4]सुकृतिमुकुटमणिः ।। ६३ ।।
धनमानीतं सर्वं ताभ्यां ढौकितवती कृतज्ञतया । निस्सङ्गत्वादाभ्यां निषेधिता भवविरक्ताऽभूत्[5] ।। ६४ ।।
उद्दध्रे सा चैत्यं जीर्णं तीर्थस्य कनकरत्नदलैः । श्री**शकुनिकाविहारः** प्रसिद्धमिति नाम तस्याभूत् ।। ६५ ।।
द्वादशवर्षाणि ततस्तस्वा दुस्तपतपोभरं प्रान्ते । विहितानशना मृत्वा **सुदर्शनाख्या** सुरी समभूत् ।। ६६ ।।
देवीलक्षपरिवृता विद्यादेवीसखीत्वमापन्ना । सा पूर्वभवं स्मृत्वा सुरकुसुमैरर्चति स्म जिनम् ।। ६७ ।।
अष्टादशवरसख्यस्तस्या दुर्गात्वमापुरत्र पुरे । जम्बूद्वीपसमानावासा भुवनेषु निवसन्त्यः ।। ६८ ।।
अथ सा विदेह**नन्दीश्वरा**दितीर्थेषु वन्दते प्रतिमाः । तीर्थकृतां श्रीसुव्रतपदकमलध्यानलयलीना ।। ६९ ।।
श्रीवीरजिनस्य[6] पुरः साऽन्येद्युर्नाट्यमुत्तमं विदधे । तत्र **सुधर्मा**धीशः पप्रच्छ जिनं किमेतदिति ।। ७० ।।
तत्पूर्वभवं सर्वं सर्वज्ञः प्रथयति स्म तत्पुरतः । अस्मात्[7] तृतीयजन्मन्येषा निर्वाणमेष्यति च ।। ७१ ।।
एतत्सामर्थ्यवशाद् **भृगुपुर**मेतन्न भङ्गमाप्नोति । अतिसुरभिपुष्पफलरम्यमेतदिह विजितपरनगरम् ।। ७२ ।।
सकलकुसुमावचयं विचिन्वती प्रतिदिनं जिनार्चायै[8] । परसुरपूजनविघ्नं विदधे संतापदं लोके ।। ७३ ।।
श्रीसंघप्रार्थनया श्रीमत्**कलहंस**सूरयस्तां च । **आर्यसुहस्ति**विनेयाः संस्तभ्य निवारयामासुः ।। ७४ ।।
**सम्प्रतिराजा** च पुनर्जीर्णोद्धारं चकार तीर्थेऽस्मिन् । मिथ्यादृष्टिव्यन्तरवृन्दः तत्रोपससृजे च ।। ७५ ।।
श्री**गुणसुन्दर**शिष्यैर्निवारितास्ते च [9]**कालिकाचार्यैः** । पञ्चाधिकविंशतियोजनान्तरा स्वप्रभावेन ।।७६।।
श्री**सिद्धसेनसूरे**र्दिवाकराद् बोधमाप्य तीर्थेऽस्मिन् । उद्धारं ननु विदधे राजा श्री**विक्रमादित्यः** ।।७७।।
**कालिकसूरिः** प्रतिमां **सुदर्शना**या व्यधापयद् यां प्राक् ।
साऽऽकाशे गच्छन्ती निषेधिता **सिद्धसेनेन** ।। ७८ ।।

**श्रीवीरमुक्तितः शतचतुष्टये चतुरशीतिसंयुक्ते ।**
**वर्षाणां समजायत श्रीमानाचार्यखपुटगुरुः ।। ७९ ।।**
**मिथ्यादृष्टिसुरेभ्यो येन तदा सुव्रतप्रभोस्तीर्थम् ।**
**मोचितमिह ताथागतमतस्थितेभ्यश्च वादिभ्यः ।। ८० ।।**

---

1 नास्ति N 'कान्ता' । 2 A नास्ति 'च' । 3 N वृत्तम् । 4 A सुकृतं° । 5 N B विरक्तत्वात् । 6 N श्रीवीरस्य । 7 N अस्माच्च तृ° । 8 N जिनार्चायैः । 9 A कालका° ।

श्रीवर्धमानसंवत्सरतो वत्सरशताष्टकेऽतिगते ।
पञ्चाधिकचत्वारिंशताधिके समजनि वलभ्याः ॥ ८१ ॥
भङ्गस्तुरुष्कविहितस्तस्मात् ते भृगुपुरं विनाशयितुम् ।
आगच्छन्तो देव्या निवारिताः श्रीसुदर्शनया ॥ ८२ ॥
श्रीवीरवत्सरादथ शताष्टके चतुरशीतिसंयुक्ते ।
जिग्ये स मल्लवादी बौद्धांस्तद्व्यन्तरांश्चापि ॥ ८३ ॥

श्री**सातवाहना**ख्यो भूप इदं तीर्थमुद्धधार पुनः । श्री**पादलिप्तसूरि**र्ध्वजप्रतिष्ठां व्यधात् तत्र ॥ ८४ ॥
प्रत्यक्षीभूय तयोः पुरतो नाट्यं **सुदर्शना** विदधे । विंशतितमतीर्थेश्वरनिरवधि[1]बहुमानशृङ्गारा ॥ ८५ ॥

§ ४. श्री**आर्यखपुट**वंशे सूरिः श्री**विजयसिंह** इत्यासीत् । शमदमनियमतपस्याकमलाकमलोपमाकलितः ॥८६॥
अन्येद्युः **शत्रुञ्जय-रैवतक**प्रभृतितीर्थमुख्येषु । तीर्थाधिपान् प्रणन्तुं व्यहरत् कृतसंयमोद्धारः ॥ ८७ ॥
समगंस्त **सुराष्ट्रा**यां शनैस्ततः प्राप **रैवतक**शैले । तं चारुरोह तीर्थस्वामिध्यानैकलीनमनाः ॥ ८८ ॥
[2]श्रीनेमिनाथतीर्थे शासनरक्षाविचक्षणा देवी । [3]श्रीमत्यम्बाभिधया प्रस्तावात् कथ्यते तदाख्यानम् ॥ ८९ ॥

तद्यथा—

§ ५. काश्यपरोपितनगरे **कासहृदा**ख्ये समस्ति[4] भूदेवः । श्री**सर्वदेव**नामा वेदचतुष्कस्य पारगतः ॥ ९० ॥
तस्यास्ति **सत्यदेवी**त्याख्या वरवल्लभा सतीरत्नम् । पुत्री च तयो**रम्बादेवी**नाम्नी [5]सुकृतिमौलिः ॥ ९१ ॥
यौवनसंप्राप्तां तामवृणोदतिथिश्च **कोटिनगरीयः** । कुलशीलरूपचारुः स **सोमभट्टा**ख्यया विदितः ॥९२॥
उद्वाह्य च स्वनगरे जगाम रामाजनाभिरामां ताम् । उत्सवतो निजगेहं प्राविक्षत् परिहृतक्लेशः ॥ ९३ ॥
एवं गच्छति काले पुत्रद्वयमजनि वृजिनमुक्तायाः । पूर्वो **विभाकरा**ख्यः **शुभंकरो** नामतोऽन्यश्च ॥९४॥
तत्र श्रीनेमिजिनान्तेवासि[6]श्री**सुधर्मसूरी**णाम् । मुनियुगलं तद्वेश्मनि भिक्षार्थैः विशदवृत्तमगात् ॥ ९५ ॥
अम्बादेव्यपि निर्मलमनसा सिद्धं[7] समस्तमप्यन्नम् । दानविधिविहितहर्षा व्यजीहरद् वासनैकविधिः ॥९६॥
प्रहितौ प्रणम्य साधू तावत् प्रायाच्च **सोमभट्ट**श्च । कृतवैश्वदेवकृत्यं विना कथं रसवती स्पृष्टा ॥ ९७ ॥
इत्यपराधोद्भावनपूर्वं दुर्वचनसंहतिमवादीत् । तामसुखविकारां च प्रजहार मुखं[8] चपेटाभिः ॥ ९८ ॥
गृहमानुषैश्च सा मोचिताऽनुकम्पावशात् ततो वनिता । अपमानान्निरगच्छत् पुत्रावादाय सा गेहात् ॥९९॥
आरोहयदथ कट्यां लघुं तथा चाङ्गुलिं प्रसह्य गुरुम् । व्यमृशज्जिनमुनिदाने वरयित्रा[9]ऽहं पराभूता ॥१००॥
तस्मात् स एव मार्गः शरणं [10]मे भवतु जैनविधिविशदः ।
श्री**रैवतगिरि**मभि सा मानारूढा ययौ त्वरितम् ॥ १०१ ॥
क्षुधिता तृषिता श्रान्ता पुनरुच्छ्रितमारुरोह गिरिराजम् ।
ध्यात्वेति सुकृतकामा प्रणनामारिष्टनेमिजिनम् ॥ १०२ ॥
चैत्यान्निर्गत्य ततो विश्रान्ता चूततरुतले तनुजः । परिपक्विमफललुंबीं क्षुधातुरः प्रार्थयामास ॥ १०३ ॥
तामस्य चार्पयित्वा श्रीनेमिस्मरणमथ विधायैषा । झम्पापातं चक्रे तस्माच्छिखरात् सपुत्रापि ॥ १०४ ॥
श्रीनेमितीर्थनाथस्मृतिवशतो दैवतर्द्धिमाप तदा । विस्मृतकोपाटोपो विप्रोऽपि प्रापदनुतापम् ॥ १०५ ॥
अकथितवार्तो निलये सोऽप्यस्या आनुपदिकतां प्राप्य । आरूढो **रैवतके** सहकारं भैरवं[11] चाप ॥ १०६ ॥

---

1 A °वरनिधि° । 2 N श्रीमन्नेमि° । 3 N श्रीमत्पद्मा° । 4 B N समस्त° । 5 A सुकृत° । 6 N °वासी सुध° ।
7 N शुद्धं । 8 N स्वरं । 9 N वरयित्वा° । 10 N नास्ति 'मे' । 11 N रैवतं ।

तच्चितयमूर्तिं मत्वा हत्यादोषी कथं नु जीवामि । आकूणितगन्धज्ञं प्रदर्श्यमानोऽङ्गुलीभिरहम् ॥ १०७ ॥
तस्मान्ममापि मृत्युः श्लाघ्योऽत्रैवार्हता पवित्रेऽद्रौ । [1]याऽमीषां सा मे स्याद् गतिरपरैः प्रलपितैः किं नु ॥१०८॥
एवं विचिन्त्य पेते तत्रैवानेन भैरवे भयदे । लेभे तद्वाहनता सिंहतया व्यन्तरीभूय ॥ १०९ ॥
साऽम्बादेवी [2]श्रीनेमिनाथतीर्थेऽत्र भक्तियुक्तानाम् । साहाय्यं कुर्वाणा तत्र गिरौ विद्यतेऽद्यापि ॥ ११० ॥

§६. अथ **विजयसिंहसूरि**स्तत्राष्टाङ्गप्रणाममाधाय । विहिततीर्थोपवासस्तीर्थेशं तुष्टुवे सुष्ठु ॥ १११ ॥
निरुपमचारित्रनिधिं तत्र प्रेक्ष्यामुमम्बिका देवी । क्षणदायां प्रत्यक्षा[3] भूत्वा प्रणनाम तत्पादौ ॥ ११२ ॥
अम्बा त्वं द्विजपत्नी पतिपरिभूता जिनाङ्घ्रिसरसिरुहम् ।
स्मृत्वा सुरत्वमाप्ता त्वामनु पतिरपि च तादृग्भूत् ॥ ११३ ॥
तस्येति वचः श्रुत्वा हृष्टाऽवादीत् समादिशत किंचित् ।
ते प्राहुरनीहानां कार्यं नः[4] किमपि नास्ति शुभे ! ॥ ११४ ॥
सा निःस्पृहत्वतुष्टा विशेषतस्तानुवाच बहुमानात् ।
गुटिकां गृह्णीत विभो ! चिन्तितकार्यस्य सिद्धिकरीम् ॥ ११५ ॥
चक्षुरदृश्यो गगनेचरश्च रूपान्तराणि कर्ता च । कविताल‍ब्धिप्रकटो विषहृद् बद्धस्य मोक्षकरः ॥ ११६ ॥
भवति जनो गुरुलघुतां प्रपद्यते स्वेच्छया तथावश्यम् ।
अनया मुखे निहितया विकृष्टया तदनु सहजतनुः ॥ ११७ ॥
सुगुरोरनिच्छतोऽपि हि हस्ते मुक्त्वा तिरोदधे च सुरी । वदने तां न्यस्य प्राक् श्रीनेमिस्तवममुं चक्रे ॥११८॥
'नेमिः समाहितधिया'मित्यादिभिरमरवाक्यसंकाशैः ।
काव्यैरस्तौत् श्रीमन्नेमिम्; स्तुतिरस्ति साऽद्यापि ॥ ११९ ॥
सूरिरथ तीर्थयात्रां विधाय चायात् तदा **भृगुक्षेत्रे** । संघप्रवेशमुख्यैर्महोत्सवैस्तं समर्चयत् ॥ १२० ॥

§७. अन्येद्युरङ्कुलेश्वरनगरात् प्रबलेन पवनवेगेन । जाज्वल्यमान उद्वैवंशकटः[5] प्राप तन्नगरे ॥ १२१ ॥
अर्चिर्वलयपरिप्लुत[6]सदनापणहर्म्यचैत्यकोटीषु । अनलः प्रससार तदा सागर इव मुक्तमर्यादः ॥ १२२ ॥
प्रथमकवले तृणावृतगृहाणि कावेल्लुकावृतानि तथा । मध्याहारे किल कुट्टिमानि तृप्त्यर्थमस्यासन् ॥ १२३ ॥
दंदह्यमानमानुषपशुखचराक्रन्दभैरवारावम् । शारदगर्जिरिवो[7]ऽसौ बधिरितवियदनल[8] उत्पेदे ॥ १२४ ॥
भस्मीकृतं समस्तं नगरं तेनेह दहनरूपेण । समवर्तिना सगोपुरदुर्गोररियन्नपरिकरितम् ॥ १२५ ॥
उपशान्ते नियतिवशादनुपक्रमसाध्य ईदृगुपसर्गे । श्रीमुनिसुव्रतचैत्यं काष्ठमयं भस्मसात् तदभूत् ॥ १२६ ॥
पाषाण-पित्तलामयदेवप्रतिमा विशीर्णसर्वाङ्गाः । अभवन् सुव्रतबिम्बं तस्थावेकं तु सदवयवम् ॥ १२७ ॥
विश्वप्रकाशरूपा दाहेमेरस्य ननु नवा मृत्स्ना । समराङ्गण इव मर्दितवीरे स्थैर्यस्थिते पुंसि ॥ १२८ ॥
अथ **विजयसिंहसूरि**र्गुटिकां वदने निधाय सत्पात्रम् । हस्ते कृत्वा तीर्थोद्धाराय स गोचरं व्यचरत् ॥१२९॥
[9]इभ्यब्राह्मणवेश्मसु पूर्वमगाद् धर्मलाभवक्ताऽसौ । श्रीमुनिसुव्रतचैत्योद्धारे भिक्षां प्रयाचे च[10] ॥ १३० ॥
पञ्चाशत् कोऽपि शतं द्विशतीं वा कोऽपि जातरूपस्य । प्रददौ तस्य महर्षेः पञ्चसहस्रास्तदाऽभूवन् ॥ १३१ ॥
अष्टमहासिद्धिभृतस्तस्यासाध्यो धनागमो नैव । चारित्रधनं रक्षन् नादत्तादत्तमिह भगवान् ॥ १३२ ॥
पुनरुददीधरदाशु प्रधानदारुव्रजेन सूत्रभृता । वर्द्धकिरत्नेन तदा चक्रीवाहाय जिनसद्म ॥ १३३ ॥

---

1 N यो । 2 'श्री' नास्ति N । 3 N प्रत्यक्षी° । 4 नास्ति 'नः' A B N; C 'न' । 5 A वंशप्रकट; B N वंशः प्रकटः ।
6 N °प्लुतः । 7 N गर्जितरवो । 8 N °दनिल । 9 B C N एत्य । 10 A बः ।

तत्करवासप्रभवप्रभावतस्तन्न समदहद् वह्निः । अमृतनिधौ तन्मध्ये न प्रभवति किन्तु विध्याति ॥ १३४ ॥
एकादशसु समानां लक्षेषु गतेषु[1] विंशजिनसिद्धेः । पञ्चाशीतिसहस्रीषट्शतषडशीतिसहितेषु ॥ १३५ ॥
जीर्णमुपजिह्विकाभि[2]र्जर्जरकाष्ठं[3] चिरेण तज्जज्ञे । पुनरुद्धध्रे ग्रावभिरंबड इह[4] राणकः श्रीमान् ॥ १३६ ॥
श्री**विजयसिंहसूरि**र्जैनसमयद्रोणिकर्णधारकलः । आयुःप्रान्तेऽनशनं प्रगृह्य [5]दैवीं भुवं प्राप ॥ १३७ ॥
अद्यापि तस्य वंशे प्रभावकाः सूरयः समुदयन्ते । यत्तेजःप्रसरेण प्रसर्पता शासनं जयति ॥ १३८ ॥

इत्थं प्रभोर्विजयसिंहमुनीश्वरस्य वृत्तं पवित्रमतिदुष्करमल्पसत्त्वैः ।
अश्वावबोधवरतीर्थचरित्ररम्यं वृत्तेन चातिशयचारु सुदर्शनायाः ॥ १३९ ॥
अम्बासुरीवरचरित्रपवित्रमत्र संघस्य पुष्टिकरमद्भुतमुन्नतायाः ।
अभ्यस्यमानमतुलं प्रकटप्रभावं भूयात् समस्तजिनशासनवैभवाय ॥ १४० ॥

श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ प्रद्युम्नसूरीक्षितः
शृङ्गोऽजायत षष्ठ एष गुटिकासिद्धस्य वृत्तं प्रभोः ॥ १४१ ॥

## ॥ इति श्रीविजयसिंहसूरि[6]प्रबन्धः[7] ॥

॥ ग्रंथाग्रं १७९ । अ० ७ ॥ उभयं १२८७ ॥ अक्षर ॥ १८ ॥

---

1 N नास्ति 'गतेषु'। 2 'ऊदेही' इति B टि०। 3 A °काष्ठैः। 4 N इव। 5 N पुनर्गृह्य। 6 A °सूरिचरितं नाम प्रबन्धः। 7 A नास्ति 'प्रबन्धः'।

# ७. श्रीजीवसूरिचरितम् ।

§ १. अर्हद्ब्रह्मस्थगोः प्राणोल्लासेन चरणोदयम् । विदधे स ददातु श्रीजीवदेवप्रभुः श्रियः ॥ १ ॥
निजप्राणैः परप्राणान् पूर्वेऽपि स्वाङ्कदा दधुः । अक्षतो [1]जीवजीवातुर्नापरो जीवदेववत् ॥ २ ॥
अद्यप्रातीन[2] ( ? ) कालीयो मादृक्षस्तस्य वर्णने । परं मां मुखरं कर्तुं तद्भक्तेर्नापरः प्रभुः ॥ ३ ॥
लवित्रं जाड्यकक्षस्य वहित्रं पापवारिधेः । धवित्रं दुःखघर्मस्य[3] चरित्रं तस्य कीर्त्यते ॥ ४ ॥
जगत्प्राणः* पुरा देवो जगत्प्राणप्रदायकः । स्वयं सदाऽनवस्थानः स्थानमिच्छन् जगत्यसौ ॥ ५ ॥
**वायटा**ख्यं महास्थानं **गूर्जरावनि**मण्डनम् । ददौ श्रीभूमिदेवेभ्यो ब्रह्मभ्य इव मूर्तिभिः ॥ ६ ॥–युग्मम् ।
शालातालक[4]सम्बन्धनिवेशेन तदा मरुत् । निदधे ब्रह्मशालायां चैत्ये च परमेष्ठिनम्[5] ॥ ७ ॥
मलयाद्रौ यथा सर्वे चन्दनन्ति महीरुहः । ब्राह्मणा वणिजश्चात्र तथासन् **वायटा**ख्यया ॥ ८ ॥
अभूज्जातिः स्फुरज्जातिपुष्पसौरभनिर्भरा । सरसालिभिराराध्या तन्नाम्ना सर्वमूर्द्धगा ॥ ९ ॥
**धर्मदेवः** श्रियां धाम[6] श्रेष्ठी तत्रास्ति विश्रुतः । साक्षाद्धर्म इव न्यायार्जितद्रव्यप्रदानतः ॥ १० ॥
शीलभूस्तस्य कान्तास्ति नाम्ना **शीलवती** यया । आनन्दिवचसा नित्यं जीयन्ते चन्द्रचन्दनाः ॥ ११ ॥
तयोः पुत्रावुभावास्तां श्रेयःकर्मसु कर्मठौ । **महीधरो**[7] **महीपालो**ऽभिधाभ्यां विश्रुताविति ॥ १२ ॥
**महीपालो**ऽप्यभूत् कर्मदोपाद् देशान्तरभ्रमी । **महीधर**श्च सौभ्रात्रस्नेहाद् वैराग्यवानभूत् ॥ १३ ॥
तत्रास्ति जंगमं तीर्थं **जिनदत्तः** [8]प्रभुः पुरा । संसारवारिधेः सेतुः केतुः कामाद्यरिव्रजे ॥ १४ ॥
संप्राप्य सूत्रधारं यं[9] सत्काष्ठोत्कर्षसंघटम् । संपूर्णसिद्धिसौधस्य मध्यमाध्यासताश्रिताः ॥ १५ ॥
अन्यदा तं प्रभुं नत्वा भवोद्विग्नो **महीधरः** । बन्धोर्विरहवैराग्यात् प्रार्थयज्जैनसङ्गमम् ॥ १६ ॥
योग्यं विज्ञाय तं तस्य पितरौ परिपृच्छ्य च । प्रव्रज्यां प्रददौ सूरिरभाग्यालभ्यसेवनः ॥ १७ ॥
गुरुशिक्षां द्विधादायानेकविद्याब्धिपारगः । अतिप्रज्ञाबलात्[10] सोऽभूदभूमिः परवादिनाम् ॥ १८ ॥
भववारिधिनिस्तारपोताभं भविनां भुवि । तं शिष्यं स्वपदे न्यस्य गुरुः प्रेत्यश्रियोऽभजत् ॥ १९ ॥
शाखानुगतनाम्नाऽसौ श्री**राशिल**गुरुस्ततः । विद्याविनोदतः कालं गच्छन्तमपि वेद न ॥ २० ॥
§ २. **महीपाल**स्तथा तस्य बन्धू **राजगृहे** पुरे । प्रापद् दिगम्बराचार्यं **श्रुतकीर्ति**मिति श्रुतम् ॥ २१ ॥
प्रतिबोध्य व्रतं तस्य ददौ नाम च स प्रभुः । **सुवर्णकीर्ति**रिति तं निजां चाशिक्षयत् क्रियाम् ॥ २२ ॥
श्रुतकीर्तिगुरुस्तस्यान्यदा निजं[11] पदं ददौ । श्रीमदप्रतिचक्राया विद्यां च धरणार्चिताम् ॥ २३ ॥
परकायप्रवेशस्य कलां चासुलभां कलौ । भाग्यसिद्धां प्रभुः प्रादात् तादृग्योग्या हि तादृशः ॥ २४ ॥
तत्पुरागतवाणिज्यकृद्भ्यो ज्ञात्वा जनन्यथ । जगाम मिलनायास्य भर्तरि त्रिदिवं गते ॥ २५ ॥
मिलिता तस्य तद्भक्तैर्मानिता मान्यतानिधिः । जननीदृग् गुरो रत्नखानिवत् कस्य नार्हिता ॥ २६ ॥
तीर्थकृद्धर्मतत्त्वानामविवादेऽपि काञ्चन । समाचारभिदां दृष्ट्वा निज एव सुतद्वये ॥ २७ ॥
अवदत् शङ्किता वत्स ! जैने धर्मेऽपि [12]वोऽन्तरम् । श्वेताम्बरोऽतिनिष्ठाभूद्द्रष्टोऽयं निःपरिग्रहः ॥ २८ ॥
किञ्चिद्भवान् सुखी पूजालोलो बहुपरिग्रहः । तन्मे शंस कथं सिद्धिः प्राप्यते व्यापृतैर्जनैः ॥ २९ ॥
ततस्त्वं पूर्वजस्थाने समागच्छ मया सह । यथोभौ भ्रातरौ धर्मं संविचार्यार्यसम्मतम् ॥ ३० ॥

---

1 C N मृतजीवातु° । 2 N प्राचीन° । 3 N °धर्मस्य । * 'वायुः' इति C टि० । 4 B °तालाक° । 5 A C परमेष्ठिना ।
6 N धर्मश्रेष्ठी । 7 N महीधरमहीपालाभिधाभ्यां । 8 A °दत्तप्रभुः । 9 A यः । 10 B C N बलः । 11 B C निजपद° ।
12 A चान्तरम् ।

शास्त्रैः प्रमाणसिद्धान्तैर्बुध्येथामितरेतराम् । तदेकमतिकौ भूत्वा धर्मे स्थापयतं हि माम् ॥ ३१ ॥
स मातुलपरोधेन विजह्रे वायटे पुरे । नाशिक्याविव तौ तत्राभिन्नरूपौ च संगतौ ॥ ३२ ॥
आचार्यौ किल सोदर्यौ श्वेताम्बर-दिगम्बरौ । स्वस्वाचारं तथा तत्त्वविचारं प्रोचतः स्फुटम् ॥ ३३ ॥
दिग्वासा निर्म्ममाभासः सद्व्रतः श्वेतवाससा । अपि प्रौढवचःशक्तिर्बोधितः शोधितांहसा ॥ ३४ ॥
तावन्यदा सवित्र्या च भिक्षावृत्त्यै निमन्त्रितौ । महाभक्त्या तदाचारदर्शनार्थं च किञ्चन ॥ ३५ ॥
एकः शुश्रूषितस्थालीवृन्दे भोज्यविधिः कृतः । सामान्यो मध्यमस्थानेष्वपरः प्रवरः[1] पुनः ॥ ३६ ॥
दिग्वासाः पूर्वमायातो द्वेधाप्यस्याथ दर्शितः । अमत्रनिकरो रम्यभाण्डस्थस्तेन चादृतः ॥ ३७ ॥
यावद्दृष्टः कदर्योऽसौ शीतो दग्धो विसंस्कृतिः । सविकारं मुखं बिभ्रदपश्यन् मातरं तदा ॥ ३८ ॥
तथा द्वितीयपुत्रस्य साधुयुग्मं समागतम् । प्रदर्श्य भोज्ययुग्मं च जननी प्राह हर्षतः ॥ ३९ ॥
अनयोरुचितं यद् वस्तद् गृह्णीतेति जल्पिते । विमृश्य प्राहतुः साधू ग्राह्यं नः शुद्धमेव तत् ॥ ४० ॥
आधाकर्मिकदोषे च संदिग्धे कल्पते न तत् । अपि द्वयमनादायागातां तौ मुनिसत्तमौ ॥ ४१ ॥
अथ प्राह सवित्री च सवित्री धर्मकर्मणः । सुतं दिगम्बराचार्यं 'दृष्टं भ्रातृव्रतं त्वया ?' ॥ ४२ ॥
बही रम्ये शुभाभासे[2] रक्तानामलकं फलम् । आहार इव धर्मेऽपि ध्यात्वेति स्वरुचिं कुरु ॥ ४३ ॥
प्रतिबुद्धो जनन्या स वाग्भिर्बन्धोश्च सन्मतिः । भास्वान् प्रपद्यते सैष महसे निर्मलाम्बरम् ॥ ४४ ॥
श्रीराशिलप्रभोः पार्श्वे दीक्षा-शिक्षाक्रमादयः[3] । जैनागमरहस्यानि जानन् गीतार्थतां ययौ ॥ ४५ ॥
अन्यदा सद्गुरुर्योग्यं बन्धुं पट्टे न्यवीविशत् । श्रीजीवदेव इत्याख्याविख्यातः सद्गुरुर्बभौ ॥ ४६ ॥
§ ३. यतिपञ्चशतीरूपपरिवारविराजितः । आन्तरद्वेषिनिष्पेषनिस्त्रिंशः सदयोऽपि सन् ॥ ४७ ॥
व्याख्यां कुर्वन्नुदग्रश्रीः श्रीवीरभवनेऽन्यदा । योगिना भोगिना दृष्टिविषेणेवेक्षितो गुरुः ॥ ४८ ॥–युग्मम् ।
दध्यौ च '[4]स महातेजाः सकलो धवलाम्बरः । सार्वभौम इवाभाति जनेऽस्मिन् विस्मयं दधन् ॥ ४९ ॥
प्राकृतोपद्रवे शक्तिर्या सा का मेऽस्य चेदिह । विदधे किमपि क्षूणमक्षूणं तदहं पुमान् ॥ ५० ॥
विमृश्येति सभामध्यमध्यासीनः स्वलोलया[5] । लोलयाबध्य पर्यङ्कमुपाविशदिलातले ॥ ५१ ॥
वाचकस्य रसज्ञां चास्तम्भयन् मौनवान् स च । अभूत् तद(दि)ङ्गितैर्ज्ञातं गुरुणा योगिकर्म तत् ॥ ५२ ॥
स्वशक्त्या वाचने शक्तं स्वं विनेयं विधाय च । अमुञ्चत् समये व्याख्यामव्याकुलमनाः प्रभुः ॥ ५३ ॥
तस्य पर्यस्तिकाभूमावासनं वज्रलेपवत् । तस्थौ यथा तथा तस्य प्रस्तरेणेव निर्मितम् ॥ ५४ ॥
ततोऽवददसौ कृत्वा करसम्पुटयोजनम् । अलीकप्रणिपातेन महाशक्ते ! विमुञ्च माम् ॥ ५५ ॥
अपि श्रद्धालुभिः कैश्चिद् विज्ञप्तः कृपया प्रभुः । मुक्तोऽगात् तेन कः शक्तः कुञ्जरेणेक्षुभक्षणे ॥ ५६ ॥
प्रभुर्न्यषेधयत् तत्र साधुसाध्वीकदम्बकम् । उदीच्यां दिशि गच्छन्तं स्वीकृतायां कुयोगिना ॥ ५७ ॥
धर्मकर्मनियोगेन साध्वीयुगमगात् ततः । तत्र कासारसेतौ च तिष्ठन् योगी ददर्श तत् ॥ ५८ ॥
अथ सन्मुखमागत्य लाघवालाघवाश्रयः । एकस्या मूर्ध्नि चूर्णं च किञ्चिच्चिक्षेप निष्कृपः ॥ ५९ ॥
तस्य सा पृष्ठतो गत्वा पार्श्वे निविविशे ततः । वृद्धयोक्ता न चायाति धिक्कष्टं पूज्यलंघनम् ॥ ६० ॥
साध्वुरागत्य सूरीणां सा तद्वृत्तं व्यजिज्ञपत् । मा विषीद[6] भलिष्यामः कार्येऽत्रेति प्रभुर्जगौ ॥ ६१ ॥
ततः कुशमयं तत्र पुत्रकं ते समार्पयन् । चतुर्णां श्रावकाणां च शिक्षित्वा तेऽप्यथो ययुः ॥ ६२ ॥
निर्गत्य च बहिश्चैत्याच्छित्वा तस्य कनिष्ठिकाम् । तत्पार्श्वगाः करं तस्य ददृशुस्ते निरङ्गुलिम् ॥ ६३ ॥
पृष्टः कस्मादिदं जातमकस्मादिति सोऽवदत् । ऊचे तैर्मुच्यतां साध्वी बहुप्रत्यूहकारिणी ॥ ६४ ॥

---

1 N प्रवरः । 2 N शुभाभ्यासे । 3 A B N °क्रमोदयः । 4 N स च । 5 N स्वलीलया । 6 N विषादं ।

अमानयति तां वाचं तत्र ते पुत्रकाङ्गुलिम् । द्वितीयां पश्यतस्तस्याछिन्दन् साऽप्यत्रुटद् द्रुतम् ॥ ६५ ॥
अथाभ्यधुर्दण्डसाध्या नीचास्तत्कृपयाऽङ्गुली । तव छिन्ना शिरश्चैवं छिनद्मश्चेत् त्वकं कुतः ॥ ६६ ॥
मुञ्च साध्वीं न चेत् पापं छेत्स्यामस्तव मस्तकम् । न जानासि परे स्वे वा शक्त्यन्तरमचेतन ! ॥ ६७ ॥
सम्यग् भीतस्ततः सोऽपि प्राह नीरेण सिच्यताम् । अस्याः शिरस्ततो यातु निजं स्थानमनाकुला ॥ ६८ ॥
तथा कृते च तैः साध्वी तत्र साऽभूत् सचेतना । आगत्य च निजं स्थानं सा बालाऽऽलोचनां ललौ ॥६९॥
भीतभीतः[1] पलाय्यासौ योगी देशान्तरं ययौ । तादृशां किं वराकाणां गम्या गुरव ईदृशाः ॥ ७० ॥

§४. इतः श्री**विक्रमादित्यः** शास्त्य**वन्तीं** नराधिपः । अनृणां पृथिवीं कुर्वन् प्रवर्तयति वत्सरम् ॥ ७१ ॥
**वायटे** प्रेषितोऽमात्यो **लिम्बाख्य**स्तेन भूभुजा । जनानृण्याय जीर्णं चापश्यच्छ्रीवीरधाम तत् ॥ ७२ ॥
उद्दधार स्ववंशेन निजेन सह मन्दिरम् । अर्हतस्तत्र सौवर्णकुम्भदण्डध्वजालिभृत् ॥ ७३ ॥
**संवत्सरे प्रवृत्ते सषट्सु वर्षेषु पूर्वतः । गतेषु सप्तमस्यान्तः प्रतिष्ठां ध्वज-कुम्भयोः ॥ ७४ ॥**
श्री**जीवदेवसूरि**भ्यस्तेभ्यस्तत्र व्यधापयत् । अद्याप्यभङ्गं तत्तीर्थममूदृग्भिः प्रतिष्ठितम् ॥ ७५ ॥

§५. इतश्चास्ति **महास्थाने** प्रधानो नैगमव्रजे । दारिद्र्यारिजये मल्लः श्रेष्ठी **लल्लः** कलानिधिः ॥ ७६ ॥
महामाहेश्वरः कोटिसंख्यद्रव्येण भास्वरः । महादानं मुदा सोऽदात् सूर्यग्रहणपर्वणि ॥ ७७ ॥
तथा होमं समारब्धवता तेन द्विजोत्तमाः । ऋत्विजो यायजूकाश्चाहूता अध्वरदीक्षिताः ॥ ७८ ॥
तानभ्यर्च्य महाभक्त्या वेदविद्याविशारदाम् । प्रावर्त्यत ततो होमः प्रौढमन्त्रस्वरोर्जितः ॥ ७९ ॥
तत्र कुण्डोपकण्ठेऽहिस्तदूर्ध्वस्थाम्लिकाद्रुमात् । धूमाकुलाक्षियुग्मोऽसौ फटत्फटिति चापतत् ॥ ८० ॥
आदातुमेष भोगीन्द्रः स्वयमागत आहुतीः । वाचालेषु द्विजेष्वेवं कोऽपि वह्नौ तमक्षिपत् ॥ ८१ ॥
जाज्वल्यमानमुद्वीक्ष्य यजमानः सुधीश्च तम्[2] । कृपया कम्पमानाङ्गः प्राह किं दुष्कृतं कृतम् ॥ ८२ ॥
जीवन् पञ्चेन्द्रियो जीवः स्फुटं दृश्यः सचेतनः[3] । सहसैव ज्वलद्वह्नौ क्षिप्यते धर्म एष कः ॥ ८३ ॥
अध्वर्युराह च श्रेष्ठिन् ! नहि दोषोऽस्ति कश्चन । सुमन्त्रसंस्कृते वह्नौ पतितः पुण्यवानहिः ॥ ८४ ॥
यतोऽत्र ज्वलने मृत्वा हिंस्रजीवा महांहसः । प्राप्नुयुर्देवभूयं ते [4]सुमानुष्यमथ ध्रुवम् ॥ ८५ ॥
तत् प्रत्युतोपकारोऽयं विदधे बटुनाऽमुना । अतोऽल्पमपि नैव त्वं सन्तापं कर्तुमर्हसि ॥ ८६ ॥
कृपालुरास्तिकश्चेत् त्वं प्रायश्चित्तं ततः कुरु । सौवर्णं द्विगुणं तस्मादर्हिं देहि द्विजव्रजे ॥ ८७ ॥
तदादेशादसौ सर्पं क्षिप्रं हैममचीकरत् । मन्त्रैस्तं संस्कृतं दृष्ट्वा छेदकाले तमब्रवीत् ॥ ८८ ॥
पूर्वस्य फणिनो हिंसापापेऽसौ कारितो मया । एतद्वधेऽपरः कार्योऽनवस्थाऽऽपद्यतात्र तत् ॥ ८९ ॥
ततोऽहं नावगच्छामि धर्ममेनं कथं मृषा[5] । विप्लावयत मां तस्माद् विसृष्टं सकलं मया ॥ ९० ॥
वह्निर्विध्यापितः कुण्डमुद्वृत्तं प्रेषिता द्विजाः । शान्ते मैरेयमाहात्म्ये न कोऽप्यसदृशं चरेत् ॥ ९१ ॥
ततःप्रभृत्यसौ धर्मे दर्शनानि समीक्षते । भिक्षायै तद्गृहे प्राप्तं श्वेताम्बरमुनिद्वयम् ॥ ९२ ॥
अन्नं संस्कृत्य चारित्रपात्राणां यच्छत ध्रुवम् । अमीषां ते ततः प्रोचुर्नास्माकं कल्पते हि तत् ॥ ९३ ॥
पृथिव्यापस्तथा वह्निर्वायुः सर्वो वनस्पतिः । त्रसाश्च यत्र हन्यन्ते कार्ये नस्तन्न गृह्यते ॥ ९४ ॥
अथ चिन्तयति श्रेष्ठी वितृष्णत्वादहो ! अमी । निर्ममा निरहङ्काराः सदा शीतलचेतसः ॥ ९५ ॥
ततोऽवददसौ धर्मं निवेदयत मे स्फुटम् । ऊचतुस्तौ प्रभुश्चैत्ये स्थितस्तं कथयिष्यति ॥ ९६ ॥
इत्युक्त्वा गतयोः स्थानं स्वं तयोरपरेऽहनि । ययौ **लल्लः** प्रभोः पार्श्वे चक्रे धर्मानुयोजनम् ॥ ९७ ॥

1 A B भीतो भीतः । 2 N तान् । 3 A सचेतनैः । 4 N समानुष्य° । 5 A वृथा ।

ते च प्राहुर्दया धर्मः सर्वज्ञो देवता जिनः । महाव्रतधरो धीरो गुरुर्ध्वस्तान्तरद्विषन् ॥ ९८ ॥
रागाद्यङ्काश्रयो देवो गुरुश्च सपरिग्रहः । धर्मश्च पशुहिंसाभिरेष मिथ्याभ्रमो महान् ॥ ९९ ॥
तस्मात् परीक्षया धर्मं प्रतिपद्यस्व धार्मिक ! । परीक्षापूर्वकं टंकाद्यपि युष्माभिरिष्यते ॥ १०० ॥
श्रुत्वेति स प्रपेदेऽथ ससम्यक्त्वां व्रतावलीम् । धर्मं चतुर्विधं ज्ञात्वा समाचरदहर्निशम्[1] ॥ १०१ ॥
आह चैष प्रभो ! किंचिदवधारयताधुना । द्रव्यलक्षस्य सङ्कल्पो विहितः सूर्यपर्वणि ॥ १०२ ॥
तदर्धं व्ययितं धर्माभासे वेद-स्मृतीक्षिते । कथमर्द्धं[2] मया शेषं व्ययनीयं[3] तदादिश ॥ १०३ ॥
मम चेतसि पूज्यानां दत्तं बहुफलं भवेत् । तद् गृह्णीत प्रभो यूयं यथेच्छं [4]दत्तमादरात् ॥ १०४ ॥
अथाहुर्गुरवो निष्किञ्चनानां नो धनादिके । स्पर्शोऽपि नोचितो यस्माद् वक्तव्यं किं नु संग्रहे ॥ १०५ ॥
चिन्तां भवांस्तु मा कार्षीत् श्वः सन्ध्यासमये तव । प्रक्षालितैकपादस्य प्राभृतं यत् प्रढौकते ॥ १०६ ॥
समीपे नस्तदानेयं कथयिष्यामहे ततः[5] । श्रुत्वेति सदनं सोऽगाद् विमृशन् स्वगुरोर्वचः ॥ १०७ ॥
परेऽह्नि चोक्तवेलायां कश्चिद् वर्द्धकिरानयत् । तां शय्यापालिकां नो या भूपस्यापि परिग्रहे ॥ १०८ ॥
स्मरन् गुरुवचः श्रेष्ठी तेन सार्द्धमुपाश्रये । गत्वा व्यजिज्ञपत् [6]पूज्यपुरतो विस्मयोन्मुखः ॥ १०९ ॥
प्रभवः पुनरागत्य वासान् निक्षिप्य धूर्वहो । तदाधिवासयामासुरादिशंश्चेति तं स्फुटम् ॥ ११० ॥
धुरंधराविमौ यत्र प्रयान्तौ तिष्ठतः स्वयम् । तत्र जैनालयं रम्यं द्रव्येणानेन कारय ॥ १११ ॥
ओमिति प्रतिपद्याथ धौरेयौ मुञ्चति स्म सः । मुत्कलौ जग्मतुर्ग्रामे **पिप्पलानक**नामनि ॥ ११२ ॥
तत्रावकरदेशे च[7] स्थितौ न चलतस्ततः । ग्रामाधिपतिरेतस्य गौरवाद् भूमिमार्पयन्[8] ॥ ११३ ॥
तत्र कर्मान्तरे सूत्रधारैर्द्राग् विहिते सति । शिखरं मण्डप[9]प्रासादस्य संपूर्णतामगात् ॥ ११४ ॥
अवधूतः पुमान् कश्चिदपरेद्युः समाययौ । दृष्ट्वा प्रासादमाधत्त प्रशंसां घ्राणकूणकः ॥ ११५ ॥
जनैस्तद्दूषणं पृष्टो जगाद प्रकटं स च । स्त्रियोऽस्थिशल्यमत्रास्ति विश्वदूषणशेखरः ॥ ११६ ॥
विज्ञापिते च पूज्यानां मानयित्वा च तेऽदिशन् । उत्कील्य शल्यमाधाय चैत्यमारभ्यतां पुनः ॥ ११७ ॥
द्रव्याभावोद्भवा चिन्ता कार्य्या **लल्ल** ! नहि त्वया । द्रव्यं ते तदधिष्ठात्र्यः पूरयिष्यन्ति पुष्कलम् ॥११८॥
उत्कीलने समारब्धे निशि शुश्रुविरे स्वराः । नोत्कील्यमित्यवज्ञाते[10] निपतन्त्यत्र लोष्टकाः ॥ ११९ ॥
पुनराख्यापिते वन्द्यपादा ध्यानमपूरयन् । देवाह्वाने कृते तत्र देवी साक्षादथाह तान् ॥ १२० ॥
***कन्यकुब्ज**महीभर्तुर्महिता दुहिता ह्यहम् । स्वीये सुखादिकादेशे† तिष्ठन्ती **गूर्जरा**भिधे ॥ १२१ ॥
म्लेच्छभङ्गभयादत्र कूपेऽहं न्यपतं तदा । अभूवं भूम्यधिष्ठात्री मृत्वा स्वं चास्ति मे बहु ॥ १२२ ॥
ततः स्वाङ्गास्थिशल्यानि नानुमन्ये विकर्षितुम् । ममाननुमतौ कोऽपि किंचित् कर्तुं नहि प्रभुः ॥ १२३ ॥
धर्म्मस्थानेषु पूज्यत्वं वारये प्रभवस्ततः । एनामन्वनयन् शान्ता ततोऽर्मीषां वचोऽमृतैः ॥ १२४ ॥
अवोचद् यदि मामत्राधिष्ठात्रीं कुरुताधुना । तद्द्रव्यसहिताभूमिर्धर्मस्थानाय गृह्यताम् ॥ १२५ ॥
गुरुभिः प्रतिपन्ने च चैत्ये निर्वर्त्तिते वरे । ते देवकुलिकां तस्या योग्यां पृथगचीकरन् ॥ १२६ ॥
आख्या भ व न दे वी ति कृता तस्यास्तदत्र च । अचिंत्यशक्तिरद्यापि पूजां प्राप्नोति धार्मिकैः ॥ १२७ ॥

§ ६. अथ **लल्लं** द्विजा दृष्ट्वा जिनधर्म्मैकसादरम् । स्वभावं स्वमजानाना दधुर्जैनेषु मत्सरम् ॥ १२८ ॥
ततः संचरतां मार्गे साधूनां गोचरादिके । उद्वेगं ते प्रकुर्वन्ति गिरीणां वारणा इव ॥ १२९ ॥

1 A अहर्दिवम् । 2 A कथमर्थं । 3 N व्यपनीयं । 4 B C दत्तं वा ( चा ? ) दरात् । 5 N तव । 6 N पूज्यं । 7 N ऽथ । 8 A भूमिरार्पयत् । 9 N मण्डपं; B मण्डपः । 10 B N ॰विज्ञाते । * 'छत्रीस लाष गाम कनूज देसि' इति B टि० । † 'सूखडी' इति C टि० ।

इत्थमालोचिते तैश्च गुरुः प्राह क्षमावशात् । उपसर्गा विलीयन्ते रहस्यमिदमेव नः ॥ १३० ॥
अन्यदा बटवः पापपटवः कटवो गिरा । आलोक्य सुरभिं कांचिदंचन्मृत्युदशास्थिताम्* ॥ १३१ ॥
उत्पाट्योत्पाट्य चरणान् निशायां तां भृशं कृशाम् ।
श्रीमहावीरचैत्यान्तस्तदा प्रावेशयन् हठात् ॥ १३२ ॥–युग्मम् ।
गतप्राणां च तां मत्वा बहिः स्थित्वाऽतिहर्षतः । ते प्राहुरत्र विज्ञेयं जैनानां वैभवं महत् ॥ १३३ ॥
वीक्ष्यः प्रातर्विनोदोऽयं श्वेताम्बरविडम्बकः । इत्थं च कौतुकाविष्टास्तस्थुर्देवकुलादिके ॥ १३४ ॥
ब्राह्मे मुहूर्त उत्थाय यतयो यावदङ्गणे । पश्यन्ति तां मृतां चेतस्यकस्माद् विस्मयावहाम् ॥ १३५ ॥
निवेदिते गुरूणां च चित्रेऽस्मिन्नरतिप्रदे । अचिन्त्यशक्तयस्ते च नाक्षुभ्यन् सिंहसन्निभाः ॥ १३६ ॥
मुनीन् मुक्त्वाऽङ्गरक्षार्थं मठान्तः पट्टसन्निधौ । अमानुषप्रचारेऽत्र ध्यानं भेजुः स्वयं शुभम् ॥ १३७ ॥
अन्तर्मुहूर्तमात्रेण सा धेनुः स्वयमुत्थिता । चेतनाकेतनाचित्रहेतुश्चैत्याद् बहिर्ययौ ॥ १३८ ॥
पश्यन्तस्तां च गच्छन्तीं प्रवीणब्राह्मणास्तदा । दध्युरध्युषिता रात्रौ मृता चैत्यात् कथं निरैत् ॥ १३९ ॥
नाणुकारणमत्रास्ति व्यसनं दृश्यते महत् । अवद्धा विप्रजातिर्यद् दुर्मेहा बटुमंडली ॥ १४० ॥
एवं विमृशतां तेषां गौर्ब्रह्मभवनोन्मुखी । प्रेंखत्पदोदया पिप्यस्नेहेनेव द्रुतं[1] ययौ ॥ १४१ ॥
यावत् तत्पूजकः प्रातर्द्राग्मुद्धाटयत्यसौ । उत्सुका सुरभिर्ब्रह्मभवने तावदाविशत् ॥ १४२ ॥
खेटयन्तं बहिः शृङ्गयुगेनामुं प्रपात्य च । गर्भागारे प्रविश्यासौ ब्रह्ममूर्तेः पुरोऽपतत् ॥ १४३ ॥
तद्ध्यानं पारयामास **जीवदेव**प्रभुस्ततः । पूजको झल्लरीनादान्**महास्थान**ममेलयत् ॥ १४४ ॥
विस्मिता ब्राह्मणाः सर्वे मतिमूढास्ततोऽवदन् । तदा दध्युरयं स्वप्नः सर्वेषां [2]वा मतिभ्रमः ॥ १४५ ॥
समकालमभूत् तत्किं गौर्मृता चलिताऽपि च । तदप्यस्तु कथं ब्रह्मशालामाजग्मुषी स्वयम् ॥ १४६ ॥
दैवदुर्घटितस्यास्य शक्या नहि विचारणा ।
ज्योतिर्विदामपि ज्ञानादतीतं कार्यमागतम् ॥ १४७ ॥–त्रिभिर्विशेषकम् ।
अन्ये प्रोचुर्विचारः को बटूनां दुर्नयाम्बुधिः । भृशमुल्लंघ्य मर्यादां स्थानमुत्पातयिष्यति[3] ॥ १४८ ॥
अन्यत्र स्थानमाधत्त स्थानवासिद्विजव्रजाः । वायुनैव गता वायोः कीर्त्तिः स्थानादतो ध्रुवम् ॥ १४९ ॥
अपरे प्राहुरेको न उपायो व्यसने गुरौ । मृगेन्द्रविक्रमं श्वेताम्बरं चैत्यान्तरस्थितम् ॥ १५० ॥
प्रणिपत्य प्रपद्यन्तां तं तथ्यं पुरुषं रयात् । अपारोऽयं हि चिन्ताब्धिस्तेन पोतेन तीर्यते ॥ १५१ ॥–युग्मम् ।
अन्ये प्राहुः स्फुरद्दम्भैर्युष्मद्डिम्भैर्विराधितः[4] । अहर्निशं प्रसक्तिं स भवतां भजतां कथम् ॥ १५२ ॥
कृतानुपद्रवानित्थं प्राकृतोऽपि न मृष्यति । किममानुषसामर्थ्यो जैनर्षिर्मूर्तिमान् विधिः ॥ १५३ ॥
एकेऽवोचन् तथाप्यस्योपरोधः क्रियतेऽधुना । उत्तमप्रकृतिर्यस्मात् प्रणामाद् वैरमुज्झति ॥ १५४ ॥
एवमेकमतीभूय द्वेधा श्रीवीरमन्दिरे[5] । भूमिदेवा ययुः पूज्यास्थानं धार्मिकमण्डितम् ॥ १५५ ॥
योजयित्वाऽथ ते प्रोचुर्ललाटे करसम्पुटम् । अवधारय वाचं नो मग्नानामार्तिपञ्जरे ॥ १५६ ॥
वायुर्नाम सुरः पूर्वं स्थानमेतन्न्यवीविशत् । तत्तुल्य**जीवदेवाख्या**वशतः सारतस्तव[6] ॥ १५७ ॥
ततोऽस्य व्यसने प्राप्ते बटुकूटापराधतः । प्रतिकर्तुं तवैवास्य बलो नान्यस्य भूतले ॥ १५८ ॥
ततस्तदवतारस्त्वं पालयापालय प्रभो! । स्थानं स्वयशसः स्थानं जीवदानं ददज्जने[7] ॥ १५९ ॥

---

* 'मृत्युकाल हूकडु' इति B टि० । 1 N द्रुता । 2 N च । 3 C N °मुत्पाटयिष्यति । 4 N विशेषितः । 5 A जैनमन्दिरे । 6 °तथा । 7 N ददस्व नः ।

स्वस्य नामान्तरस्यास्य प्रतिभू स्त्वं यदीच्छसि । तद्रक्ष तेऽन्यथाभावि स्थिरमस्थैर्यदुर्यशः ॥ १६० ॥
सूरौ श्रुत्वेति तूष्णीके लल्लः फुल्लयशा जगौ । मद्विज्ञप्तिं द्विजा यूयमेकां शृणुत सूनृताम् ॥ १६१ ॥
विरक्तोऽहं भवद्धर्माद् दृष्ट्वा जीववधं ततः । अस्मिन् धर्मे दयामूले लग्नो ज्ञातात् स्वकाग्रतु ॥ १६२ ॥
जैनेष्वसूयया यूयमुपद्रवपरंपराम् । विधत्थ प्रतिमल्लः कस्तत्र वः स्वल्पशत्रवः ॥ १६३ ॥
मर्यादामिह काञ्चिचेत् यूयं दर्शयत स्थिराम् । तदहं पूज्यपादेभ्यः किंचित् प्रतिविधापये ॥ १६४ ॥
अथ प्रोचुः प्रधानास्तं[1] त्वं युक्तं प्रोक्तवानसि । कः समः क्षमयाऽमीषां दुर्वारेऽस्मदुपद्रवे ॥ १६५ ॥
स्वरुच्या सांप्रतं जैनधर्मे सततमुत्सवान् । कुर्वतां धार्मिकाणां न कोऽपि विघ्नान्[2] करिष्यति ॥ १६६ ॥
अस्तु च प्रथमो बंटः[3] श्रीवीरव्रतिनां तथा । सदाऽन्तरं न कर्त्तव्यं भूमिदेवैरतः परम् ॥ १६७ ॥
प्रतिष्ठितो नवाचार्य्यैः सौवर्णमुपवीतकम् । परिधाप्याभिषेक्तव्यो ब्राह्मणैर्ब्रह्ममन्दिरे ॥ १६८ ॥
इत्यभ्युपगते तैश्च लल्लः सद्गुरुपादयोः । निवेश्य मौलिमाचख्यौ महास्थानं समुद्धर ॥ १६९ ॥
श्रीजीवदेवसूरिश्च प्राहोपशमवर्म्मितः । कालत्रयेऽपि नास्माकं रोष-तोषौ जनद्विषौ ॥ १७० ॥
प्रत्यूहव्यूहघातिन्यः परं शासनदेवताः । इदानीमपि ता एव भलिष्यन्ति मम स्मृतौ[4] ॥ १७१ ॥
इत्युक्त्वाऽन्तर्मठं ध्यानासने संस्थाय सूरयः । निगृह्य रेचकं कुम्भकेन नासाग्रदृष्टयः ॥ १७२ ॥
तस्थुर्मुहूर्त्तमात्रेण तावद् गौर्ब्रह्मवेश्मतः । उत्थाय चरणप्राणं कुर्वती निर्जगाम सा ॥ १७३ ॥
कौतुकाद् दृश्यमानाऽसौ हर्षोत्तालद्विजव्रजैः । पुरो बाह्यप्रदेशोर्व्यां निरालम्बाऽपतद् द्रुतम्[5] ॥ १७४ ॥
आस्थानं पुनराजग्मुर्गुरवो गुरवो गुणैः । वेदोदिताभिराशीर्भिर्विप्रैश्चक्रे जयध्वनिः ॥ १७५ ॥
ततः प्रभृति सौदर्यसम्बन्धादिव वायटे । स्थापितस्तैरिह स्नेहो जैनैरद्यापि वर्त्तते ॥ १७६ ॥
§७. विजह्रुरन्यतः पूज्या ज्ञात्वा कालं तु ते पुनः । स्वस्थानमागमन् योग्यं शिष्यं पट्टे न्यवीविशन् ॥ १७७ ॥
स्वयं सर्वपरित्यागं कृत्वा धृत्वाऽऽर्जवे मनः । ददुः शिक्षां गणस्याथ नवसूरेश्च सूरयः ॥ १७८ ॥
गच्छप्रवर्त्तकस्याथादेशं राहस्यिकं ददुः । योगी प्रतिहतोऽस्माभिर्यः पुरा सिद्ध एव सः ॥ १७९ ॥
अनेकसिद्धिसंयुक्त एकखंडकपालवान् । अस्माकं निधनं ज्ञात्वा स चागन्तात्र निश्चितम् ॥ १८० ॥
अप्यस्माकं कपालं चेत् सैष प्राप्स्यत्यधर्मधीः । शासनस्योपसर्गांस्तद् विधास्यति तथाविधान् ॥ १८१ ॥
ततः स्नेहं परित्यज्य निर्जीवेऽस्मत्कलेवरे । कपालं चूर्णयध्वं चेत् तत्र स्यान्निरुपद्रवम् ॥ १८२ ॥
इहार्थे मामकीनाज्ञापालनं ते कुलीनता । एतत्कार्यं ध्रुवं कार्यं [6]जैनशासनरक्षणे ॥ १८३ ॥
इति शिक्षां प्रदायास्मै प्रत्याख्यानविधिं व्यधुः । विधायाराधनां दध्युः परमेष्ठिनमस्कृतीः ॥ १८४ ॥
निरुध्य पवनं मूर्ध्ना मुक्त्वा प्राणान् गुणाब्धयः । वैमानिकसुरावासं तेऽतिश्रियमशिश्रियन् ॥ १८५ ॥
लब्धलक्षस्ततो दण्डमुद्दण्डं परिगृह्य सः । कपालं चूर्णयामास यथाऽऽकारोऽपि नेक्ष्यते ॥ १८६ ॥
लोकशोकोत्सवोन्मुद्रशब्दाद्वैते भवत्यथ । शिबिकास्थं गुरुवपुर्गीतार्था अवहन्त तत् ॥ १८७ ॥
योगी डमरुकध्वानभैरवस्तत्र चाययौ । क एष पुरुषोऽतीत इत्यपृच्छच्च तं जनम् ॥ १८८ ॥
प्रधानब्राह्मणश्चैकः पुरस्तस्येत्यथावदत् । छिन्नश्मश्रूणि सोऽश्रूणि विमुञ्चन् गद्गदस्वरम् ॥ १८९ ॥
वायोरिवापरा मूर्त्तिर्जीवदेवो मुनीश्वरः । महास्थानधरोद्धारवराहो दिवमीयिवान् ॥ १९० ॥
श्रुत्वा स कपटात् शोकं बिभ्रद् वक्षो विघातयन् । विधायोर्जितपूत्कारं रोदनं भृशमब्रवीत् ॥ १९१ ॥
एकदा भो ! मदीशस्य वक्त्रं दर्शयताधुना । अन्यथा स्वशिरोघातं कृत्वा त्यक्ष्याम्यसून् ध्रुवम् ॥ १९२ ॥

1 N ते । 2 A विघ्नं । 3 B वृढः । 4 B स्मृतेः । 5 N अपद्रुतं । 6 N जिन° ।

तत्र प्रवर्तकोऽवोचन्मुच्यतां शिबिकां भुवि। प्रभोर्मित्रमसौ योगी दृष्ट्वास्यं जीवताद् घनम्॥ १९३॥
विमुक्ते याप्ययाने च प्रकाशे तन्मुखे कृते। चूर्णितं तच्च दृष्ट्वासौ हस्तौ घृष्ट्वाऽब्रवीदिदम्[1]॥ १९४॥
एकखंडं कपालं श्रीविक्रमादित्यभूपतेः। ममाचार्यस्य चास्य स्यात् पुण्यपुरुषलक्षणम्॥ १९५॥
करे मेऽस्य कपालं चेदारोक्ष्यन्मे मनोरथाः। अपूरिष्यन्त[2] किं कुर्मो नाभाग्यैः प्राप्यमीदृशम्॥ १९६॥
जीवता च मृतेनापि सख्याहं घृष्ट [3]एव यत्। मर्त्येषु स पुमानेको येनाहं स्वमतेर्जितः॥ १९७॥
परं तथापि लोकोऽस्य संस्कारे मां दिशत्वसौ। ममाप्यद्य विभागोऽस्तु पुण्यस्यागण्यसौहृदात्॥ १९८॥
एवं कृते च स व्योम्नाऽत्रानयन् मलयाचलात्। श्रीखंडागुरुकाष्ठानि विदधेऽङ्गं च भस्मसात्॥ १९९॥
अद्यापि तत्प्रभावेण तस्य वंशे कलानिधिः। भवेन् प्रभावकः सूरिरमराभः स्वतेजसा॥ २००॥

इत्थं चरित्रमधिगम्य महाप्रभावं श्रीजीवदेवसुगुरोर्दुरितापहारि।
नित्यं स्मरन्तु विबुधा अवधानधीरा नन्द्याच्च सूरिगरिमस्फुरणैकहेतुः[4]॥ २०१॥

श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा।
श्रीपूर्वर्षिचरित्ररोहणगिरौ शृङ्गोऽगमत् सप्तमः
प्रद्युम्नप्रभुशोधितः सुचरितं श्रीजीवदेवप्रभोः॥ २०२॥
वाग्दारिद्र्यप्रमथननन्दमनोरतिलताहृढाधारः।
सुमनःप्रसरोल्लासः श्रीमत्प्रद्युम्नकल्पतरोः॥ २०३॥

॥ इति श्रीजीवसूरिप्रबंधः सप्तमः* ॥

॥ ग्रं० २०६ अ० २। उभयं १४९३ अ० २॥

---

1 B C इति। 2 A अपूरिष्यंति। 3 B एव घृष्ट। 4 A C हेतु। * A C नास्ति समाप्तिसूचका पङ्क्तिरियम्।

# ८. श्रीवृद्धवादिसूरिचरितम् ।

§ १. सारसारस्वतश्रोतःपारावारसमश्रिये । **वृद्धवादि**मुनीन्द्राय नमः शमदमोर्मये ॥ १ ॥
**सिद्धसेनो**ऽवतु स्वामी विश्वनिस्तारकत्वकृत् । ईशहृद्भेदकं दध्रे योऽर्हद्ब्रह्ममयं महः ॥ २ ॥
कलिकालाचलप्लोषदम्भोलिकलयोस्तयोः । चरित्रं चित्रचारित्रामत्र[1] प्रस्तावयाम्यहम् ॥ ३ ॥
पारिजातोऽपारिजातो जैनशासननन्दने । सर्वश्रुता[2]नुयोगद्रु[3]कन्दकन्दलनाम्बुदः ॥ ४ ॥
**विद्याधर**वराम्नाये चिन्तामणिरिवेष्टदः ।
आसीच्छ्री**स्कन्दिलाचार्यः पादलिप्त**प्रभोः कुले ॥ ५ ॥–युग्मम् ।
असंख्यशिष्यमाणिक्यरोहणाचलचूलिका । अन्यदा **गौडदेशे**षु विजह्रे स मुनीश्वरः ॥ ६ ॥
तत्रास्ति **कोशलाग्राम**संवासी विप्रपुंगवः । **मुकुन्दा**भिधया साक्षान्मुकुन्द इव सत्त्वतः ॥ ७ ॥
प्रसङ्गादमिलत् तेषां बाह्यावनिविहारिणाम् । सर्वस्य सर्वकार्येषु जागर्त्ति भवितव्यता† ॥ ८ ॥
तेभ्यश्च शुश्रुवे धर्म्मः शर्म्मदः प्राणिनां दया । सुकरः संयमारूढैरतिवैराग्यरङ्गितैः ॥ ९ ॥
स प्राह कारिताकार्यैरनार्यैर्दुर्जनैरिव । चित्रैरिव भ्रमिभ्राग्भिर्विषयैर्मुषितो[4]ऽस्म्यहम् ॥ १० ॥
तेभ्यस्त्रायस्व निःसङ्गस्वामिन् विध्वस्तशात्रव ! । पलायनेऽपि मां क्लीबं विश्रसावैशसद्रुतम्[5] ॥ ११ ॥
इत्यूचिवांसमेनं तेऽन्वगृह्णन् जैनदीक्षया ।
त्वरैव श्रेयसि श्रेष्ठा विलम्बो विघ्नकृद् ध्रुवम् ॥ १२ ॥–त्रिभिर्विशेषकम् ।
अपरेद्युर्विहारेण **लाटमण्डल**मण्डनम् । प्रापुः श्री**भृगुकच्छं** ते **रेवा**सेवापवित्रितम् ॥ १३ ॥
श्रुतपाठमहाघोषैरम्बरं प्रतिशब्दयन् । **मुकुन्दर्षिः** समुद्रोर्म्मिध्वानसापत्न्यदुःखदः ॥ १४ ॥
भृशं स्वाध्यायमभ्यस्यन्नयं निद्राप्रमादिनः । विनिद्रयति वृद्धत्वादाग्रही सन्नहर्निशम् ॥ १५ ॥–युग्मम् ।
यतिरेको युवा तस्मै शिक्षामक्षामधीर्ददौ । मुने ! विनिद्रिता [6]हिंस्रजीवा भूतद्रुहो यतः ॥ १६ ॥
तस्माद्ध्यानमयं साधु [7]विधेह्याभ्यन्तरं तपः । अर्हः संकोचितुं [8]साधोर्वाग्योगो निर्ध्वनिक्षणे ॥ १७ ॥
इति श्रुत्वाऽपि जीर्णत्वोदितजाड्यचयान्वितः ।
नावधारयते शिक्षां तथैवाघोषति स्फुटम् ॥ १८ ॥–त्रिभिर्विशेषकम् ।
तारुण्योचितया [9]सूक्ताकरणासूयया ततः । अनगारः[10] खरां वाचमाददे नादरार्दितः ॥ १९ ॥
अजानन् वयसोऽन्तं यदुग्रपाठादरार्दितः । फुल्लयिष्यसि तन्मल्लीवल्लीवन् मुशलं कथम् ॥ २० ॥
इति श्रुत्वा विषेदेऽसौ जरच्चारित्रकुञ्जरः । दध्यौ च मे धिगुत्पत्तिं ज्ञानावरणदूषिताम् ॥ २१ ॥
तत आराधयिष्यामि भारतीं[11] देवतामहम् । अथोग्रतपसा सत्यं यथासूयावचो भवेत् ॥ २२ ॥
इति ध्यात्वा **नालिकेरवसत्या**ख्यजिनालये । सकलां भारतीं देवीमाराद्धुमुपचक्रमे ॥ २३ ॥
चतुर्धाहारमाधारं शरीरस्य दृढव्रतः । प्रत्याख्याय स्फुरद्ध्यानवह्निनिह्नुतजाड्यभीः ॥ २४ ॥
गलद्विकल्पकालुष्यशुद्धधीः समताश्रयः । निष्प्रकम्पतनुर्न्यस्तदृग्मूर्तिपदाम्बुजे ॥ २५ ॥

---

1 B चारित्रामस्तं । 2 A श्रुत्वा । 3 N °योगार्हकन्द° ।

† 'न स प्रकारः कोऽप्यस्ति येनासौ भवितव्यता । छायेव निजदेहस्य लंध्यते हंत जंतुभिः ॥' इति B टिप्पणी ।

4 A मुदितो° । 5 B N °श्रुतं । 6 N विनिद्रता हिंस्रा जीव° । 7 N विधेया° । 8 N साधो वा° । 9 B सख्य; N सूक्त्या । 10 C अनगारवरां । 11 C N भारती° ।

मुहूर्तमिव तत्रास्थाद् दिनानामेकविंशतिम् ।
सत्त्वतुष्टा[1] ततः साक्षाद्भूत्वा देवी तमब्रवीत् ॥ २६ ॥–त्रिभिर्विशेषकम् ।

समुत्तिष्ठ ! प्रसन्नास्मि पूर्यन्तां ते मनोरथाः । स्खलना न तवेच्छासु[2] तद्विधेहि निजे हितम् ॥ २७ ॥
इत्याकर्ण्य समुत्तस्थौ देवनाया गिरं गिरः । ददर्श मुशलं प्राप्तः कस्यापि गृहिणो गृहे ॥ २८ ॥
पूर्वोक्तयतिमोत्प्रासवाक्यश्रुत्यपमानतः । प्राह श्लोकं श्रुतश्लोक[3]प्रतिज्ञापरिपूर्तये ॥ २९ ॥

स चायं–

**अस्मादृशा अपि यदा भारति ! त्वत्प्रसादतः । भवेयुर्वादिनः प्राज्ञा मुशलं पुष्यतां ततः ॥ ३० ॥**

इत्युक्त्वा प्रासुकैर्नीरैः सिषेच मुशलं मुनिः । सद्यः पल्लवितं पुष्पैर्युक्तं तारैर्यथा नभः ॥ ३१ ॥

तथा–

**मद्गोः[4] शृङ्गं शक्रयष्टिप्रमाणं शीतो वह्निर्मारुतो निष्प्रकम्पः ।**
**यद्वा यस्मै रोचते तन्न किंचित् वृद्धो वादी भाषते कः किमाह ॥ ३२ ॥**

इति प्रतिज्ञयैवास्य तदाकालीयवादिनः । हताः पराहतप्रज्ञाः कांदिशीका इवाभवन् ॥ ३३ ॥
ततः सूरिपदे चक्रे गुरुभिर्गुरुवत्सलैः । वर्द्धिष्णवो गुणा अर्था इव पात्रे नियोजिताः* ॥ ३४ ॥
प्रवया वादमुद्राभृद् यतः ख्यातो जगत्यपि । सान्वयां **वृद्धवादी**ति प्रसिद्धिं प्राप स प्रभुः ॥ ३५ ॥
श्रीजैनशासनाम्भोजवनभासनभास्करः[5] । अस्तं **श्रीस्कन्दिलाचार्यः** प्राप प्रायोपवेशनात् ॥ ३६ ॥

२. **वृद्धवादि**प्रभुर्गच्छाचलोद्धारादिकच्छपः । विजहार **विशालायां** शालायां गुणसन्ततेः ॥ ३७ ॥
तदा श्री**विक्रमादित्य**भूपालः पालितावनिः । दारिद्र्यान्धतमोभारसंभारेऽभवदंशुमान् ॥ ३८ ॥
श्री**कात्यायन**गोत्रीयो **देवर्षि**ब्राह्मणाङ्गजः । **देवश्री**कुक्षिभूर्विद्वान् **सिद्धसेन** इति श्रुतः ॥ ३९ ॥
तत्रायात् सर्वशास्त्रार्थपारंगममतिस्थितिः । अन्येद्युर्मिलितः श्रीमद्**वृद्धवादि**प्रभोः स च ॥ ४० ॥
अद्य श्वो वृद्धवादीह विद्यते पुरि[6] नाथवा । इति पृष्टः स एवाह सोऽहमेवास्मि लक्षय ॥ ४१ ॥
विद्वद्गोष्ठीमहं प्रेप्सुरित्यतोऽत्रैव जल्प्यते । संकल्पो मे चिरस्थायी सखे संपूर्यते यथा ॥ ४२ ॥
न गम्यते कथं विद्वत्पर्षदि स्वान्ततुष्टये । संप्राप्तौ शातकुम्भस्य पित्तलं को जिघृक्षति ॥ ४३ ॥
इत्युक्तेऽपि यदात्रैव स नौज्झद् विग्रहाग्रहम् । ओमित्युक्त्वा तदा सूरिर्गोपान् सभ्यान् व्यधात् तदा ॥४४॥
**सिद्धसेनः** प्रागवादीत्–'सर्वज्ञो नास्ति निश्चितम्[7] । यः प्रत्यक्षानुमानाद्यैः प्रमाणैर्नोपलभ्यते ॥ ४५ ॥
नभःकुसुमदृष्टान्तादि'त्युक्त्वा व्यरमच्च सः । उवाच **वृद्धवादी** च गोपान् सान्त्वनपूर्वकम् ॥ ४६ ॥
भवद्भिरेतदुक्तं भो ! किमप्यधिगतं नवा ? । ते प्राहुः पारसीकाभमव्यक्तं बुध्यते कथम् ॥ ४७ ॥
वृद्धवाद्याह–भो गोपा ! ज्ञातमेतद्वचो मया । जिनो नास्तीत्यसौ जल्पे. तत् सत्यं ?, वदतात्र भोः ! ॥ ४८ ॥
भवद्ग्रामे वीतरागः सर्वज्ञोऽस्ति नवा ?. ततः । आहुस्तेऽस्य वचो मिथ्या जैनचैत्ये जिने सति ॥ ४९ ॥
न चानवगतेष्वत्रादरो द्विजवचस्सु नः । सूरिराह पुनर्विप्र ! तथ्यां शृणु गिरं मम ॥ ५० ॥
मनीषातिशयस्तारतम्यं विश्राम्यति क्वचित् । अस्ति चातिशयेयत्ता परिमाणेष्विव स्फुटम् ॥ ५१ ॥
लघौ गुरुतरे[8] वापि परमाणौ वियत्यपि । प्रज्ञाया अवधिर्ज्ञानं[9] केवलं सिद्धमेव तत् ॥ ५२ ॥

---

1 A सत्त्वात्तुष्टा । 2 N तवेच्छास्तु । 3 N श्रुतलोक° । 4 B C N मुद्गोः । 5 C °भास्वरः ।
* 'व्याजेषु द्विगुणं प्रोक्तं व्यवसायेन चतुर्गुणं । कृषौ शतगुणं प्रोक्तं पात्रेऽनन्तगुणं भवेत् ॥'–इति B टिप्पणी ।
N मुनिनाथवा । 7 N निश्चयः । 8 A तरुतरे° । 9 C अवधिज्ञानं ।

ज्ञानं गुणस्तदाधारो द्रव्यं किंचिद् विचिन्त्यताम् । योऽसौ स एव सर्वज्ञ एषाऽभूत् सिद्धिरस्य च ॥ ५३ ॥
ईदृग्वार्त्ता प्रपञ्चेन जिग्येऽसौ **वृद्धवादिना** । ब्राह्मणः पण्डितंमन्यस्तस्य कास्था ह्यमूदृशाम् ॥ ५४ ॥
हर्षाश्रुप्लुतनेत्रश्च **सिद्धसेनो**ऽप्यभाषत । प्रभो ! त्वमेव सर्वज्ञः पूर्वः सत्यो जिनस्त्वया ॥ ५५ ॥
शिष्यत्वेनानुमन्यस्व मां प्रतिज्ञातपूर्विणम् । समर्थो नोत्तरं दातुं यस्य तस्यास्मि शैक्षकः ॥ ५६ ॥
अदीक्षयत जैनेन विधिना तमुपस्थितम् । नाम्ना **कुमुदचन्द्र**श्च स चक्रे **वृद्धवादिना** ॥ ५७ ॥
आशु चाशुगवत्तीक्ष्णप्रवरप्रतिभाभरात् । पारदृश्वा तदाकाल[1]सिद्धान्तस्य स चाभवत् ॥ ५८ ॥
तृतीयपरमेष्ठित्वे गुरुभिर्विदधे मुदा । पुरा ख्याताऽभिधैवास्य तदा[2] च प्रकटीकृता ॥ ५९ ॥
तन्निधाय गणाधारे विजह्रे[3] स्वयमन्यतः । शिष्यप्रभावो दूरस्थैर्गुरुभिर्वीक्ष्यते यतः ॥ ६० ॥

§ ३. श्री**सिद्धसेन**सूरिश्चान्यदा बाह्यभुवि व्रजन् । दृष्टः श्री**विक्रमार्के**ण राज्ञा राजाध्वगेन सः ॥ ६१ ॥
अलक्ष्यं भूप्रणामं स भूपस्तस्मै च चक्रिवान् । तं धर्मलाभयामास गुरुरुच्चतरस्वरः ॥ ६२ ॥
तस्य दक्षतया तुष्टः प्रीतिदाने ददौ नृपः । कोटिं हाटकटंकानां लेखकं पत्रकेऽलिखत् ॥ ६३ ॥

तद्यथा–

**धर्मलाभ इति प्रोक्ते दूरादुद्धृतपाणये । सूरये सिद्धसेनाय ददौ कोटिं नराधिपः ॥ ६४ ॥**

[ नृपेण सिद्धमाकार्य गृहीष्यामि (?) धनं त्वया । उवाच सिद्धो नोऽस्माकं यथारुचि तथा कुरु* ॥ ]

तेन द्रव्येण चक्रेऽसौ साधारणसमुद्रकम् । दुःस्थसाधर्मिकस्तोम-चैत्योद्धारादिहेतवे ॥ ६५ ॥
अन्यदा **चित्रकूटा**द्रौ विजहार मुनीश्वरः । गिरेर्नितम्ब एकत्र स्तम्भमेकं ददर्श च ॥ ६६ ॥
नैव काष्ठमयो ग्रावमयो न नच मृण्मयः । विमृशन्नौषधक्षोदमयं निरचिनोच्च[4] तम् ॥ ६७ ॥
तद्रस-स्पर्श-गन्धादिनिरीक्षाभिर्मतैर्बलात्[5] । औषधानि परिज्ञाय तत्प्रत्यर्थीन्यमीमिलत् ॥ ६८ ॥
पुनः पुनर्निघृष्याथ स स्तम्भे छिद्रमातनोत् । पुस्तकानां सहस्राणि तन्मध्ये च समैक्षत ॥ ६९ ॥
एकं[6] पुस्तकमादाय पत्रमेकं ततः प्रभुः । विवृत्य[7] वाचयामास तदीयामोलिमेकिकाम् ॥ ७० ॥
सुवर्णसिद्धियोगं स तत्र प्रैक्षत विस्मितः । सर्षपैः सुभटानां च निष्पत्तिं श्लोक एकके ॥ ७१ ॥
सावधानः पुरो यावद् वाचयत्येष हर्षभूः । तत्पत्रं पुस्तकं चाथ[7] जह्रे[8] श्रीशासनामरी ॥ ७२ ॥
तादृक्पूर्वगतग्रन्थवाचने नास्ति योग्यता । सत्त्वहानिर्यतः कालदौःस्थ्यादेतादृशामपि ॥ ७३ ॥

§ ४. स **पूर्वदेश**पर्यन्ते व्यहार्षीच्च परेद्यवि । **कर्मारनगरं** प्राप विद्यायुगयुतः सुधीः ॥ ७४ ॥
**देवपाल**नरेन्द्रोऽस्ति तत्र विख्यातविक्रमः । श्री**सिद्धसेन**सूरिं स नन्तुमभ्याययौ रयात् ॥ ७५ ॥
आक्षेपण्यादिधर्माख्याचतुष्टयवशात् प्रभुः । तं प्रत्यबोधयत् सख्ये चास्थापयदिलापतिम् ॥ ७६ ॥
श्री**कामरूप**भूपालः संरुरोध तमन्यदा । नाम्ना **विजयवर्मे**ति धर्मेतरमतिस्थितिः ॥ ७७ ॥
स आटविकनासीरैरसंख्यैर्विद्रुतोऽधिकम् । **देवपालो** महीपालः प्रभुं विज्ञापयत् ततः ॥ ७८ ॥
अमुष्य शलभश्रेणिसन्निभैरद्भुतैर्बलैः । विद्रावयिष्यते सैन्यमल्पकोशबलस्य मे ॥ ७९ ॥
अत्र त्वं शरणं स्वामिन्निदमाकर्ण्य स प्रभुः । प्रायः प्रतिविधास्यामि मा भैषीरत्र सङ्कटे ॥ ८० ॥
सुवर्णसिद्धियोगेनासंख्यद्रव्यं विधाय सः । तथा सर्षपयोगेन सुभटानकरोद् बहून् ॥ ८१ ॥
युद्धा [9]पराजितः शत्रुर्**देवपालेन** भूभृता । प्रभोः प्रसादतः किं हि न स्यात् तादृगुपासनात् ॥ ८२ ॥

---

1 A तदाकाले। 2 N तथा च। 3 A विजह्रुः। * केवलं B आदर्शे पृष्ठपार्श्वभागे एतत्पद्यं लिखितं लभ्यते, प्रक्षिप्तप्रायमसम्बद्धात्मकं च प्रतिभाति। 4 B N निरचनोच्च; A निरवनोच्च। 5 A निरीक्षादिमते°। 6 A एवं। A विसृत्य; 7 B विवृति। B चाध। 8 A विजहे शास°। 9 C °परोजितः।

राजाह शत्रुमीत्यन्धतमसे[1]ऽहं निपेतिवान् । उदध्रे भास्वता नाथ भवता भवतारक[2] ! ॥ ८३ ॥

ततो **दिवाकर** इति ख्याताख्या भवतु प्रभोः । ततःप्रभृति गीतः श्री**सिद्धसेनदिवाकरः** ॥ ८४ ॥

§ ९. तस्य राज्ञो दृढं मान्यः सुखासनगजादिषु । बलादारोपितो भक्त्या गच्छति क्षितिपालयम् ॥ ८५ ॥

इति ज्ञात्वा गुरु**र्वृद्धवादी** सूरिर्जनश्रुतेः । शिष्यस्य राजसत्कारदर्पभ्रान्तमतिस्थितेः ॥ ८६ ॥

शिक्षणेन क्षणेनैवापासितुं दुर्ग्रहाग्रहम् । समाजगाम **कर्मारपुरे** रूपापलापतः ॥ ८७ ॥–युग्मम् ॥

ततः सुखासनासीनमपश्यत् तं प्रभुस्तदा । राजानमिव राजाध्वान्तरे बहुजनावृतम् ॥ ८८ ॥

प्राह च प्राप्तरूप ! त्वं संदेहं मे निवर्तय । आयातस्य तव ख्यातिश्रुतेर्दूरदिगन्तरात् ॥ ८९ ॥

पृच्छेति **सिद्धसेनेन** सूरिणोक्ते जगाद सः । तारस्वरं समीपस्थविदुषां विस्मयावहम् ॥ ९० ॥

तद्यथा–

**अणुहुल्लीय[3] फुल्ल म तोडहु मन[4] आरामा[5] म मोडहु ।**

**[6]मण कुसुमहिं[7] अच्चि निरञ्जणु हिण्डह काइं वणेण वणु ॥ ९१ ॥**

अज्ञातेऽत्र विमृश्यापि कदुत्तरमसौ ददौ । अन्यत् पृच्छेति स [8]प्राहैतदेव हि विचारय ॥ ९२ ॥

अनादरादसम्बद्धं यत्किंचित् तेन चाकथि । अमानितेऽत्र तर्हि त्वं कथयेति जगाद सः ॥ ९३ ॥

**वृद्धवादि**प्रभुः प्राह कर्णयावहितो भवः । अस्य तत्त्वं यथामार्गभ्रष्टोऽपि लभसे पुनः ॥ ९४ ॥

तथाहि—'अणु' अल्पमायूरूपं पुष्पं यस्याः सा'ऽणुपुष्पिका'–मानुषतनुः, तस्याः पुष्पाण्यायुःखण्डानि तानि मा त्रोटयत[9], राजपूजागर्वाद्यंकुटीभिः । 'आरामान्' आत्मसत्कान् यमनियमादीन् सन्तापापहारकान् मा मोटयत–भंजयत[10] । 'मनःकुसुमैः' क्षमामार्दवार्जवसन्तोषादिभिरर्चय, निरञ्जनम्–अञ्जनान्यहंकारस्थानानि जातिलाभादीनि निर्गतानि यस्य स निरञ्जनः–सिद्धि[11]पदप्राप्तस्तं ध्यायतु । 'हिण्डत' भ्रमत 'कथं वनेन वनं' मोहादितरुगहनेनारण्यमिव संसाररूपं गहनमित्येकोऽर्थः ॥ १ ॥

अथवा—अणुर्नामाल्पधान्यं तस्य पुष्पाण्यल्पविषयत्वान्मानवतनोः, सा [12]अणुपुष्पी, तस्याः पुष्पाणि महाव्रतानि शीलाङ्गानि च[13] तानि, मा त्रोटयत–मा विनाशयत । 'मन आरामं मोटयत' चित्तविकल्पजालं संहरत । तथा 'निरञ्जनं' देवं मुक्तिपदप्राप्तं, 'म न' इत्यनेन द्वौ निषेधकशब्दौ–मा च नञ्च, ततो मा कुसुमैरर्चय निरञ्जनं वीतरागम् । गार्हस्थ्योचितदेवपूजादौ षड्जीवनिकायविराधके मोद्यमं कुरु, सावद्यत्वाद् । 'वनेन' शब्देन कीर्त्या हेतुभूतया, 'वनं' चेतनाशून्यत्वादरण्यमिव भ्रमहेतुतया मिथ्यात्वशास्त्रजातं, 'कथं भ्रमसि' अवगाहसे लक्षणया, तस्मान्मिथ्यावादं परिहृत्य सत्ये तीर्थकृदादिष्टे आदरमाधेहि । इति द्वितीयोऽर्थः ॥ २ ॥

अथवा—अणरणेति धातोरणः शब्दः स एव पुष्पमभिगम्यत्वाद्यस्याः सा'ऽणपुष्पा' कीर्तिः । तस्याः पुष्पाणि सद्बो[14]धवचांसि तानि मा त्रोटयत–मा संहरत । तथा 'मनस आरा' वेधकरूपत्वात् अध्यात्मोपदेशरूपास्तान् मा त्रोटयत–कुव्याख्याभिर्मा विनाशयत । मनो निरञ्जनं रागादिलेपरहितं कुसुमैरिव कुसुमैः सुरभिशीतलैः सदुरूपदेशैरर्चय पूजितं श्लाघ्यं कुरु । तथा वनस्योपचारात् संसारारण्यस्य, तस्येनः स्वामी परमसुखित्वात् तीर्थकृत्, तस्य वनं शब्दसिद्धान्तस्तत्र[15] कथं हिण्डत भ्रान्तिमादधत । यतस्तदेव सत्यं । तत्रैव भावना रतिः कार्या । इति तृतीयोऽर्थः ॥ ३ ॥

इत्यादयो ह्यनेकार्था व्याख्याता **वृद्धवादिना** । मतिप्रतिविधानं तु वयं विद्मस्तु किं जडाः ॥ ९५ ॥

इति तज्जल्पपर्जन्यगर्जिवर्षणडम्बरैः । बोधेनाङ्कुरिता **सिद्धसेन**मानसमेदिनी ॥ ९६ ॥

ईदृक् शक्तिर्हि नान्यस्य मद्धर्माचार्यमन्तरा । स ध्यात्वेति समुत्तीर्य तस्यांह्री प्राणमद् गुरोः ॥ ९७ ॥

---

1 A °मीत्यंधः तमसे; C N °तमसो । 2 A °तारकः । 3 A अणुदुल्ली, B अणहुल्लीय; C अणहुल्ली । 4 नास्ति A B । 5 B आराम । 6 A मणु° । 7 B कुसुमेहं । 8 B प्राह तदेव । 9 A त्रोटय । 10 A नास्ति । 11 A सिद्ध° । 12 N साल्पपुष्पी; A सा च अणु° । 13 'च' नास्ति B । 14 N स्याद्वाद° । 15 N सिद्धान्तसूत्रं ।

तत्पित्रोः प्रतिपन्नेन पूर्वाख्या तु प्रसिद्धिभूः । शिष्यमौलिमणेरस्य कलासङ्केतवेश्मनः ॥ ३० ॥
संघश्च तद्गुणग्रामरामणीयकरञ्जितः । विदधेऽभ्यर्थनां तेषामत्रावस्थानहेतवे ॥ ३१ ॥
योग्यतातिशयं चास्य ज्ञात्वा सद्गुरवस्ततः । सारस्वतं महामन्त्रं तत्रस्थास्तस्य ते ददुः ॥ ३२ ॥
परावर्त्तयतस्तस्य निशीथे तं सरस्वती । स्वर्गङ्गास्रोतसि स्नान्त्यनावृतासीद् रहोभुवि ॥ ३३ ॥
तन्मन्त्रजापमाहात्म्यात् तादृग्रूपा[1] समाययौ । ईषद्दृष्ट्वा च तां वक्त्रं परावर्त्तयति स्म सः ॥ ३४ ॥
स्वं रूपं विस्मरन्ती च प्राह वत्स ! कथं मुखम् । विवर्त्तसे भवन्मंत्रजापात् तुष्टाहमागता ॥ ३५ ॥
वरं वृणिष्वेति तत्प्रोक्तो **बप्पभट्टि**रुवाच च । मातर् ! विसदृशं रूपं कथं वीक्षे[2] तवेदृशम् ॥ ३६ ॥
स्वां तनुं पश्य निर्वस्त्रामित्युक्ते स्वं ददर्श सा । अहो निबिडमेतस्य ब्रह्मव्रतमिति स्फुटम् ॥ ३७ ॥
उच्चैश्च मन्त्रमाहात्म्यं येनाहं गतचेतना । ध्यायन्ती दृढतोषेण त्वत्पुरः समुपस्थिता ॥ ३८ ॥
वरेऽपि निस्पृहे त्वत्र दृढं चित्रातिरेकतः । गत्यागत्योर्मम स्वेच्छा त्वदीया निर्वृतो भव ॥ ३९ ॥

§ २. अन्यदा तत्र संस्थानां (°नो ?) **भद्रकीर्त्ति**र्बहिर्गतः । वृष्टौ देवकुलं श्रित्वा तस्थौ स स्थैर्यसुस्थितः ॥ ४० ॥
तत्रस्थस्य पुमानेको नाकिपाकविडंबकः । समगंस्त प्रशस्तश्रीर्वृष्टिव्याकुलितस्तदा ॥ ४१ ॥
श्यामाश्मोत्कीर्णवर्णोघा सहारहृदिवांगना । स्वस्तिप्रशस्तिरत्रास्ति विहस्तितजडस्थितिः ॥ ४२ ॥
काव्यानि वाचयामास महार्थानि सुधीरसौ । सख्याद् व्याख्यापयामास [3]प्रत्यग्राद् **बप्पभट्टितः** ॥ ४३ ॥
तदाख्यारंजितस्वान्तः शान्ते वर्षेऽतिहर्षतः । ययौ सहैव वसतौ वसतौ तत्र च स्थितः ॥ ४४ ॥
ततो गुरुभिराशीर्भिरानन्द्य समपृच्छयत । आमुष्यायणतां स्वस्याचख्यौ व्रीडावशानतः[4] ॥ ४५ ॥
वर्य**मौर्य**महागोत्रसंभूतस्य महाद्युतेः । श्री**चन्द्रगुप्त**भूपालवंशमुक्तामणिश्रियः ॥ ४६ ॥
**कान्यकुब्जयशोवर्म्म**भूपतेः सुयशोऽङ्गभूः । पित्रा शिक्षावशात् किंचिदुक्तः कोपादिहागमम् ॥ ४७ ॥
अलेखीद् **आम**नाम स्वं क्षितौ खटिकया ततः । स्वनामाग्रहणेनास्य विवेकात् ते चमत्कृताः ॥ ४८ ॥
व्यमृशन् सूरयस्तत्र नखच्छोटन[5]पूर्वकम् । पूर्वं श्री**रामसैन्ये**ऽसौ दृष्टः पाण्मासिकः किल ॥ ४९ ॥
पीलुवृक्षमहाजाल्यां वस्त्रान्दोलकसंस्थितः । अचलच्छाययाऽस्माभिर्विज्ञातः पुण्यपूरुषः ॥ ५० ॥
ततस्तज्जननी वन्यफलवर्गं विचिन्वती । अस्माभिर्गदिता वत्से ! का त्वं किं वा भवत्कुलम् ॥ ५१ ॥
कथमीदृगवस्था च सर्वमाख्याहि नः पुरः । विश्वस्ता[6] यद्वयं त्यक्तसंगा[7] मुक्तपरिग्रहाः ॥ ५२ ॥
साऽवादीत् तातपादानां किमकथ्यं ततः प्रभो ! । श्री**कन्यकुब्ज**भूपाल**यशोवर्म**कुटुम्बिनी ॥ ५३ ॥
अहं सुतेऽत्र गर्भस्थे सपत्न्या मत्सरोदयात् । पुरा लब्धवरं प्रार्थ्य नृपान्निर्वासितास्म्यहम् ॥ ५४ ॥
ततोऽनुशयतो हित्वा पितृ-श्वशुरमन्दिरे । स्थाने व आगमं वन्यवृत्त्या वर्त्ते प्रभोऽधुना ॥ ५५ ॥
श्रुत्वेति सान्त्विताऽस्माभिश्चैत्यशुश्रूषया स्थिरा । तिष्ठ बालं प्रवर्द्धस्व जनकस्येव वेश्मनि ॥ ५६ ॥
तत्सपत्नी च केनापि कालेन व्यनशत् स्वयम् । सा च राज्ञा चरैः शोधयित्वा पश्चादनीयत[8] ॥ ५७ ॥
प्राच्यासंख्यगुणेनाथ मानेन बहुमानिता । वयं चात्र ततो देशाद् भूमावस्यां विजह्मि ॥ ५८ ॥
इति श्रुतश्च वृत्तान्तस्तद्देश्यपुरुषव्रजात् । अनेन सांप्रतं भाव्यं तत्पुत्रेणैव धीमता ॥ ५९ ॥
यदाकृतिः शरीरस्य लक्षणानीदृशानि च । नर्त्ते नृपसुतं पूज्या इति ध्यात्वाभ्यधुस्ततः ॥ ६० ॥
तत्रास्स्व वत्स ! निश्चिन्तो निजेन सुहृदा समम् । शीघ्रं गृहाण शास्त्राणि संगृहाणामलाः कलाः ॥ ६१ ॥

1 N °तद्रूपा सा । 2 A B C वीक्ष्ये । 3 N प्रत्यगाद् । 4 N वशाननः । 5 C °छोदन° । 6 A विश्वस्था । 7 A संगात् । 8 N °दनायिता ।

ताश्चेमाः—

पठितं लिखितं सम्यग्गणितं गीत-नृत्तने । वाद्यं व्याकरणं छन्दो ज्योतिषं शिक्षया सह ॥ ६२ ॥
निरुक्तं च तथा कात्यायनं च सनिघंटुकम् । पत्रच्छेद्यं नखच्छेद्यं सह रत्नपरीक्षया ॥ ६३ ॥
आयुधाभ्याससंयोगश्च गजारोहणमेव च । तुरगारोहणं शिक्षा तयोः प्रत्येकमद्भुता ॥ ६४ ॥
मन्त्रवादो रसवादः खन्यवादस्तथैव च । रसायनं च विज्ञानवादो मतिविबोधकः ॥ ६५ ॥
तर्कवादश्च सिद्धान्तो विषनिग्रह-गारुडे । शाकुने वैद्यकं चैवाचार्यविद्या तथागमः ॥ ६६ ॥
प्रासादलक्षणं चैवं सामुद्रिकमथ स्मृतिः । पुराणं इतिहासश्च तथा वेदविधिर्वरः ॥ ६७ ॥
विद्यानुवाद-दर्शनसंस्कारौ खेचरी कला । अमरीकरणं चेन्द्रजालं पातालसिद्धिभृत् ॥ ६८ ॥
धूर्तानां शंबलं गंधयुक्तिः वृक्षचिकित्सया । कृत्रिममणिकर्माणि सर्ववस्तुकृतिस्तथा ॥ ६९ ॥
वंशकर्म पुष्पकर्म चित्रकर्म कलाद्भुतम् । काष्ठ-पाषाणयोः कर्म लेपकर्म तथापि च ॥ ७० ॥
चर्मकर्म यंत्रकर्म तथा रसवतीविधिः । काव्यालंकार-हसिते संस्कृत-प्राकृते तथा ॥ ७१ ॥
पैशाचिकं अपभ्रंशः कपटं देशभाषया । धातुकर्म प्रयोगाणामुपायाः केवलीविधिः ॥ ७२ ॥
एवंविधकलानां च द्वासप्ततिमधीतवान् । अनन्यसदृशः कोविदानां पर्षदि सोऽभवत् ॥ ७३ ॥
तथा चाभ्यस्यतस्तस्य प्रज्ञादर्पणबिम्बितः । ययौ लक्षणतर्कादिशास्त्रव्रातः स्ववश्यताम् ॥ ७४ ॥
सब्रह्मचारितासख्याद् राजपुत्रः प्रपन्नवान् । **बप्पभट्टे !** प्रदास्यामि प्राप्तं राज्यं तव ध्रुवम् ॥ ७५ ॥
कालेन केनचित् तस्यातंकिना जनकेन च । प्रधानाः प्रेपिताः पट्टाभिषेककृतिहेतवः (°वे ?) ॥ ७६ ॥
कृच्छ्रादापृच्छ्य तं प्राप्तपुरं राज्येऽभ्यषिच्यत[1] । पित्रा स स्वर्गतेरस्य कृतवानौर्ध्वदेहिकम् ॥ ७७ ॥
लक्षद्वितयमश्वानां चतुर्दशशतानि च । रथानां हस्तिनां पत्तिकोटी राज्यमसाधयत् ॥ ७८ ॥
§ ३. स्वकीयसुहृदः प्रैषीदाह्वानाय नरानथ । **आम**नामा नृपः श्रीमानतिमानवविक्रमः ॥ ७९ ॥
तेषां चात्यादरात संघानुमत्या गुरवस्ततः । प्राहिण्वन् **बप्पभट्टिं** तं गीतार्थैः परिवारितम् ॥ ८० ॥
तीर्थप्रभावनोन्नत्यै शनैः संयमयात्रया । जगामाध्यामधामश्रि पुरमाममहीशितुः ॥ ८१ ॥
तदागमलसद्वर्णाकर्णनादर्णवो यथा । द्विजराजसमुन्नोतादुद्वेलः स तदाऽभवत् ॥ ८२ ॥
भूपः समग्रसामग्र्या संमुखीनस्ततोऽगमत् । कुञ्जरारोहणे [2]विद्वत्कुञ्जरस्यार्थनां व्यधात् ॥ ८३ ॥
**बप्पभट्टि**रुवाचाथ भूपं शमवतां पतिः । सर्वसङ्गमुचां नोऽत्र प्रतिज्ञा हीयतेतमाम् ॥ ८४ ॥
राजोचे वः पुरा पूर्वं यन्मया प्रतिशुश्रुवे । राज्यमाप्तं प्रदास्यामि तल्लक्ष्म वरवारणः ॥ ८५ ॥
काममेवामुमाधत्त[3] चेद् यूयं तन्मम प्रभो ! । [4]उक्तदोषार्त्तिदानेनासुखं कर्तुं न साम्प्रतम् ॥ ८६ ॥
इत्यारोप्य बलात् पट्टकुञ्जरे धरणीधरः । जितक्रोधाद्यभिज्ञानधृतच्छत्रचतुष्टयम् ॥ ८७ ॥
विश्वस्य दर्शयन्तं सच्चामरैर्वीजितं[5] प्रभुम् । प्रावेशयत् शमिश्रेणीश्वरमत्युत्सवात् पुरम् ॥ ८८ ॥—युग्मम् ।
राज्यचिह्नमिदं धुर्यमिति सिंहासनासनम्[6] । मौधान्तरमनुत्वाहं भूपं मुनिरथावदत् ॥ ८९ ॥
जाते सूरिपदेऽस्माकं कल्प्यं सिंहासनासनम् । इति तस्य वचः श्रुत्वा खिन्नोऽन्यासनमध्यवीविशत् ॥ ९० ॥
दिनानि कतिचित्तत्रावस्थाप्य गुरुसन्निधौ । प्राजीहयत् प्रधानौघैः[7] समं मुनिपार्तिं नृपः ॥ ९१ ॥
**मोढेरक**स्थितं[8] श्रीमत्**सिद्धसेन**मुनीश्वरम् । प्रणम्य प्रह्ववाणीभिरथ व्यज्ञपयन्नमी ॥ ९२ ॥

1 N °ऽभिषिच्यताम्; A ऽभिषिच्यत । 2 N विद्वान् । 3 A काममेवाममा° । 4 N उक्तवेशार्ति° । 5 B N वीजितुं । 6 A °सनासनी । 7 N प्रधानाद्यैः । 8 N °स्थितिं ।

चकोरवदचन्द्रेऽभ्रे मराल इव पल्वले । वने मृगवदेकाकी स्तोकाम्भसि च मीनवत् ॥ ९३ ॥
मयूर इव घर्मार्तो[1] वर्षासु जलधिर्यथा । संग्रामे कातरो यद्वद् विद्वान् वैधेयमण्डले ॥ ९४ ॥
चन्द्रवत् कृष्णपक्षान्तः[2] क्षीयते विरहातुरः । स्वामी नः प्रत्यहं पूज्या ! अनेन सुहृदा विना ॥ ९५ ॥
—त्रिभिर्विशेषकम् ।

आचार्यत्वे प्रतिष्ठाप्य [3]निष्ठाधिष्ठातृदैवतम् । अमुं प्रेषयतास्माभिः सह नः स्वामिनो मुदे ॥ ९६ ॥
अस्योपदेशतो जैनमन्दिर-प्रतिमादिभिः । निर्मितैः सुकृतै राजा भवाब्धिं लंघयेद् यथा ॥ ९७ ॥
श्रुत्वेति तत्पुरोऽवोचद् वाचंयमपतिस्तदा । चारित्राचारधौरेयः सुधामधुरया गिरा ॥ ९८ ॥
रत्नदीपो यथागारे बाह्यान्तरतमोपहः । तेजस्वी निश्चलस्थेमा तथा बालर्षिरेष नः ॥ ९९ ॥
भानुनाम्भोरुहं यद्वत् शशिनेव विभावरी । शिखण्डीव पयोदेन मन्त्री मुद्रां विना यथा ॥ १०० ॥
स्तम्भेनेवोज्झितं गेहं देहं च प्राणधारिणाम् । म्लायत्येव मनोवृत्तिस्तथास्माकममुं विना ॥ १०१ ॥—युग्मम् ।
इत्याकर्ण्य प्रभोर्वाचं प्राहुः कृतधियोऽथ ते । सन्तः परोपकारार्थे नात्मार्तिं गणयन्ति यत् ॥ १०२ ॥
तरवस्तरणेस्तापं स चाभ्रोल्लंघनक्रमम् । पाथोधिर्नौश्रमं सोढा वोढा कूर्मः क्षितेर्धुरम् ॥ १०३ ॥
वारिदो वर्षणक्लेशं क्षितिर्विश्वासुमत्क्रमम्[4] । उपकाराद् ऋतेऽमीषां न फलं किंचिदीक्ष्यते ॥ १०४ ॥—युग्मम् ।
ततः प्रसादप्रावीण्यात् प्रेषयध्वं कृतीश्वरम्[5] । एवं कृत्वा प्रभुत्वेऽस्मत्स्वामिबाधागिरेः पविम्[6] ॥ १०५ ॥
तेषां निर्बन्धसम्बन्धादित्यभ्युपगते गुरुः । श्रीमन्तं संघमाहूय तत्प्रतिष्ठार्थमादिशत् ॥ १०६ ॥
अथोत्सवेच्छुभिः स्वच्छैः[7] श्रावकैर्गच्छवत्सलैः । सद्यः समग्रसामग्र्यां विहितायां जिनालये ॥ १०७ ॥
लग्नेऽथ सौम्यषड्वर्गाधिष्ठिते परमाक्षरम् । सप्तग्रहबलोपेते श्रुतोक्तविधिपूर्वकम् ॥ १०८ ॥
शिष्यस्य विश्वशिष्यस्य कर्णे चन्दनचर्चिते । गर्जत्सु तूर्यसंघातेष्वर्हत्तत्त्वं न्यवीविशत् ॥ १०९ ॥
—त्रिभिर्विशेषकम् ।

**बप्पभट्टि**स्ततः श्रीमानाचार्यः कोविदार्यमा । दुर्वादिसिंहशरभोऽभवद् विश्वस्य विश्रुतः ॥ ११० ॥
अथानुशिष्टो विधिवद् गुरुभिर्ब्रह्मरक्षणे । तारुण्यं राजपूजा च वत्सानर्थद्वयं ह्यदः ॥ १११ ॥
आत्मरक्षा तथा कार्या यथा न च्छल्यते भवान् । वामकामपिशाचेन यत्नं तत्र पुनःपुनः ॥ ११२ ॥
भक्तं भक्तस्य लोकस्य विकृतीश्चाखिला अपि । आजन्म नैव भोक्ष्येऽहममुं नियममग्रहीत् ॥ ११३ ॥
तद्गत्तूर्यध्वनिः श्राद्धाङ्गना[8]सङ्गीतमङ्गलः । गौरवाभ्यर्थितः संघेनाथ प्रायादुपाश्रये ॥ ११४ ॥
**एकादशाधिके तत्र जाते वर्षशताष्टके (८११) । विक्रमात् सोऽभवत्सूरिः कृष्णचैत्राष्टमीदिने ॥११५॥**
§४. श्रीमद्**आम**महाभूपश्रेष्ठामात्योपरोधतः । अनिच्छतोऽपि संघस्य प्रैषीत् तैः सह तं गुरुः ॥ ११६ ॥
प्रयाणैः प्रवणैः प्राप **कन्यकुब्जपुरं** ततः । प्रासुके बहिरुद्देशेऽवतस्थे स वनाश्रिते ॥ ११७ ॥
उद्यानपालविज्ञप्तेः[9] परिज्ञाय समागतम् । मुनीशमवनीशोऽभूद् बद्धरोमाञ्चकञ्चुकः ॥ ११८ ॥
ततः प्रत्यापणं दृष्टशोभाशोभितरथ्यकम् । प्रतिगेहं प्रतिद्वारं बद्धवन्दनमालिकम् ॥ ११९ ॥
उद्यद्धूपघटीधूमस्तोमैः कृष्णाभ्रविभ्रमम् । कुर्वाणमाहितोल्लोचैरेकच्छायं महीतलम् ॥ १२० ॥
कश्मीरजद्रवैः सिक्तधरं **काश्मीर**भूमिवत् । नगरं नाभिद्रङ्गतुल्यं भूपतिरातनोत् ॥ १२१ ॥
—त्रिभिर्विशेपकम् ।

प्ररूढप्रौढसौहार्दवसुधाधीशसंस्तुतः । पुरं पौरपुरन्ध्रीभिराकुलाट्टालकं ततः ॥ १२२ ॥

---

1 N घर्मार्तो । 2 N °पक्षान्ते । 3 N °धिष्ठान° । 4 °विश्वभरक्रमं । 5 B कृतीश्वरः । 6 A पथि; N पातिं । 7 N स्वस्थैः । 8 N श्रधागतां । 9 N B विज्ञप्ते ।

प्रविवेश विशामीश इव सच्छत्रचामरः । अभ्रंलिहद्विपारूढो विवोढोपशमश्रियः ॥ १२३ ॥–युग्मम् ।
सौधे राजा ततः सिंहासने गद्दिका( कया ? )स्तृते[1] । उपावेशयदानन्दात् सुहृदं मुनिनायकम् ॥ १२४ ॥
प्रांशुप्रभावनोद्भूतरङ्गः संघः प्रभोरथ । परिचर्यां परां चक्रे वक्रेतरमनाः सदा ॥ १२५ ॥
शश्वद्राजसभावासावपि निर्धूतकल्मषः । **बप्पभट्टिः** [2]प्रभुः श्रीमान् भूपाग्रे सुकृतं जगौ ॥ १२६ ॥
कल्याणपादपारामजलवाहजलप्लवः । धर्म एव निराधागधारः[3] परपदप्रदः ॥ १२७ ॥
तस्यादौ प्रथितं दानं तच्च क्षेत्रेषु सप्तसु । तेषु च प्रथमं विद्धि सिद्धिकृज्जिनमन्दिरम् ॥ १२८ ॥
अपरं बिम्बनिर्माणमथ सिद्धान्तलेखनम् । चातुर्वर्ण्यस्य संघस्याभ्यर्चैतानि किल क्रमात् ॥ १२९ ॥
तदन्तरा च सर्वेषामाधारो जैनमन्दिरम् । जिनाः श्रुतधराश्चात्र[4] स्थिताः संघप्रबोधकाः ॥ १३० ॥
श्रीमतां सति सामर्थ्ये विधेयं विधिवच्च तत् । बहवो यत्प्रभावेन भव्याः सद्गतिमाप्नुयुः ॥ १३१ ॥
इति तद्वाक्यमाकर्ण्य प्रकर्णानां शिरोमणिः । अवोच**दामभूपालः** प्रालेयांशुस्फुरद्यशाः ॥ १३२ ॥
पृथ्वी देशः पुरं हर्म्यं तिथिर्मास ऋतुः समाः । धन्यान्येतानि भास्यन्ते यानि त्वद्देशनांशुभिः ॥ १३३ ॥
इत्युक्त्वाऽदात् तदादेशं भूमिलक्षणवेदिनाम्[5] । कोशकर्मनराध्यक्षपुंसां च श्रीजिनौकसे ॥१३४॥–युग्मम् ।
विश्वकर्मविदस्तत्र विश्वकर्मसु कर्मठाः । प्रारेभिरे महाभूत्या प्रासादं सुकृतोत्सवैः ॥ १३५ ॥
दिनैः कतिपयैः सैकशतहस्तोन्नतस्थितिः । प्रासादः परिनिष्पेदे सर्वलोकमुदा समम् ॥ १३६ ॥
पूर्णवर्णसुवर्णाष्टादशभारप्रमाणभूः । श्रीमतो वर्द्धमानस्य प्रभोरप्रतिमानभूः ॥ १३७ ॥
निरमाप्यत संप्राप्यागण्यपुण्यभरैर्जनैः । धार्मिकाणां संचरन्ती प्रतिमा प्रतिमानसम् ॥ १३८ ॥–युग्मम् ।
श्री**बप्पभट्टि**रेतस्या निर्ममे निर्ममेश्वरः । प्रतिष्ठां स[6] प्रतिष्ठासुः परमं पदमात्मनः ॥ १३९ ॥
तथा **गोपगिरौ** लेप्यमयबिम्बयुतं नृपः । श्रीवीरमन्दिरं तत्र त्रयोविंशतिहस्तकम् ॥ १४० ॥
सपादलक्षसौवर्णटङ्कनिष्पन्नमण्डपम् । व्यधापयन्निजं राज्यमिव सन्मत्तवारणम् ॥ १४१ ॥–युग्मम् ।
एवमभ्यर्हितो राज्ञा गच्छन् सच्छत्रचामरः । राजकुञ्जरमारूढो मुख्यसिंहासनासनः ॥ १४२ ॥
मिथ्यात्वध्यामलाभोगान् लोकान् मत्सरपूरितान् । **बप्पभट्टि**प्रभुश्चक्रे वक्रेतरनरस्तुतः ॥१४३॥–युग्मम् ।
राजा पूज्यद्विजातीनां[7] संसर्गादनुवर्त्तकः । अन्यदान्यन्महीपालासनमाधत्त सूरये ॥ १४४ ॥
ततस्तदाशयं ज्ञात्वा विगताकारवैकृतः । जगाद प्रतिबोधाय तस्यागाधैकसत्त्वभृत् ॥ १४५ ॥
कृतप्राकृतसत्त्वानां मदादीनां जनद्विपाम् । दम्भस्तम्भादियुक्तानां कथं लक्ष्या भवादृशाः ॥ १४६ ॥

ततः, यदुक्तं–

**मर्दय मानमतंगजदर्पं विनयशरीरविनाशनसर्पम् ।**
**क्षीणो दर्पाद् दशवदनोऽपि यस्य न तुल्यो भुवने कोऽपि ॥ १४७ ॥**

इत्याकर्ण्य गिरं धीरां बुद्ध्वा सूरिं व्यजिज्ञपत् । प्रभो ! त्वद्वाक्यमन्त्रैर्मेऽवलेपगरलं [8]हृतम् ॥ १४८ ॥
प्रभवः प्रभवः क्षेत्रे मम धान्यं हि सौहृदम् । स्वादतामत्र संपन्नभक्तपाकादिसंस्कृतम् ॥ १४९ ॥
§ ९. अन्तःपुरेऽन्यदा म्लानवक्त्रभां वल्लभां तदा । राजा दृष्ट्वाह गाथार्धं स्वेच्छयेति प्रभोः पुरः ॥ १५० ॥

तद्यथा–

**'अज्जवि सा परितप्पइ कमलमुही अत्तणो पमाएण ।'**

सारसारस्वतोद्गारसिद्धयाथ गुरुर्गिरा ॥ १५१ ॥

---

1 N गष्टिकयास्तृते । 2 N बप्पभट्टिप्रभुः, C °भट्टिः प्रभुश्रीमान् । 3 B N °धाराधारं । 4 N °धरा यत्र । 5 A °वेदिना । 6 C N सुप्रति° । 7 N राजा प्रद्विजजातीनां । 8 N हृतम् ।

गाथोत्तरार्धमाचख्यौ सख्यौ स्नेहं वहन् नृतम् ।
**'सुत्तविउद्धेण[1] तए जीसे पच्छाइयं अंगं'** ॥ १५२ ॥
इत्थंदिवचसा तुष्टः प्रशंसन् कविकर्म तत् । तस्थौ किञ्चिदिव भ्रान्तः पुनरभ्रान्तलोचनः ॥ १५३ ॥
नृपो निरुपमप्रेमनिधिः शमभृता सह । अन्यदा ददृशे देवीं संचरन्तीं[2] पदे पदे ॥ १५४ ॥
व्यथ्यमानामिव कापि मुखभङ्गविकारिणीम् । कृपापरिष्कृतस्वान्त[3] इव गाथार्धमब्रवीत् ॥ १५५ ॥

तद् यथा–

**'बाला चंकमंती पए पए कीस[4] कुणइ मुहभंगं ।'**
ततः सत्यवचोवीचिवन्धुरं प्रावदत् प्रभुः ॥ १५६ ॥
असूनृतं न जल्पेत कल्पान्तेऽपि हि सिद्धवाक् ।
**'नूनं रमणपएसे मेहलया छिवइ नहपंती[5]'** ॥ १५७ ॥
श्रुत्वेति भूपतिः किंचित् सभ्रान्तो विकृतं मुखम् । चक्रे हिमोर्मिसंक्लिष्टसरोरुहमिवाद्युति ॥ १५८ ॥
इत्यालोक्य समुत्थाय प्रतिश्रयगतो मुनीन् । विहारहेतुं संवाह्य स्नेहमोहापराजितः ॥ १५९ ॥
काव्यमेतद् विलिख्याथ वहिर्द्वारकपाटयोः । श्रीसंघमप्यनापृच्छ्य निरगान्नगराद् बहिः ॥१६०॥–युग्मम् ।

तद्यथा–

**यामः स्वस्ति तवास्तु रोहणगिरेर्मत्तः स्थितिप्रच्युता**
**वर्तिष्यन्त इमे कथं कथमिति स्वप्नेऽपि मैवं कृथाः ।**
**श्रीमंस्ते मणयो वयं यदि भवल्लब्धप्रतिष्ठास्तदा**
**ते शृङ्गारपरायणाः क्षितिभुजो मौलौ करिष्यन्ति नः ॥ १६१ ॥**

§ ६. दिनैः कतिपयैर्**गौडदेशा**न्तर्विहरन् गुरुः । श्री**लक्षणावती**पुर्याः प्रापारामावनीतलम् ॥ १६२ ॥
तत्र **वाक्पतिराजो**ऽस्ति श्री**धर्मक्ष्माप**पर्षदि । विदुषां मौलिमाणिक्यं प्रबन्धकविरद्भुतः[6] ॥ १६३ ॥
प्रभोरागमनं ज्ञात्वा जलदस्येव चन्द्रकी[7] । तदागमनगीर्भिः स भूपालं पर्यतोपयत् ॥ १६४ ॥
वशे वाग्देवता यस्य कविर्मे प्राच्यसंस्तुतः । स इहागात् प्रभोः पुण्यैर्**बप्पभट्टि**मुनीश्वरः ॥ १६५ ॥
ज्योत्स्नाप्रिय इवैणांकोदयादेष विशांपतिः । अजल्पदुद्धुपद्रोमा विद्वन्मण्डलमण्डनम् ॥ १६६ ॥
विश्वकोविदकोटीरमेष जैनमुनीश्वरः । ध्रुवं यत्र[8] समभ्येति कृतपुण्यः स वासरः ॥ १६७ ॥–युग्मम् ।
परं मेऽस्या**मराजे**न दुर्ग्रहो विग्रहाग्रहः । तदाह्वानाद् यदा पश्चाद् याति तन्मे तिरस्कृतिः ॥ १६८ ॥
प्रष्टव्यस्तन्मुनिस्वामी स चेदागत्य मां नृपः । साक्षादापृच्छते[9] प्रस्थातव्यं तन्नान्यथा त्वया ॥ १६९ ॥
सुधीभिः कथितेऽर्थेऽस्मिन् सूरिणांगीकृते सति । तज्ज्ञात्वा **धर्मभूपालः** परमानन्दमाप्तवान् ॥ १७० ॥
**आमराज**प्रवेशाच्च सहस्रगुणितं ततः । प्रवेशोत्सवमाधत्त पुर्यामाचार्यभूपतेः ॥ १७१ ॥
**धर्मभूपे** तदा साक्षादिव धर्मे पुरःस्थिते । चक्रवर्ती सुधीवृन्दे प्रोचे वृत्तमिदं तदा ॥ १७२ ॥

तद् यथा*–

**रुचिरचरणारक्ताः सक्ताः सदैव हि सद्गतौ**
**परमकवयः काम्याः सौम्या वयं धवलच्छदाः ।**

---

1 A विउट्ठेण; B विउहेण । 2 A B संचरंती । 3 A °स्वांग । 4 N चंकमती पए कीस° । 5 A नहुपंती । 6 N कविस्तरः । 7 N चन्द्रिका । 8 A यत्नः । 9 N °दापृच्छयते । * केवलं A आदर्शे लभ्यते पदमिदम् ।

**गुणपरिचयोद्धर्षाः सम्यग्गुणातिशयस्पृशः**
**क्षितिप ! भवतोऽभ्यर्णं तूर्णं सुमानससंश्रिताः[1] ॥ १७३ ॥**
तत्रापि काव्यवक्तृत्वलीलानन्दितपार्षदाः[2] । अवतस्थे सुखं सूरिर्दोगुन्दग इवामरः ॥ १७४ ॥
§७. ततश्चामनृपः प्रातरनायाते प्रभौ तदा । नगरान्तर्बहिर्ग्रामाकरादिष्वगवेषयत् ॥ १७५ ॥
अप्राप्तौ बालमित्रस्य पारवश्यं गतः शुचः । वैलक्ष्यमक्षतं भेजे च्यवनोन्मुखनाकिवत् ॥ १७६ ॥
अन्येद्युर्बहिरारामे गच्छन्नेकं ददर्श सः । बभ्रुं* बभ्रुं भुजङ्गेन हतं [3]चित्रीयितस्ततः ॥ १७७ ॥
अस्य मौलौ मणिं तत्रालुलोके सम्यगीक्षया । संस्तभ्य तुण्डमादत्त[4] फणीन्द्रमपभीर्नृपः ॥ १७८ ॥
तमाच्छाद्याथ संवृत्या संगृह्य निलये नृपः । आगत्य श्लोकशल्कं स जजल्प[5] विदुषां पुरः ॥ १७९ ॥
**'शस्त्रं शास्त्रं कृषिर्विद्या अन्यो यो येन जीवति ।'**
तैः पूरिता समस्येयमभिप्रायैर्निजैर्निजैः । बिभेद हृदयं नैव तेषामेकोऽपि भूपतेः[6] ॥ १८० ॥
सस्मार भारतीपुत्रं **बप्पभट्टिं** तदा दृढम्[7] । मालतीकुसुमामोदमसौ रोलम्बबालवत् ॥ १८१ ॥
खद्योता इव चन्द्रस्य वालेया इव दन्तिनः । मम मित्रस्य विद्वांसः कलां नार्हन्ति षोडशीम् ॥ १८२ ॥
टंकलक्षं ददे हेम्नस्तस्य यः किल पूरयेत् । समस्यां मदभिप्रायात् प्रादात् पटहमीदृशम् ॥ १८३ ॥
अथो दुरोदराजीव एकः सर्वस्वनाशतः । श्रुत्वेति स धनोपायममुं श्लोकार्धमाददे ॥ १८४ ॥
ज्ञात्वा कुतोऽपि **गौडेषु** पुर्यां [8]तत्रागमच्च सः । **बप्पभट्टि**प्रभुं नत्वा कथयामास तत्पुरः ॥ १८५ ॥
अपराद्धं स चाह स्म क्लेशलेशं विना यतः । सरस्वतीप्रसादो हि विश्वक्लेशाब्धिकुम्भभूः ॥ १८६ ॥
तच्च—
**'सुगृहीतं हि कर्तव्यं कृष्णसर्पमुखं यथा' ॥ १८७ ॥**
**नागावलोक** इत्याख्यां [9]राज्ञस्तत्र प्रभुर्ददौ । ततः प्रभृत्यनेनापि नाम्ना विख्यातिमाप सः ॥ १८८ ॥
स द्यूतकृत् तदादायागमद् **आमनृपा**ग्रतः । मुदा निवेदयामास तच्चमत्कारकारणम् ॥ १८९ ॥
केनापूरीति राज्ञा च पृष्टः प्रोवाच स प्रभो ! । श्री**बप्पभट्टि**नेत्युक्ते ददौ तस्योचितं नृपः ॥ १९० ॥
विरहस्य विनोदायान्येद्युर्भूपो बहिर्ययौ । मृतं न्यग्रोधवृक्षस्य तले पान्थं ददर्श च[10] ॥ १९१ ॥
शाखायां लम्बमानां च तथा करकपत्रिकाम् । श्च्योतन्तीं विप्रुषां व्यूहं गाथार्धं लिखितं तथा ॥ १९२ ॥
तच्च—
**'तइया मह निग्गमणे पियाइ थोरंसुएहिं† जं रुन्नं ।'**
प्राग्वत् तदपि नापूरि भूपालस्य मनोहरा[11] । केनापि विदुषा कोऽर्कं विना विश्वप्रकाशकः ॥ १९३ ॥
अस्यामलक्ष्यलक्ष्यायां समस्यायां स देवनी‡ । पुनर्ययौ च श्री**बप्पभट्टि**पार्श्वेऽवदच्च ताम् ॥ १९४ ॥
स चानायासतो विद्वन्मौलिः प्रसुरपूरयन् । गृहीत्वा स पुनः प्रायादुत्तरार्धं नृपाग्रतः ॥ १९५ ॥
तच्च—
**'करवत्तिबिंदुनिवडणमिहेण तं अज्ज संभरिअं' ॥ १९६ ॥**
अन्येन विदुषा केनचिदध्वन्येन तत्र तत् । सर्वं दृष्ट्वा दोधकार्धमभण्यत[12] यथामति ॥ १९७ ॥

---

1 N °संमिताः । 2 C N °पर्षदः; C °पार्षदं । * 'पिंगं नकुलं' इति C टिप्पणी । 3 A चिचित्रीयित° । 4 N °माधत्त । 5 N श्लोकशकलं जजल्प । 6 N भूपतिः । 7 N तदादृतम् । 8 N पुर्यंत आगमच्च । 9 N राज्ञे । 10 N सः । † 'स्थूराङ्गुभिः' इति C टिप्पणी । 11 A B मनोहराम्; N मनोहरम् । ‡ 'द्यूतकृत्' इति C टिप्पणी । 12 N °मभाष्यत ।

तथा हि–

**करवत्तयजलबिंदुआ[1] पंथिय हियइ निरुद्ध ।**–पथिकोक्तिः ।
**सा रोअंती संभरी नयरि, ज मुंकी मुद्ध ॥ १९८ ॥**–श्रीबप्पभट्टेरुक्तिः ।

इति पाठान्तरम् ।

राजा श्रुत्वेति दध्यौ च रसपुष्टिममूदृशीम् । मम मित्रं मुनिस्वामी कविर्भ्राति नापरः ॥ १९९ ॥
प्रधानान् भूपतिः प्रैषीदाह्वानाय मुनीशितुः । तदुपालम्भगर्भाणि दोधकं वृत्तमार्यया ॥ २०० ॥
तैश्चोपान्तं प्रभोराप्याप्राप्यं विगतचेतनैः । वाचिकं कथयामासे कुशलप्रश्नपूर्वकम् ॥ २०१ ॥

तद्यथा–

**छायह कारणि सिरि धरिअ पच्चि वि भूमि पडंति ।**
**पत्तहं इहु पत्तत्तणु वरतरु कांइं करंति ॥ २०२ ॥**

**न गङ्गां गाङ्गेयं सुयुवतिकपोलस्थलगतं**
**न वा शुक्तिं मुक्तामणिरुरसिजास्वादरसिकः ।**
**न कोटीरारूढं स्मरति च सवित्रीं वसु भुवं[2]**
**ततो मन्ये विश्वं स्वसुखनिरतं स्नेहविरतम् ॥ २०३ ॥**

**पांशुमलिनांघ्रिजंघः कार्पटिको म्लानमौलिमुखशोभः ।**
**यद्यपि गुणरत्ननिधिस्तथापि पथिकः पथि वराकः ॥ २०४ ॥**

इत्याकर्ण्य गुरुस्तेषां पुरः प्राह वचः स्थिरम् । सौहृदे दौर्हृदे वापि संसृजेन्मनसा मनः ॥ २०५ ॥
**आम**नाममहीभर्तुर्भवद्भिर्वाचिकं हि नः । निवेदनीयमार्यस्य दृढं गाथाकदम्बकम् ॥ २०६ ॥

तथा हि–

गय माणसु चंदणु[3] भमरु रयणायरु सिरि(ससि?)खंडु ।
जड उच्छु य[4] बप्पभट्टि किउ सत्तय[5]गाहासंडु ॥ २०७ ॥
विंझेण विणा वि गया नरिंदभुवणेसु हुंति गारविया ।
विंझो न होइ अगओ गएहिं बहुएहिं वि गएहिं ॥ २०८ ॥
माणसरहिएहिं [6]सुहाइं जह न [7]लब्भंति रायहंसेहिं ।
तह तस्स वि तेहि[8] विणा तीरुच्छंगा न सोहंति ॥ २०९ ॥
परिसेसियहंसउलं वि माणसं माणसं न संदेहो ।
अन्नत्थ वि जत्थ गया हंसा वि बया न भन्नंति ॥ २१० ॥
हंसा जहिं गय तहिं जि गय महिमंडणा हवंति ।
छेहउ ताहं महासरह जे हंसिहि मुच्चंति ॥ २११ ॥
मलओ सचंदणो चिय [9]नइमुहहीरंतचंदणदुमोहो ।
पब्भट्ठं पि हु[10] मलयाओ चंदणं जायइ[11] महग्घं ॥ २१२ ॥
अग्घायन्ति महुयरा विमुक्ककमलायरा वि मयरंदं ।
कमलायरो वि[12] दिट्ठो सुओ व किं महुअरविहीणो ॥ २१३ ॥

---

1 A करवत्तजलबिंदुआं । 2 C मणिचय । 3 A चंदण । 4 A उब्भुय; C उब्बुय । 5 A B सत्तह । 6 A माणसरहिं ।
7 A न लज्जंति; C नग्घंति । 8 A तेण । 9 A नयमुह° । 10 A ह । 11 A जाइ । 12 A पि ।

एकेण कोत्थुहेणं विणावि रयणायरु च्चिय समुद्दो ।
कोत्थुहरयणं पि उरे जस्स ठिओ सो वि हु महग्घो ॥ २१४ ॥
खंडं विणा वि अखंडमंडलो चेव पुण्णिमायंदो ।
हरसिरि[1]गयं पि सोहइ न नेय विमलं ससिक्खंडं ॥ २१५ ॥

तथा–

पइँ मुक्काह वि वरतरु फिट्टइ पत्तत्तणं न [2]पत्ताहं ।
तह पुण[3] छाया जइ होइ तारिसी तेहि पत्तेहिं ॥ २१६ ॥
जइ सव्वत्थ अह च्चिय उवरिं सुमणाणि सव्वरुक्खाणं ।
[4]वावे विवडंति गुणा पहुपत्तिय पावए कोडिं ॥ २१७ ॥
जे के वि पहू महिमंडलंमि ते उच्छुदंडसारिच्छा ।
सरसा जडाण मज्झे विरसा पत्तेसु दीसंति ॥ २१८ ॥
इय उज्जुयसीलालंकियाण पायपडियवयणसोहाण ।
गुणवंतयाण पहुणो पहूण गुणवंतया दुलहा ॥ २१९ ॥

ततः–

अस्माभिर्यदि कार्यं वस्तदा **धर्मस्य** भूपतेः । सभायां छन्नमागत्य स्वयमापृच्छ्यतां द्रुतम् ॥ २२० ॥
जाते प्रतिज्ञानिर्वाहे यथा यामस्तवान्तिकम् । प्रधानाः प्रहिताः पूज्यैरिति शिक्षापुरस्सरम् ॥ २२१ ॥
**कन्यकुब्ज**महीनाथमुपाजग्मुश्च तेऽप्यथ । सम्यग् व्यज्ञपयन्[5] सूरेर्वचो माहात्म्यधाम तत् ॥ २२२ ॥
§८. अकुण्ठोत्कण्ठ**माम**स्तैः करभैर्विगतारिभीः । गच्छन् **गोदावरी**तीरे ग्रामं[6] कंचिदवाप सः ॥ २२३ ॥
तस्य पर्यन्तभूपीठे खण्डदेवकुले तदा । चक्रे वासं कृतावासस्तद्देव्याश्चेतसि स्थितम्[7] ॥ २२४ ॥
निशीथे सा समागत्य रूपाक्षिप्ता नरेश्वरम् । बुभुजे प्रार्थनापूर्वं भाग्यं जागर्ति सर्वतः ॥ २२५ ॥
प्रातरुत्थाय सन्मित्राय**ल्लके**न तरंगितः । ययौ करभमारुह्यानापृच्छ्यैव तदाथ ताम् ॥ २२६ ॥
स प्राप प्रभुपादान्तं[8] प्रान्तं विरहरुक्शुचाम् । काव्यं जजल्प निर्वेदवह्निज्वालोपमं नृपः ॥ २२७ ॥

निद्राजागरणादिकृत्यनिवहे नित्यानुवृत्तिस्पृशां
स्वप्नेष्वप्यथ [9]योगिनां नयनवच्चेष्टासु सूक्ष्मास्वपि ।
तत्तादृक्[10] [11]स्वहृदामिवेह सुहृदां निष्ठेदृशी स्याद्यदा
मित्राशापरिहारमाचर ततश्चेतः प्रसीद प्रभो ! ॥ २२८ ॥

नृपो याथातथवचःप्रतीतोऽप्यथ कौतुकात् । गाथापरार्द्धमाचख्यौ पूर्वार्धं च गुरुस्ततः ॥ २२९ ॥

तद्यथा–

अज्जवि तं सुमरिज्जइ को नेहो एगराईए ।
गोलानईए खंडेउलमज्झे पहिअ जं न वसिओ सि ॥ २३० ॥

इत्युक्त्वा सूरिभिर्भूपो बाढं स परिषस्वजे । अविश्वास्यं मनस्तस्यान्तः प्रविश्येव वीक्षितुम् ॥ २३१ ॥
प्रकाम**मामभूपाल**स्तुष्टिं बिभ्रत्सखीक्षणे । इदं काव्यमुवाचाथ नाथः कविकुलेषु यः ॥ २३२ ॥

1 A सिर° । 2 A पत्तांह । 3 A पण । 4 B दावे; C वारे । 5 A विज्ञपयन् । 6 A ग्राममेकमवाप । 7 **स्थिरम्** ।
8 N पादानां । 9 A C स्वप्नेष्वप्ययोगिनां । 10 N तत्तद्वत् । 11 A B सुहृदा° ।

तद्यथा—

**अङ्गैरुत्पुलकैः [1]प्रमोदसलिलप्रस्यन्दिभिर्लोचनै-**
**राकर्ण्याद्भुतसंकथास्तव सुधीभर्तुः प्रसन्नात्मनः ।**
**सौजन्यामृतनिर्झरे सुमहति स्नातुं विपद्वारिधेः**
**पारं गन्तुमपारपौरुष ! वयं त्वां द्रष्टुमभ्यागताः ॥ २३३ ॥**

श्लोकं विचित्रबन्धेन लिलेख स खटीदलात् । कौतुकादामभूपालः शालिसौहार्दरञ्जितः ॥ २३४ ॥

तथा हि—

**अ ति अ ति अ न्म अ लं**
**प्री द्य र द्य ज द्य प द्य ।**
**मे ला मे ला मे लं मे लं**
**फ स फ स फ स फ स ॥ २३५ ॥**

तं च गोमूत्रिकाबन्धं ज्ञात्वा गुरुरपि स्वयम् । वाचयामास दोषज्ञैरपि ज्ञातं परैर्नहि ॥ २३६ ॥

तथा हि—

**अद्य मे सफला प्रीतिरद्य मे सफला रतिः ।**
**अद्य मे सफलं जन्म अद्य मे सफलं फलम् ॥ २३७ ॥**

विद्वद्गोष्ठ्या विनिद्रं तं विश्रमय्य क्षपाक्षणे । प्रगेऽशङ्को नृपास्थानं सूरिः प्राप यथास्थितिः ॥ २३८ ॥
**आमराजो**ऽप्यथ श्रीमानभ्रच्छन्न इवांशुमान् । विशिष्टैः स्वार्थनिष्ठोऽगात् स स्थगीधरकैतवात् ॥ २३९ ॥
**आम**विज्ञप्तिकां **धर्मराज**स्यादर्शयद् गुरुः । आगमिष्यद्वियोगाग्निज्वालामिव सुदुःसहाम्[2] ॥ २४० ॥
वाचयित्वा च तां पृष्टो दूतस्ते कीदृशो नृपः । स प्राहास्य स्थगीभर्तुस्तुल्यो देव ! प्रबुध्यताम् ॥ २४१ ॥
मातुलिंगं करे बिभ्रत् सैष पृष्टश्च सूरिणा । करे ते किं स चावादीद् 'बी ज उ रा'[3] इति स्फुटम् ॥ २४२ ॥
दूतेन चाढकीपत्रे दर्शिते गुरुराह सः । स्थगीधरं पुरस्कृत्य 'तू अ रि प त्त' मित्ययम् ॥ २४३ ॥
प्राकृतेनोत्तरं प्रादाच्छ्लेषेण ज्ञापनोपमम्[4] । अवबोधाय[5] यदृच्छा तु[6] **धर्म**स्यर्जुचेतसः ॥ २४४ ॥
अथोवाच प्रधानश्च सूरिरेष श्लथादरः । अस्मास्विति प्रतिज्ञां य[7] दुस्तरां विदधे ध्रुवम ॥ २४५ ॥
विहितेऽत्रापि चेत् पूज्य आयाति [8]प्राज्यपुण्यतः ।
अस्माभिः सह तद्देवाः प्रतुष्टा नो विचार्यताम् ॥ २४६ ॥—युग्मम् ।

यतः—

**तत्ती सीअली मेलावा केहा,**
**धण उत्तावली प्रिय मंदसिणेहा ।**
**विरहिहिं माणुसु[9] जं मरइ तसु कवण निहोरा,**
**कंनि पवित्तडी जणु जाणइ दोरा ॥ २४७ ॥**

राज्ञोचे वस्तुकस्यास्य कीदृगर्थः प्रभुस्ततः । **बप्पभट्टि**र्नृपस्याग्रे व्याख्यात्[10] ख्यातधीनिधिः ॥ २४८ ॥

तथाहि—एका लोहपिण्डी वह्निना तप्ता । अर्थात् ज्ञेया । एका शीतला । अनयोर्मीलकः संसर्गः कीदृशः । उभयोरपि तप्तयोरेव सम्बन्धो भवति । इत्यनेन किमुक्तम्–यद्वयं रणरणकतप्ताः, अयं च औदासीन्याज्जितें-

1 N प्रसाद° । 2 A C °दुःसहम् । 3 N द्विजराज° । 4 A ज्ञापनोत्तमम् । 5 A अवबोधये; B C अत्रबोधे । 6 A B नु । 7 N प्रतिज्ञाय दुःपूरां । 8 A प्राच्य° । 9 C माणुस । 10 N व्याख्यादाख्या° ।

द्रियत्वान्निर्लोभत्वाच्च शीतस्तदस्माकमनेन सह कथं मीलक इति। तथा, धना देशीशब्देन पत्नी, सा उत्सुका; प्रियश्च मन्दस्नेहः। ततः कथं मीलको भवति। विरहेण यन्मानुषं म्रियते मृततुल्यं प्राणशेषं भवति, तस्य को निहोरक उपरोधः, तत्र कृतेऽपि न जीवति। मिलित एव प्रणयिनि जीवति। तथा कर्णे पवित्रिकेयं जनो जानाति दोरकं द्वित्रिगुणावलिततन्तुरूपं स्थगीधरस्येति [1]वास्तवार्थः ॥ १ ॥

तथा — तप्तं तपस्तदिच्छतीत्येवं शीलस्तपश्चरणेच्छुः स तप्तंपी। तथा, अली भूषाप्रिय एको लक्षणया सकामः। 'नाकामी मंडनप्रियः' इति वचनात् । अनयोर्मीलकविषये का ईहा चेष्टा, किंतु न कापि। तथा उप्तं धनं यैस्ते धनोप्ताः, आहिताग्न्यादित्वात् क्तांतपरनिपातः, तेषामावली श्रेणिर्दानेश्वरसमूहस्तस्य प्रियो वल्लभः। दानेश्वराणां हि सत्पात्रेच्छा विशेषतो भवति। स चार्थादाचार्यः। स मन्दस्नेहो निर्मोह इत्यर्थः। तथा, विरहे विशिष्टैकान्ते तद्धेतोर्म्रियते, लक्षणया तदर्थं सन्तप्यत इत्यर्थः। तस्य का न होरा मुहूर्तरूपाः। स सर्वदा तस्य विरहे सन्तप्त एवास्ते । स [2]क इति प्रश्नाध्याहारे, [3]कन्नि-कान्यकुब्जे, पवितडित्समानः-विद्युत्समस्तेजस्वी, जनो विद्वज्जनो मल्लक्षणः, स जानाति 'दो रा' द्वौ राजानौ। [4]वास्तवेऽर्थे-द्वावेव राजानौ धर्म आमश्च विद्वत्प्रियाविति मच्चित्ते। गूढार्थस्तु-एतावता[5] राजन् ! त्वया ज्ञेयम्, यद्गुरुप्रतिज्ञानिर्वाहाय आमोऽत्रायातोऽस्तीति द्वितीयोऽर्थः ॥ २ ॥

तथा — तप्तिः-सारा शीतला यत्र, श्लथ आदर इत्यर्थः। स तप्तिशीतलः। 'स्वराणां स्वराः प्रायोऽपभ्रंशे' इतीकारः। तत्र मीलकः कीदृशः। यतः-ध्वनदुक्तावली, चमत्कारिकाव्यश्रेणिर्वल्लभा यस्य, अर्थादाचार्यः। सोऽस्मासु मन्दस्नेहः। स उपरोधेन न गृह्यत इत्यर्थः। तथा, विरहे अर्थाद् विषयवियोगे सर्वसंगपरित्यागे सति योऽमरति मानुषः पुरुषः, देववत्सुखीभवति, तस्य कः स्नेहः सम्बन्धादिषु। निहोरक उपरोधः, स उपरोधेन न गृह्यत इत्यर्थः। करणप्रवृत्तिर्दानेश्वरत्वात्कर्णरीतिः। दोरा-दोषा राजते महाबाहुः स आम एव[6]। एवंविधमपि सूरिर्जनमिव प्राकृतमिव जानाति न किंचिदित्यर्थः ॥ ३ ॥

तथा — तत्त्वानि ईष्टे तत्त्वेशी, अत एव अली संगनिषेधी, तस्य मेलः संसर्गः तस्य अयोऽवाप्तिः। 'स्वराणां स्वरा' इत्याकारः। तथा, के ब्रह्मणि, ईहा चेष्टा, यस्य स केहः-परमब्रह्मेच्छः। दीर्घः प्राग्वत्। धनयुक्तानामावली श्रेणिः। प्रिया अमन्दस्नेहा अत्यर्थप्रीतिर्भवति। विगतरागेषु हि सर्वः प्रीतिमान्। धनवन्तोऽपि तत्रैव रतिं विदधति। तथा, विः पक्षी गरुडः, स रथो यस्य स विरथो-विष्णुस्तस्मिन्नर्थात् चित्तस्थे, यो म्रियते तस्य को निभः सदृशः। स च रा राजेव एवं भवति। गुरौ चित्तस्थे मृत्युरपि श्लाघ्यः। तथा, जह्नुनद्या गंगायाः सकाशात् का अन्या पवित्रा । अयमेव भगवान्[7] पूज्यः। तथा, 'दोरा' द्वौ राजानौ संगतौ यस्य स द्विराट्, सर्वसामर्थ्ययुक्तो भवानेव यदुचितं तद्विधेहीति चतुर्थोऽर्थः ॥ ४ ॥

॥ तत्तीसीअलीटीकायां ग्रंथाग्रं ३२; अ० ८॥

श्री**बप्पभट्टि**ना चैवमर्थानां साष्टकं शतम् । व्याख्यातं मतिमान्द्येन न जानीमो वयं पुनः ॥ २४९ ॥
तत उत्थाय रात्रौ च वारवेश्यागृहेऽवसत् । अमूल्यं कङ्कणं दत्वाऽस्याः प्रातर्निरगाद् गृहात् ॥ २५० ॥
द्वितीयं राजसौधस्य द्वारि त्यक्त्वा खरांशुरुक्[8] । इन्द्रकीले ययौ तस्माद् बहिरस्थाद् रहोवने ॥ २५१ ॥
ततः प्रातर्मुनिस्वामी संगत्य नृपतेः सभाम् । आपप्रच्छे नृपः **कन्यकुब्ज**प्रस्थानहेतवे ॥ २५२ ॥
तेन पूर्णप्रतिज्ञायामज्ञातायां कथं त्विति । राज्ञा पृष्टः समाचख्यावा**मभूप** इहागमत् ॥ २५३ ॥
विद्वत्कथनतस्तेन कथितं यद्यदीदृशः । ज्ञायतां सैष एवेति 'दो रा' शब्दात् तथा पुनः ॥ २५४ ॥
द्वौ राजानौ इति स्पष्टं मातुलिंगस्य दर्शनात् । इदं किमिति पृष्टे च 'बी ज उ रा' त उत्तरात् ॥ २५५ ॥
तथा 'तू अ रि प त्तं' ति तवारिपत्रमित्यथ । संस्कृताद्भवतीत्येतत् तवाग्रे जगदे स्फुटम् ॥ २५६ ॥
ततो विप्रतिसारो*ऽस्य प्रससार प्रकर्षतः । धिगस्ति मम मूर्खत्वं न ज्ञातं कथितेऽपि यत् ॥ २५७ ॥
ततोऽवसर एतस्मिन् वारवामा प्रभोः पुरः । कङ्कणं मुमुचे रत्नरोचिरस्ततमस्ततिः ॥ २५८ ॥
क्षत्ताऽपरं समर्प्याथ भूपालाय व्यजिज्ञपत् । द्वारेन्द्रकीले केनापि मुक्तं नाथ ! न वेद्म्यहम् ॥ २५९ ॥

---

1 N वा सूत्रार्थः । 2 N स वा इति । 3 N नास्ति 'कन्नि-' । 4 N वा एत्राऽर्थे । 5 N नास्ति 'एतावता' । 6 N नास्ति 'एव' । 7 A भवान् । 8 N स्वरांशुरुक् । * 'पश्चात्तापः' इति C टिप्पणी ।

यावत् पश्यति राजा तदामनामाथ दृष्टवान्। श्रीबप्पभट्टेरापृच्छय हेतुप्रत्यायकः प्रभुः॥ २६०॥
गृहागतो[1] नृपः शत्रुर्नार्चितो न च साधितः। द्विधापि चिरवैरस्य निर्वृत्तिर्न प्रवर्तिता॥ २६१॥
तथा च विरहः पूज्यैरुपतस्थेऽतिदुःखदः। यावल्लभ्यं तु लभ्येत किं ब्रूमः सांप्रतं प्रभो!॥ २६२॥
गुरुराह महाराज! मा खेदोऽत्र विधीयताम्। हंसा इव वयं येनाप्रतिबद्धविहारिणः॥ २६३॥
आपृष्टोऽसि महाबाहो[2] यामः स्वं नाम सार्थकम्। कुर्यात् यथा[3] परे लोका निर्मलाः स्युः सुहृत्तम!॥२६४॥

§९. इत्युक्त्वाऽतो निरीयागात् संगत्यामनृपेण च। करभीभिरभीपुंभिः सुरभिर्यशसा गुरुः॥ २६५॥
मार्गे तदासनारूढः प्रभुणा सह संचरन्। पुलिन्दमेकं कासारे क्षिप्तास्यं वारिमध्यतः॥ २६६॥
पिबन्तं च छगलवद्[4] दृष्ट्वा गुरुपुरस्तदा। आह प्राकृतकाव्यार्द्धमपूर्वेक्षासकौतुकः॥ २६७॥

तथा हि–

**पसु जेम पुलिंदउ पीअइ जलु पंथिउ कमणिहिं कारणिण[5]।**

–इत्याकर्ण्य प्रभुः प्राहोत्तरार्द्धं तत्क्षणादपि॥ २६८॥

विलम्बन्ते न काव्येषु सिद्धसारस्वताः क्वचित्।

तद्यथा–**करवेवि करंबिय कज्जलिण मुद्धहि अंसुनिवारणिण॥ २६९॥**

प्रत्ययार्थं पुलीन्द्रश्च[6] समाकार्य स भूभुजा। पृष्टो लज्जानतास्योऽयं यथावृत्तमथावदत्॥ २७०॥
नाथ! प्रवसने युष्मद्वधूं सांत्वयतः सतः। सांजनाश्रुप्रमृष्टे[7] मेऽभूतां कज्जलितौ करौ॥ २७१॥
हर्षप्रकर्षमासाद्य वृत्तान्तेनामुना नृपः। सुरेन्द्र इव सौधर्म्मं द्राक् कन्याकुब्जमासदत्॥ २७२॥
प्रविवेशोत्सवेनैष प्राच्यात्[8] सातिशयेन सः। कोटिकोटिगुणामर्श्चामकार्षीच्च गुरोस्तथा॥ २७३॥

§१०. इतश्च श्रीसिद्धसेनसूरयो जरसा भृशम्। आक्रान्ताः कृतकृत्यत्वात् सेच्छाः प्रायोपवेशने॥२७४॥
बप्पभट्टेर्विधेयस्य विनेयस्य मुखाम्बुजम्। दिदृक्षवो मुनिं प्रैषुर्वृत्तं चाह्वानहेतवे॥ २७५॥

तच्चेदम्–

**सारीरं सयलं बलं विगलिअं दिट्ठी वि कट्ठेण मे**
**दट्ठव्वेसु पयट्टई परिगयप्पायं तहा आउगं।**
**पाणा पाहुणय व्व गन्तुमहुणा वट्टंति वंछा तुमं**
**मं दट्ठुं जइ अत्थि ता लहु लहु इज्जाहि निस्संसयं॥ २७६॥**

तं दृष्ट्वा बहुमानार्द्रो गुरौ द्रागाजगाम च। राजपुंभिः समं मोढेरके प्रभुपदान्तिके॥ २७७॥
प्रभोः स न्यासविन्यासं रुन्धन् प्रथमदर्शने। अतृप्तस्तस्य वात्सल्ये तेनासौ जल्पितः शमी॥ २७८॥

तथा हि–

**वपुः कुब्जीभूतं तनुरपि शनैर्यष्टिशरणा**
**विशीर्णा दन्ताली श्रवणविकलं कर्णयुगलम्।**
**निरालोकं चक्षुस्तिमिरपटलध्याममहो**
**मनो मे निर्लज्जं तदपि विषयेभ्यः स्पृहयति॥ २७९॥**

ततो वत्स मतिस्वच्छ गच्छवात्सल्यतत्परः। भव त्वं [9]कुरु साहाय्यं प्रेत्य मे चानृणो भव॥ २८०॥

---

1 A गृहायातो। 2 A महाराज। 3 A कुर्यात्तथा। 4 C छगलक°। 5 C पसु जेम पुलिंदउ कमणिहि कारणिण।
6 N पुलिंदस्य। 7 A प्रमृष्टोर्म°; B प्रमृष्टेमैर्भू°; N प्रमृष्टौ मा°। 8 N प्राच्याशाति°। 9 A गुरुसाहाय्यं।

तत आराधनां कृत्वा परलोकं समाधिना । ते[1] ययुर्गुणशास्ति[2] च चक्रेऽसौ राजपूजितः ॥ २८१ ॥
श्रीमद्**गोविन्दसूरेः** श्रीन**न्नसूरे**श्च स प्रभुः । **बप्पभट्टिः**[3] समर्प्याथ गच्छं संघं च सोद्यमः[4] ॥२८२॥
अनुज्ञाप्य क्षितिस्वामिप्रधानैराप्तैर्वृतः । पुनरप्यायया**वाम**धाम निर्ग्रन्थनायकः ॥ २८३ ॥–युग्मम् ।

§११. सभासीनोऽन्यदा राज्ञः सूरिः प्रेक्षणकक्षणे । प्रवीणपुस्तिकाहस्तः पुंरूपेव सरस्वती ॥ २८४ ॥
द्विधाक्षरे* पदे स्थास्नुर्दृष्टिस्तत्क्लेशनाशिनी[5] । तदा कदाचिदाधासीन्नीलचण्डातके† दृशम् ॥२८५॥–युग्मम् ।
तं दृष्ट्वा भूपतिस्तत्र जातरागविकल्पतः । चित्ताभिसन्धिसम्बद्धां गाथामेनामचिन्तयत् ॥ २८६ ॥

तथा हि–

**सिद्धंततंतपारंगयाण जोईण जोगजुत्ताणं ।**
**जइ ताणं पि मयच्छी जयंति[6] ता तिंचिय[7] पमाणं ॥ २८७ ॥**

अमूदृक्कार्यनिर्वाहज्ञानहेतुं ततस्तदा । स्नेहादेव निशि प्रैषीत् तां पुंवेषां तदाश्रये ॥ २८८ ॥
सा निलीना क्वचिद् भव्यगणे स्वस्थानगे ततः । रहः शुश्रूषितुं सूरिं प्रारेभे धैर्यभित्तये ॥ २८९ ॥
स्त्रीकरस्पर्शतो ज्ञात्वाऽत्रोपसर्गमुपस्थितम् । विममर्श नृपाज्ञानतमसश्चेष्टितं ध्रुवम् ॥ २९० ॥
स सज्जः [8]सज्जयसज्जमनोभूविजये ततः । अष्टाङ्गयोगसद्धर्म्मसंवर्म्मिततनुर्मुदा ॥ २९१ ॥
शुभध्यानाश्वमारूढः सन्तोषप्रक्षराक्षतम्[9] । दृढसंयमकोदण्डावष्टब्धतपआशुगः ॥ २९२ ॥
सद्बोधपुष्टिरिष्टिगीःशक्तिशक्तिस्फुरत्करः । अनास्थया समुत्तस्थावन्तरङ्गद्विपज्जये ॥२९३॥–त्रिभिर्विशेषकम् ।
अब्रवीद् ब्रूहि काऽत्र त्वं किमर्थं समुपस्थिता । [10]ब्रह्मवर्मवतामेषा स्यान्न भूमिर्भवादृशाम् ॥ २९४ ॥
अध्वन्येषु यथा व्याली हारहूरं[11] द्विजालये । पलं दर्शनशालासु हलं राजकुले यथा ॥ २९५ ॥
धर्मे प्राणवधो[12] यद्वद् वेदोच्चारे यथान्त्यजः । नालिकेरं कपौ[13] यद्वद् द्विके दधिफलं यथा ॥ २९६ ॥
चन्दने मक्षिका यद्वद् रामठं[14] कुङ्कुमे यथा । कर्पूरे लशुनो यद्वत् तथाऽत्र त्वं न चित्तहृत् ॥ २९७ ॥
–विशेषकम् ।
विश्वश्रोतःश्रवद्विस्र[15]जंबालकलुषाकृतौ । लज्जास्थाने[16]ऽबलादेहे रज्यन्ते[17] के कृमीन् विना ॥ २९८ ॥
श्रुत्वेति तानुवाचासौ नाहं [18]पूज्याभिलाषिणी । आययौ भवतो मार्गभ्रष्टान् बोधयितुं स्फुटम् ॥ २९९ ॥
संपत्संपत्तये दानधर्म्मं लोकोऽनुरुध्यते । ऐश्वर्याय तपस्तप्यं तच्च राज्यं विना नहि ॥ ३०० ॥
स्वर्भुवोरपि[19] तत्रापि सारं सारङ्गलोचना । यया विना नृदेवानामवकेशीव पुंजनुः[20] ॥ ३०१ ॥

उक्तञ्च–

**राज्ये सारं वसुधा वसुन्धरायां पुरं पुरे सौधम् ।**
**सौधे तल्पं तल्पे वराङ्गनानङ्गसर्वस्वम् ॥ ३०२ ॥**

जगत्पथि[21] न वर्तन्ते विपरीताग्रहग्रहाः[22] । अवाप्तवांछया प्राप्तं त्यज्यन्तो जनहास्यदाः ॥ ३०३ ॥
दुर्बुद्धिवृद्धितो दैवदण्डिता इव ते प्रभो ! । अवधारय पाखण्डखेदितो मा स्म भूर्जडः ॥ ३०४ ॥–युग्मम् ।
महाभक्त्याऽऽ**मराजेन**[23] प्रैष्यहं प्राणवल्लभा । विज्ञा मनोहरप्रज्ञा गुणरक्तधराधिपा ॥ ३०५ ॥

---

1 N तं । 2 N गुणशास्ति । 3 N °भट्टि । 4 N सोद्यमं । * 'क्षरे मोक्षे काव्यादिके च' इति C टिप्पणी । † 'कंचुके' इति C टि० । 5 A नाशने । 6 N मणिम्मि । 7 N B तच्चिय । 8 N ससज्ज सज्जयः । 9 N संतोषयक्षराक्षसम् । 10 N ब्रह्म-चर्म्म° । 11 'मद्यं' इति C टि० । 12 A प्राणिवधो । 13 N पपौ । 14 'हिंगु' इति C टि० । 15 A °द्विध°; B C °विश्र° । 16 N लज्जनीये । 17 N रजन्त्येके । 18 N पूजा° । 19 N स्वर्भुवोपि च । 20 B N पुंजनः । 21 N जगत्यपि । 22 N °ग्रहग्रहम् । 23 A महाराजेन ।

प्रभो ! [1]यदूचे बीभत्सरसन्यासवशा तनुः । अशुश्रूषाकदर्य्याङ्गभूतामेव कुयोषिताम् ॥ ३०६ ॥
वयं निरन्तरावाप्तकर्पूरादिमया इव । वेधसा विहिता अज्ञा[2] दौर्गन्ध्यादिकथास्वपि ॥ ३०७ ॥
ततो नाथेय[3] नाथ ! त्वां सफलीकुरु मामकम् । भोगाभोगं हि भोगेन भोगिन्या भोगिराडिव ॥ ३०८ ॥
ततः प्राक् सिष्मिये सूरिस्तद्वाग्भिर्न विसिष्मिये । उवाच च गिरं धीरां धैर्याधारधुरन्धरः ॥ ३०९ ॥
हैञी पाञ्चालिका रिक्तान्तरालाशुचिपूरिता । बहिश्चन्दनचर्चादिभूषासुरभिरस्तु[4] किम् ॥ ३१० ॥
मलमूत्रादिपात्रेषु गात्रेषु मृगचक्षुषाम् । रतिं करोति को नाम सुधीर्वर्चोगृहेष्विव ॥ ३११ ॥

**चक्षुः संवृणु वक्रवीक्षणपरं वक्षः समाच्छादय**
**रुंद्धि स्फूर्जदनेकभङ्गिकुटिलं रम्योपचारं वचः ।**
**अन्ये ते नवनीतपिण्डसदृशा वश्या[5] भवन्ति स्त्रियां**
**मुग्धे ! किं परिखेदितेन वपुषा पाषाणकल्पा वयम् ॥ ३१२ ॥**

इत्याकर्ण्याप्यकर्णेव न बुद्धा प्रत्युत प्रभोः । स्वभावकठिनौ हस्तौ स्वगात्रेऽपत्रपा [6]न्यधात् ॥ ३१३ ॥
ताभ्यां च [7]सर्गपत्राभ्यामिव सा स्पर्शयेत् ततः । स्मरकुञ्जरकुम्भाभौ मृदुस्पर्शावुरोरुहौ ॥ ३१४ ॥
ततः[8] शृङ्गारशिखरिखादिरांगारभारवत् । [9]निर्दम्भशोकदम्भेन पूच्चकार मुनीश्वरः ॥ ३१५ ॥
किं किमित्यूचिषी वक्षोजाग्रात् पाणिं विकृष्य सः । अबाष्पगद्गदाव्यक्तवाचोवाच कथञ्चन ॥ ३१६ ॥
अमूल्यातुल्यवात्सल्यवर्द्धितास्मादृशाङ्गिनाम् । गुरूणां स्मारिता अद्य निजाङ्गस्पर्शतस्त्वया ॥ ३१७ ॥
तया[10] कथमिति प्रश्ने कृते प्राह पुनः प्रभुः । रात्रौ स्वाध्यायकृत्यानन्तरं[11] विश्रामणां प्रभोः ॥ ३१८ ॥
अहं व्यरचयं[12] सर्वकालं[13] सर्वाङ्गसंगिनीम् । कटीं विश्राम्य तत्प्रोथयुगलं च समस्पृशम् ॥ ३१९ ॥—युग्मम् ।
तदद्य स्मृतिमानीतं वृत्त-मार्दवसाम्यतः । यादृक् तव कुचद्वंद्वं तादृक् तदपि चाभवत् ॥ ३२० ॥
श्रुत्वेति सा परावृत्तरसा भग्नाशतानिधिः[14] । दध्यौ विधूतकामान्ध्या[15] किं मे कर्मोदयं ययौ ॥ ३२१ ॥
ग्रावा लोहं कथं वज्रं दुर्भिदोऽयं सिताम्बरः । वह्निटंकादिभिर्भेद्यो ग्रावा लोहश्च वह्निना ॥ ३२२ ॥
कुवलीकोमलफलक्षोदाद्यैर्वज्रमप्यथ । भिद्येतानन्यसामान्यं काठिन्यं किञ्चिदस्य तु ॥ ३२३ ॥
घृतपिण्डसमास्तेऽन्ये[16] वह्निकुण्डसमासु ये । महिलासु विलीयन्ते सृष्टिरेवापरस्य तु[17] ॥ ३२४ ॥
वेधायमश्वकावस्य पुरः कर्मोर्मिकिङ्करौ । कर्म्माप्यस्माद्[18] बिभेतीव तीव्रब्रह्मव्रतस्पृशः ॥ ३२५ ॥
रसे विरसमाधत्त मत्काममपि भग्नवान् । तिरश्चकार मां यस्तु तेन दैवं हि जीयते ॥ ३२६ ॥
ध्यायन्तीति निदद्रौ सा मुनिद्रोहे गताग्रहा । निद्रा हि विश्वदुःखाप्तौ विश्रामादुपकारिणी ॥ ३२७ ॥
प्रगे जागरिताचार्यं पर्यङ्कासनसंस्थितम् । प्रणम्य प्राह नाहंयुरहं त्वद्विकृतौ कृतीन् ॥ ३२८ ॥
वीतरागः पुरा स्मेरस्मरमुख्यारिजित्वरः । आसीत् त्वद्वृत्ततः सत्यमिदं ख्यातिं ययौ किल ॥ ३२९ ॥
तदापृच्छे प्रसाद्याशु पृष्ठे हस्तं प्रदेहि मे । तव शापेन शक्रोऽपि [19]भ्रश्यत्यन्यस्य का कथा ॥ ३३० ॥
अथाह गुरुरज्ञानवागेषा ते वयं पुनः । रोषतोषभरातीता[20] अज्ञाः शापादिगीर्ष्वपि ॥ ३३१ ॥
*इति श्रुत्वा ययौ भूपसमीपं वरवर्णिनी । उवाच तद्गुणव्रातक्षणविद्रुतवैकृता ॥ ३३२ ॥
नाथ ! पाथःपतिं बाहुदण्डाभ्यां स तरत्यलम् । भिनत्ति च महाशैलं शिरसा तरसा रसात् ॥ ३३३ ॥
पदे[21]द्वं(?) वह्निमास्कन्देत् सुप्तं सिंहञ्च बोधयेत् । श्वेतभिक्षुं तव गुरुं य एनं हि विकारयेत् ॥ ३३४ ॥

---

1 A N प्रभोर्यदूचे । 2 A अन्या । 3 'प्रार्थये' इति C टि० । 4 N सुरभि वस्तु । 5 A मर्त्या । 6 N व्यधात् । 7 'सागपत्र' इति C टि० । 8 N नभः । 9 A निर्दंभः । 10 A C 'तथा' । 11 N कृत्यानंतरं । 12 A व्यचरयं । 13 A सर्वं कालं । 14 A °निधेः । 15 A कामांधा । 16 N समास्त्वन्ये । 17 N च । 18 N कर्माप्यस्य । 19 A स्रस्यति°; N नश्यति । 20 A B N °भरामीता । * A आदर्शे नोपलभ्यते श्लोक एषः । 21 N यथेच्छ ।

इत्याकर्ण्याचलापालः[1] प्राप्तरोमाञ्चकञ्चुकः । स्वगुरोर्गुरुसत्त्वेन प्राह नृत्यन्मनोनटः ॥ ३३५ ॥
न्युञ्छने यामि वाक्याय दृग्भ्यां याम्यवतारणे । बलिर्विधीये सौहार्दहृद्याय हृदयाय च ॥ ३३६ ॥
असौ मही धराधारा देशः पुरमिदं मम । भाग्यसौभाग्यभृद् यत्र **बप्पभट्टि**प्रभुस्थितिः ॥ ३३७ ॥
—त्रिभिर्विशेषकम् ।

स्वक्षेत्रभ्रंशिनः[2] कामं कामादिभि[3]र्विमर्शतः[4] । परक्षेत्र[5]गतास्तत्र लालसत्वं[6] हि तत्यजुः ॥ ३३८ ॥
पशवोऽपि गजास्तस्मादहासीत् सर्वथा[7] तु[8] तान् । योऽस्मै ग ज व रे त्याख्या ततः ख्याताऽस्तु मद्गुरोः ॥३३९॥
ततो ग ज व रो ब्र ह्म चा री च बिरुदद्वयम् । तस्याभूद् भूत-सद्भाव-भाविवेत्तुः श्रुतागमात् ॥ ३४० ॥
तथा किं विदधे तत्र त्वया पृष्टेति साऽवदत् । कटाक्षक्षेपवक्षोजतत्करस्पर्शनादिभिः ॥ ३४१ ॥
अजातबोधका चैकं तदा दोधकमब्रुवम् । तत्र प्रज्ञानुमानेन कवित्वं हि प्रसर्पति ॥ ३४२ ॥

तथा हि—

**गयवरकेरइ सत्थरइ पायपसारिउसुत्त ।**
**निचोरी गुजरात जिम्व[9] नाह न केणइ भुत्त ॥ ३४३ ॥**

एवं नृपादिभिः सत्यगुणकीर्तनतः स्तुतः । ब्रह्मप्रभावप्रागल्भ्याद् **बप्पभट्टिः** प्रभुर्जयी ॥ ३४४ ॥
§ १२. प्राकारबाह्यमन्येद्यू राजा राजाध्वना चरन् । पश्चादोकसि गेहस्येक्षांचक्रे हालिकप्रियाम् ॥ ३४५ ॥
पञ्चांगुलबृहत्पत्रसंवृतस्तनविस्तराम् । वृणुभ्रवृतिरन्ध्रेणार्पयित्वा प्रियहस्तयोः ॥ ३४६ ॥
लवित्रं विस्मृतं पश्चात् प्रयान्तीं गृहमन्तरा । उरोजबिम्बाकाराणि बहिःपत्राणि वीक्ष्य च ॥ ३४७ ॥
गाथार्द्धं प्रोचिवान् कौतूहलाकृष्टमनःक्रमः । दृष्टिमेरण्ड उद्दण्डस्कन्धे न्यस्यन् चलाचलाम् ॥ ३४८ ॥
—त्रिभिर्विशेषकम् ।

तच्च—**वइविवरनिग्गयदलो एरंडो साहइ व तरुणाण ।**
तत्प्रातः स्वगुरोरग्रेऽवदत्संसदि संस्थितः ॥ ३४९ ॥
उत्तरार्द्धमवादीच्च तस्यानुपदमेव सः ।
**इत्थघरे हलियवहू इद्दहमित्तत्थणी वसई** ॥ ३५० ॥

इति श्रुत्वा[10] यथादृष्टपूरकं प्रभुमस्तवीत् । सिद्धसारस्वतः कोऽपि कलौ नो मद्गुरुं[11] विना ॥ ३५१ ॥
सायमैक्षत सोऽन्येद्युरेकां प्रोषितभर्तृकाम् । यान्तीं वासालये वक्रग्रीवां दीपकरां तदा ॥ ३५२ ॥
उत्तरार्द्धं विधायात्र गाथायाः सुहृदः पुरः । प्रातराह ततोऽसौ च प्राग्दलं प्राह सत्वरम् ॥ ३५३ ॥

तथा हि—

**पियसंभरणपलुट्टंतअंसुधारानिवायभीयाए ।**
**दिज्जइ वंकग्गीवाइ दीवओ पहियजायाए ॥ ३५४ ॥**

इत्यनेकप्रबन्धाढ्यकाव्यगोष्ठीगरीयसा । कालः सुखेन याति स्म गुरु-राज्ञोः[12] कियानपि ॥ ३५५ ॥
§ १३. श्रीधर्मभूधनोऽन्येद्युर्दूतं प्रेषितवानथ । श्रीमद्**आमस्य** वामस्य दुष्कृतानां सुधीनिधिः[13] ॥ ३५६ ॥
ततः स भूपमानम्य सभायामुचितासनः । सम्यग् व्यजिज्ञपत् सभ्यैर्विस्मितैर्वीक्षिताननः ॥ ३५७ ॥

---

1 N °र्ध्यावनीपालः । 2 N °भ्रंशिनं । 3 N कामादितिवि° । 4 A विमर्शितः । 5 A °क्षेत्रे । 6 A साभसत्वे । 7 C सर्वथा । 8 N नु । 9 A जिमु । 10 A दृष्ट्वा । 11 N नामगुरुं । 12 N गुरो राज्ञः । 13 A C सुधीनिधिं ।

मम [1]नाथः प्रभो ! तावकीनच्छेकत्वभङ्गिभिः । सन्तुष्टः स्पष्टमाह स सविस्मयमनःक्रमः ॥ ३५८ ॥
भवत्कोविदकोटीररत्नश्री**बप्पभट्टि**ना । सत्यानृतकवित्वस्य व्याख्यानाच्छलिता वयम् ॥ ३५९ ॥
यदायातोऽपि गेहान्न आतिथ्यार्होऽपि नार्हितः । **आमो**[2] रामो धिया भूपोऽनुतापातिशयः स नः ॥ ३६० ॥
हृल्लेखाधायि वैदग्ध्यं साहसं वाक्पथातिगम् । वयं चमत्कृतेर्हृष्टास्तद्ददाम किमप्यहो ॥ ३६१ ॥
राज्ये नः सौगतो विद्वान् नाम्ना **वर्द्धनकुञ्जरः** । महावादी दृढप्रज्ञो [3]जितवादिशतोन्नतः ॥ ३६२ ॥
देशसन्धौ समागत्य वादमुद्रां करिष्यति । सभ्यैः सह वयं तत्र समेष्यामः कुतूहलान् ॥ ३६३ ॥–युग्मम् ।
यः कोऽपि भवतां वादकोविदः सोऽपि तत्र च[4] । आयातु सह विद्वद्भिर्घनाघन इवोन्नतः ॥ ३६४ ॥
तद्वाक्संग्राम एवास्तु यस्य वादी विजीयते । जित एवापरेणासौ किं हतैर्बहुशस्त्रिभिः ॥ ३६५ ॥
भुजे [5]वाचि च शौर्यं ते वादिनो [6]ऽप्यपराजिताः । यद्यसौ सौगताचार्यो महावादी विजीयते ॥ ३६६ ॥
तस्मिन् जिते जिता एवायासबाह्यं त्वया वयम् । घृतपिण्ड इव स्त्यानम् उदके हिमनिश्चयः ॥ ३६७ ॥
इति श्रुत्वाऽऽम**भूपाल** ऊचे संदेशहारकम् । श्री**धर्म्मो**ऽनुचितं ब्रूयात् किं कदापि नराधिपः ॥ ३६८ ॥
परं किञ्चिदुपालभ्यमस्ति नार्हं सतां हि यत् । अस्मिन्नवसरे वाच्यं प्रस्तावो दुर्लभो ध्रुवम् ॥ ३६९ ॥
विदुषः सुहृदस्तस्याकारणव्याजतो ध्रुवम् । आयाम मिलितुं तत्र स्फुटं [7]चास्माभिरौच्यत ॥ ३७० ॥
तत्र 'बी ज उ रा–दो रा' वाक्याभ्यां बंधुरीतितः[8] । द्वितीयो राडिव द्वौ च राजानाविति संस्कृतात्[9] ॥३७१॥
दर्शिते चाढकीपत्रे व्याख्याते[10] **बप्पभट्टि**ना । इदं 'तू अ रि प त्तं' ते अरिपत्राख्यसंस्कृते ॥ ३७२ ॥
त्रिराख्यातेऽपि न ज्ञातं भिया[11] वा न स्फुटीकृतम् । न [12]विघ्नस्तत् तृतीयेऽपि वचसि प्रकटे नयत् ॥ ३७३ ॥
एतत्प्रकाशितं यस्मादज्ञानात् पुंनपुंसकम् । [13]ज्ञापितस्त्वत्प्रभुस्ते च विशिष्टा[14] विदिताः किल ॥ ३७४ ॥
तथापि चेज्जिगीषाऽस्ति मयि तु त्वदधीशितुः । श्रद्धां ते पूरयिष्यामि भवत्वेतद् भवद्वचः ॥ ३७५ ॥
परं विजयिनो राज्ञः पराभूतक्षमाभुजा । सप्ताङ्गमपि राज्यं स्वमर्पणीयमदर्पिना[15] ॥ ३७६ ॥
ईदृशं भवतः स्वामी [16]यदूरीकुरुते तदा । एवमस्त्वन्यथा[17] किं नः प्रयासेन फलं विना ॥ ३७७ ॥
इत्याकर्ण्यावदद् दूत **आमे**त्याख्या त्वया निजा । सत्या कृता विशांनाथ ! मतेरपरिपाकतः ॥ ३७८ ॥
जडोऽपि को न वेत्तीति कथिते किं पुनःपुनः । अपरोऽपि गृहायातं नृपं शत्रुमपि ध्रुवम् ॥ ३७९ ॥
योजयेदातिथेये न भवांस्तु प्रकटीकृतः । सत्कारायापि नाम स्वं सत्यापयति चेत्क्रिया ॥ ३८० ॥
पलायमानो वाह्यानां हस्त्यारूढो[18] विनश्यति । [19]तदस्माकं प्रभोर्नामवैतथ्यं जायते स्फुटम् ॥ ३८१ ॥
–त्रिभिर्विशेषकम् ।
निग्रहे[20]ऽपि स एवास्यादोषो राज्ञस्ततो नृप ! । विमृश्यकारिता तत्र सैवास्यैकाऽपराध्यति ॥ ३८२ ॥
क्षमाक्लीबस्य तस्य त्वं जितेऽस्मद्वादिना ततः । [21]पुमानप्यपमानस्य पात्रं सर्वस्वनाशतः ॥ ३८३ ॥
ब्राह्मीकृतप्रसादस्य नास्त्येवास्य पराजयः । वादिनो विमृशातस्त्वमविमर्शो हि नाशकृत् ॥ ३८४ ॥
श्रुत्वेति **बप्पभट्ट्या**स्ये सहास्ये नृपवीक्षिते । मुनीशेन सदानन्दनिर्भरं जगदे वचः ॥ ३८५ ॥
को हि **धर्म्म**स्य नोत्कण्ठी पूर्वं परिचितस्य च[22] । यदि रागिग्रहो न स्यादस्य श्रेयोबहिष्कृतः ॥ ३८६ ॥
अनित्यैकग्रहे रक्ते भिक्षौ कृतजयाग्रहः । क्षूणं[23] तदेव चेद्रागे जयो मोक्षस्ततः कुतः ॥ ३८७ ॥

---

1 A N नाथ । 2 C आमोरामो । 3 N जिनवादि° । 4 N वा । 5 'सज्जो वाग्विवशोऽर्यैते' इति भ्रष्टपाठः N पुस्तके । 6 N ऽथ । 7 N वा° । 8 A °रीरितः । 9 N °तान् । 10 N व्याख्यातं । 11 N तया । 12 N नविघ्नस्तु । 13 C स्थापित° । 14 A विधिष्टो । 15 N °दर्प्पिता । 16 N यदोरी° । 17 A पवनस्त्व°; N पवनास्त्वत्पथा । 18 C N हस्तारूढो । 19 N हढमस्सत् । 20 N विग्रहे । 21 N पुमानथाप° । 22 N वा । 23 A N क्षणं ।

वैराग्य एव मुक्तिः स्यात् सर्वदर्शनसंमतम् । कार्य्या नात्राधृतिर्भिक्षुर्जेयो मे तत्कृतोन्नतिः ॥ ३८८ ॥
**धर्म्मराज**स्य सम्यक् कुविचारादिदमादृतम् । मदाश्रितो यतो वादस्तस्यैवोपकरिष्यति ॥ ३८९ ॥
कुत्राप्यवसरे तस्मादस्तु वाक्पूरतो[1] रणः । संमान्य प्रेषय प्रेष्ठपुमांसं[2] **धर्म्म**भूपतेः ॥ ३९० ॥
**आमराजे**न कृत्वैतत् प्रहितः समयं[3] भुवम् । व्यवस्थाप्य जगामासौ प्रोचे तत्स्वामिनः पुरः ॥ ३९१ ॥
§ १४. वाग्विग्रहाय वादीन्द्रं राजा[4] **वर्द्धनकुञ्जर**म् । **धर्मः**[5] संवाहयामास गीष्पतिं वासवो यथा ॥३९२॥
चतुर्दिगन्तविश्रान्तकीर्त्तयः सुहृदस्ततः । आहूयाभ्यर्च्य सभ्यत्वे वादेऽस्मिन् विहिता मुदा ॥ ३९३ ॥
**परमार**महावंशसम्भूतः क्षत्रियामणीः । तस्य **वाक्पतिराजो**ऽस्ति विद्वान् निरुपमप्रभः ॥ ३९४ ॥
पूर्वं परिचितश्चासौ **बप्पभट्टि**प्रभोस्ततः । तस्य वाग्मर्मविज्ञानहेतौ संवाहितो मुदा ॥ ३९५ ॥
व्यवस्थितदिने प्राप प्रदेशं देशसन्धिगम् । [6]सभाधीशमहासभ्यैः समं **वर्द्धनकुञ्जरः** ॥ ३९६ ॥
**कन्यकुब्जा**दपि श्री**मानामः** कामं[7] सुधीनिधिः । श्री**बप्पभट्टि**ना विद्वद्वृन्दसन्निधिना समम्[8] ॥३९७॥
भुवं तामेव संप्रापातपत्राच्छादिताम्बरः । आवासान् स्वःपुराभासान्[9] दत्वावस्थितवानथ ॥ ३९८ ॥—युग्मम् ।
आजन्म सर्वदा दृष्टशस्त्राशस्त्रिश्लथादरः । अदृष्टपूर्ववाग्युद्धप्रेक्षार्थं सकुतूहलः ॥ ३९९ ॥
अहंपूर्विकया सिद्ध-विद्याधरसुरव्रजः । समेतश्चाप्सरोवर्गैः स्वर्गवद्गगनाङ्गणे ॥ ४०० ॥
कौतुकाकृष्टचेतोभी राजसभ्यैर्बहुश्रुतैः । ईयतुः सङ्गतौ तत्र तौ वादि-प्रतिवादिनौ ॥ ४०१ ॥
उपविष्टेषु सभ्येषु श्रुत्यधीनमनस्सु च । स्तिमितात्र[10] सभा साऽभूदालेख्यलिखिता किल ॥ ४०२ ॥
निजं निजं नराधीशमाशिषाभिर्ननन्दतुः । स्वस्वागमाविरोधेन सभ्यानुमतिपूर्वकम् ॥ ४०३ ॥
ततः श्रीसौगताचार्य्यः पूर्वं **वर्द्धनकुञ्जरः** । आशीर्वादमुदाजह्रे व्यथकं द्वेपिपर्षदाम्[11] ॥ ४०४ ॥

तथा हि—

**शर्म्मणे सौगतो धर्म्मः पश्य वाचंयमेन यः ।**
**आदृतः साधयन् विश्वं क्षणक्षणविनश्वरम् ॥ ४०५ ॥**

अथ श्वेतांबराचार्य्यो **बप्पभट्टिः** सुधीपतिः । अभ्यधत्ताशिषं स्वीयां भूपालाय यथा तथा ॥ ४०६ ॥

**अर्हन् शर्म्मोन्नतिं देयान्नित्यानन्दपदस्थितः[12] ।**
**यद्वाचा विजिता मिथ्यावादा एकान्तमानिनः ॥ ४०७ ॥**

उभयोराशिषः श्लोकौ निरूचुः पार्षदास्तदा । असौ धर्म्मो गतः सम्यग् यमिता गीश्च वादिभिः ॥ ४०८॥
क्षणभङ्गि जगद्योक्तं भङ्गस्यैवानया गिरा । सौगतस्यानुमीयेत वाग्देवी सत्यवादिनी ॥ ४०९ ॥
नित्यानन्दपदश्रीदो देव एकान्तविग्रही । मिथ्यावादविजेत्री गीः श्वेतभिक्षोस्ततो जयः ॥ ४१० ॥
इति निश्चित्य ते तस्थुर्यावन्मौने सभासदः[13] । तावत् कस्तूरिकां हस्ते कृत्वा बौद्धोऽब्रवीदिदम् ॥ ४११ ॥
'कसु तूरी उपगरइ' प्रोक्ते प्राकृत[14] ऊचिवान् । आचार्य उपकर्त्रीयं रजकस्येति[15] विद्यताम् ॥ ४१२ ॥
इति तत्प्रश्नसङ्केतादुत्तरेणाधरीकृते । तावद् रक्ताम्बरः सर्वानुमतः पक्षमब्रवीत् ॥ ४१३ ॥
सर्वानुवादेनानूद्य ततस्तत्पक्षदूषकान् । उदाजहार व्याहारान् प्रामाणिकपतिर्मुनिः ॥ ४१४ ॥
उत्तरादुत्तरं चैवमुक्ति-प्रत्युक्तिरीतितः । षट् व्यतीयुस्तदा मासास्तयोर्विवदमानयोः ॥ ४१५ ॥
श्री**मानामनृपो**ऽन्येद्युरूचे सूरिं कदा प्रभो ! । व्याघातो[16] राजकार्याणां वादः संपूरयिष्यते ॥ ४१६ ॥

---

1 A वाक्यरतो । 2 A B प्रष्टपुंमांसं । 3 N समयौ । 4 N वादींद्रराजवर्द्धन° । 5 N धर्मं । 6 N समाधीश° । 7 N काम° । 8 C सभम् । 9 N स्वःपुरापटे । 10 A °ता तत्र । 11 B C पर्षदा । 12 A °स्थितं । 13 A सदं सदः । 14 A नास्ति 'प्राकृत' । 15 A रजस्येति । 16 B व्यापातो ।

तत आह तदाचार्यो वाग्विनोदसुखाय वः । इयत्कालं हि नश्चेतस्यासीदिति कृतिप्रभो ! ॥ ४१७ ॥
बाधाविधायी[1] यद्येष[2] भवतस्तद् विलोकय । प्रभाते निग्रहीष्यामि विद्वन्मन्यं हि भिक्षुकम् ॥ ४१८ ॥
प्राग्दत्तं गुरुभिर्मन्त्रं परावर्त्तयतः[3] सतः । मध्यरात्रे[4] गिरां देवी स्वर्गङ्गावेणिमध्यतः ॥ ४१९ ॥
स्नान्ती तादृशरूपा च प्रादुरासीद् रहस्तदा । अहो मन्त्रस्य माहात्म्यं यद्देव्यपि विचेतना ॥ ४२० ॥–युग्मम् ।
अनावृतशरीरां च सकृदीषद् ददर्श ताम् । सूरिः सूर्य्यादिवास्यं च परावर्तयति स्म सः ॥ ४२१ ॥
स्वं रूपं विस्मरन्ती च प्राह वत्स ! कथं मुखम् । विवर्त्तसे भवन्मन्त्रजापात् तुष्टाहमागता ॥ ४२२ ॥
वरं वृण्विति तत्रोक्तो **बप्पभट्टि**रुवाच च । मातर् ! विसदृशं रूपं कथं वीक्षे तवेदृशम् ॥ ४२३ ॥
स्वां तनुं पश्य निर्वस्त्रामित्युक्ते स्वं ददर्श सा । अहो निबिडमेतस्य ब्रह्मव्रतमिति स्फुटम् ॥ ४२४ ॥
वीक्ष्य मामीदृशीं यन्न चेतोऽस्य विकृतिं ययौ । ध्यायन्तीति दृढं तोषात् तत्पुरः समुपस्थिता ॥–युग्मम् ।
वरेऽपि निस्पृहे त्वत्र दृढं चित्रादुवाच च । गत्यागत्योर्मम स्वेच्छा त्वदीया निर्वृतो भव ॥ ४२६ ॥
ततः सूरिर्गिरां देवीं तुष्टुवे सुष्टुवाग्भरैः । वृत्तैर्'ध रि ते त्या'द्यै[5]श्चतुर्दशभिरद्भुतैः ॥ ४२७ ॥
इमां स्तुतिं सुवर्णाढ्यां कर्णकुण्डलरूपिणीम् । मानयन्त्यतिसन्तोषाद् भारती[6] वाचमूचुषी[7] ॥ ४२८ ॥
वत्स ! किं पृच्छसीत्युक्ते सूरिरूचे विवाद्यसौ । सत्यं प्रज्ञाबलाज्जल्पेद् , विज्ञानमथ किञ्चन ? ॥ ४२९ ॥
देवी प्राहामुना सप्तभवा[8]नाराधिताऽस्म्यहम् । प्रदत्ता गुटिकाक्षय्यवचनाऽस्य मया ततः ॥ ४३० ॥
तत्प्रभावाद् वचो नास्य हीयते यतिनायक ! । सोपालम्भमिवाहासौ सूरिः श्रीश्रुतदेवताम् ॥ ४३१ ॥
पुष्णासि प्रत्यनीकं किं शासनस्य जिनेशितुः । सम्यग्दृष्टिः पुराम्नायात् शुश्रुवे भवती ननु ॥ ४३२ ॥
सरस्वती पुनः प्राह नाहं[9] जैनविरोधिनी । उपायं तेऽर्पयिष्यामि यथासौ जीयते बुधः ॥ ४३३ ॥
सर्वेऽपि मुखशौचं ते विधाप्याः[10]पार्षदादयः । ततोऽस्य कार्य्यमाणस्य गण्डूषं मुञ्चतो मुखात् ॥ ४३४ ॥
भ्रष्टा चेद् गुटिकाऽवश्यं युष्माभिर्जितमेव तत् । चतुर्दशं पुनर्वृत्तं न प्रकाश्यं कदापि हि ॥ ४३५ ॥
यतस्तत्र श्रुते साक्षाद् भवितव्यं मया ध्रुवम् । कियतां हि प्रसीदामि निष्पुण्यानां मुनीश्वर ! ॥ ४३६ ॥
इत्युक्त्वाऽन्तर्दधे देवी सूरिश्छन्नं जगौ पुरः । **विश्ववाक्पतिराज**स्य यदादिष्टं गिरा तदा ॥ ४३७ ॥
इत्यङ्गीकृत्य तेनाथ करकं नीरपूरितम् । समानाय्य सभा सर्वा वक्त्रशुद्धिं व्यधाप्यत[11] ॥ ४३८ ॥
तत्कुर्वतोऽथ तस्यापि गुटिका पतिता मुखात् । भिक्षोरास्यजलैर्नुन्ना श्रीरिवापुण्यकर्मणः ॥ ४३९ ॥
अविश्रान्तमिथोवादाध्वन्यऽध्वन्यतया ततः । श्रान्ता विश्राममिच्छन्ती मूकस्येवास्य गीः स्थिता ॥४४०॥
सदस्याश्च वचः प्रोचुर्गुटिकैव वचःक्षमा । अनेडमूक एवायं भिक्षुरन्वर्थनामभूः ॥ ४४१ ॥
जिग्ये श्री**बप्पभट्टि**स्तं वा दि कु ञ्ज र के स री । बिरुदं जुघुषे राज्ञा जज्ञे जयजयारवः ॥ ४४२ ॥
**धर्म**राज्यं गृहीतुं च स्वबलात् सार्द्धवैभवम् । **तदाम** उपचक्राम स्वं पणं कस्त्यजेज्जयी ॥ ४४३ ॥
उवाचाथ गुरुस्तस्य यदुक्तं च पुरः पुरा । यद्राज्येन पणं चक्रे **धर्म्मभूपो**ऽधिकृत्य नः ॥ ४४४ ॥
तत्तस्यैवोपकाराय[12] भविष्यति कदाचन । तदस्य वचसः कालो नृपनाथ ! समाययौ ॥ ४४५ ॥
इयं प्रमाणशास्त्राणां मुद्रा यल्लिखिते ततः । सम्बन्धे निग्रहो नैव यत्पराजय एव सः ॥ ४४६ ॥
अस्य राज्यं तदस्यैव सन्तिष्ठतु यथास्थितम् । अनित्यभवहेतोः कः शास्त्रमुद्रां विलुम्पति ॥ ४४७ ॥
गुरुभक्त्याभिरामोऽय**मामो**ऽनिच्छुर्बलादपि । **धर्मं** धर्मस्थितो राज्यमसुमेने प्रसादतः ॥ ४४८ ॥
तत आश्लिष्य बौद्धं तं सूरि**र्वर्द्धनकुञ्जरम्** । तदासन्ने **गोपगिरौ** श्रीवीरभवनेऽनयत् ॥ ४४९ ॥

---

1 N व्यधायि । 2 N यद्येषा । 3 N °वर्तयतस्ततः । 4 A मध्ये रात्रेः । 5 A वृत्तैरधिष्ठितेर्द्यै° । 6 A भारतीं । 7 A °मूचुषीं । 8 N सप्तवारा° । 9 N माहं । 10 N विधाय धीपा° । 11 N व्यधीयत । 12 N °वाधिकाराय ।

श्रीमहावीरबिम्बं स विलोक्य हृदि हर्षितः । 'शान्तो वेष' इति स्तोत्रं चक्रे प्रमुदितस्तदा ॥ ४५० ॥
एवं स्तुत्वा जिनं स्वात्मनिन्दके सौगतप्रभौ । सूरिर्जैनरहस्यानि तस्य प्रादर्शयत् पुरः ॥ ४५१ ॥
मिथ्यात्वगरलं हृत्वा पीयूषामलगीर्भरैः । परीक्षापूर्वमस्थापि तच्चित्ते धर्म आर्हतः ॥ ४५२ ॥
निद्राविद्राणचैतन्ये[1] निशायामन्यदा गुरौ । प्रतिप्रहरमाह स्म ताथागतयतीश्वरः ॥ ४५३ ॥
चतुरक्षरनिष्पन्नं समस्यानां चतुष्टयम् । स चोत्स्वप्नायितेनेवापूरयत् सूरिपुङ्गवः ॥ ४५४ ॥
मन्दाक्रान्तापदैर्मन्दाक्रान्तिक्षुण्णान्यतीर्थिकः । अपूरमपरैः सर्वप्रयत्नेनापि वाग्मिभिः ॥ ४५५ ॥-युग्मम् ।
'एको गोत्रे' [ १ ] 'सर्वस्य द्वे' [ २ ] 'स्त्रीपुंवच्च' [ ३ ] 'वृद्धो यूना' [ ४ ] समस्याः—

**'एको गोत्रे' स भवति पुमान् यः कुटुम्बं बिभर्ति**
**'सर्वस्य द्वे' सुगति-कुगती पूर्वजन्मानुबद्धे ।**
**'स्त्री पुंवच्च' प्रभवति यदा तद्धि[2] गेहं विनष्टम्**
**'वृद्धो यूना' सह परिचयात्त्यज्यते[3] कामिनीभिः ॥ ४५६ ॥**

सम्यक्त्वं ग्राहितः सोऽथ द्वादशव्रतशोभितम् । आश्लेषपूर्वमापृच्छ्य स्वं स्थानं प्रययौ ततः ॥ ४५७ ॥
पूर्ववैरपरीहारात् संगतौ सोदराविव । अन्योऽन्यप्राभृतैस्तुष्टौ पुरं स्वं स्वं गतौ नृपौ ॥ ४५८ ॥
§ १५. अन्यदा रहसि प्राह **धर्म**भूपं स सौगतः । विजिग्ये **बप्पभट्टि**र्मा न तत् क्षूणं मनस्यपि ॥ ४५९ ॥
यतो वाग्देवता तस्य यथोदितविधायिनी । स्वयं वदति तद्देहे स्वप्ने जाग्रति [4]चास्थिता ॥ ४६० ॥
परं **वाक्पतिराजे**न त्वद्राज्यपरिभोगिणा । अस्मास्वपकृतं भूरि मुखशौचविधापनात् ॥ ४६१ ॥
इति श्रुत्वापि बौद्धे स छलवादात् [5]श्लथादरः । स्नेहं **वाक्पतिराजे**[6] च गुणगृह्ये[7] मुमोच न ॥४६२॥
**यशोवर्म**नृपो **धर्म**मन्यदा चाभ्यर्पेणयत् । तस्माद् द्विगुणतश्रस्तं[8] भूपं युद्धेऽवधीद् बली ॥ ४६३ ॥
तदा **वाक्पतिराज**श्च बंदे तेन निवेशितः । काव्यं गौडवधं कृत्वा तस्माच्च स्वममोचयत् ॥ ४६४ ॥
**कन्यकुब्जे** समागत्य संगतो **बप्पभट्टि**ना । स राजसंसदं नीतस्तुष्टुवे चेति भूपतिम् ॥ ४६५ ॥

तथा हि—

**कूर्मः पादोऽत्र[9] यष्टिर्भुजगतनुलता भाजनं भूतधात्री**
**तैलोत्पूरः समुद्रः कनकगिरिरयं वृत्तवर्त्तिप्ररोहः ।**
**अर्चिश्चण्डांशुरोचिर्गगनमलिनिमा कज्जलं दह्यमाना**
**शत्रुश्रेणी पतंगो ज्वलतु नरपते ! त्वत्प्रतापप्रदीपः ॥ ४६६ ॥**
**चटचटिति चर्म्मणि च्छमिति[10] चोच्छलिच्छोणिते[11]**
**धगद्धगिति मेदसि स्फुटरवोऽस्थिषु [12]ष्वाकृतिः ।**
**पुनातु भवतो हरेरमरवैरिनाथोरसि**
**क्वणत्करजपञ्जरक्रकचकाषजन्मानलः ॥ ४६७ ॥**
**पृथुरसि गुणैः कीर्त्या रामो नलो भरतो भवान्**
**महति[13] समरे शत्रुघ्नस्त्वं सदैव युधिष्ठिरः ।**

---

1 A °चैतन्यैः । 2 A तस्य । 3 A मुच्यते । 4 N वा । 5 A °वादाश्लथादरः । 6 N °राजेन । 7 N गुणग्राह्ये । 8 N तस्माद्विगुणितं दस्तं । 9 N पादौ च । 10 A च्छमच्छमिति । 11 N चोच्छलिते शोणिते । 12 N स्फुटरवास्थिष्वाकृतिः । 13 A महसि ।

**इति सुचरितैः ख्यातिं बिभ्रच्चिरन्तनभूभृतां**
**कथमसि न मान्धाता [1]देवस्त्रिलोकविजय्यपि ॥ ४६८ ॥**

सन्मानातिशयो राज्ञा विदधे तस्य भूभृतः[2] । गङ्गां गेहागतां को हि पूजयेदलसोऽपि न ॥ ४६९ ॥
मन्यते कृतकृत्यं स्वं स्वर्गनाथोऽपि वाक्पतिम् । प्राप्य **वाक्पतिराजं** तु नाधिकोऽद्य किमस्म्यतः ॥ ४७० ॥
त्यागाद् **धर्मस्य** माकार्षीर्मनस्यनुशयं सखे ! । यद्गेहागतमत्पूजानाधानात् सोऽत्रमस्थितिः ॥ ४७१ ॥
तवाधीनमिदं राज्यं विचिन्त्य[3] सुखमास्व तत् । श्री**बप्पभट्टे**र्मम च तृतीयस्त्वं महामते ! ॥ ४७२ ॥
इत्या**मराज**व्याहारामृतसारपरिप्लुतः । गङ्गोदक इव स्नातः प्रीतिपावित्र्यमाप सः ॥ ४७३ ॥
सहैवोत्थाय तत्रासौ नृपमित्रेण सूरिणा । उपाश्रयमनुप्राप्यातिष्ठत् परमया मुदा ॥ ४७४ ॥
'गौडवधो'[4] 'महुमहविजय'श्चेति तेन च । कृता **वाक्पतिराजे**न द्विशाखी कवितानिधिः[5] ॥ ४७५ ॥
बौद्धकारिततद्दुपापोपके **धर्मभूपतौ** । सर्वत्र गुणिनः पूज्या गुरुरित्याह तत्पुरः ॥ ४७६ ॥
वृत्तौ कृतं हैमटंकलक्षं तद्द्विगुणीकृतम् । नृपेणासौ महासौख्यात् कालं गमयति स्म सः ॥४७७॥—युग्मम् ।

§ १६. सभायामन्यदा राजा सुखासीनं गुरुं प्रति । प्राह न त्वत्समो विद्वान् स्वर्गेऽपि किमु भूतले ॥४७८॥
गुरुराह पुराऽभूवन् पूर्वं ते जैनशासने । श्रुतज्ञानमहाम्भोधेर्येत्प्रज्ञा पारदृश्वरी ॥ ४७९ ॥
शतं सहस्रं लक्षं वा पदानामेकतः पदात् । [6]अधिगच्छन्ति विद्वांसोऽभूवन् केऽप्य[7]धिका अपि ॥४८०॥
ऐदंयुगीनकालेऽपि सन्ति प्रज्ञाबलाद्भुताः । येषामहं न चाप्नोमि पादरेणुतुलामपि ॥ ४८१ ॥
अस्मदीयगुरोः शिष्यौ **खेटकाधारमंडले** । विद्येते **नन्नसूरिः** श्री**गोविंदसूरि**रित्यपि ॥ ४८२ ॥
यत्पुरो बठरत्वेन तत्र स्थितिमनिच्छतः । शृङ्गाराय भवत्सख्यं विदेशावस्थितेर्मम ॥ ४८३ ॥
इति वाचा चमत्कारं धारयन्नब्रवीन्नृपः । भवद्वचः[8]प्रतीतोऽपि प्रेक्षिष्ये कौतुकं हि तत् ॥ ४८४ ॥
ततो वेषपरावर्त्तप्राप्तो **गूर्जरमंडले** । पुरे **हस्तिजये** जैनमन्दिरस्य समीपतः ॥ ४८५ ॥
उपाश्रयस्थितं भव्यकदम्बकनिषेवितम् । राजानमिव सच्छत्रं चामरप्रक्रियान्वितम् ॥ ४८६ ॥
सिंहासनस्थितं श्रीम**न्नन्नसूरिं** समैक्षत । उत्तानहस्तविस्तारसंज्ञयाह किमप्यथ ॥ ४८७ ॥
एतद्विलोक्याचार्योऽपि मध्यमातर्जनीद्वयम् । पुरस्तस्य वितस्तार शृङ्गाकारेण तत्र च ॥ ४८८ ॥
इत्युत्थाय गते तत्र जनैः पृष्टमिदं किमु । ततः प्रापञ्चयत् सूरिः कोऽपि विद्वानसौ पुमान् ॥ ४८९ ॥
पृच्छति स्म यतीनां किं राज्यलीला ततो[9] मया । इत्युत्तरं ददौ शृङ्गे भवतो भूपतेः किमु ॥ ४९० ॥
निविष्टमन्यदा चैत्ये शास्त्रं वात्स्यायनाभिधम् । व्याख्यातं प्रेक्ष्य तं भूपो नमस्कृत्य जिनं ययौ ॥ ४९१ ॥
ननाम न गुरुं कामशास्त्रव्याख्यानतः स च । विद्वानेष न चारित्री गुरुरित्थं विकल्पितः[10] ॥ ४९२ ॥
परिज्ञातेऽथ तत्तत्त्वे खेदं दध्रे स कोविदः । धिग्वैदग्ध्यं हि नो निर्यदपकीर्तिकलङ्कितम् ॥ ४९३ ॥
श्री**गोविन्दः** शशासैनं खिद्यसे किं वचः शृणु । **आमभूपति**रेवायं गुप्तो नापर ईदृशः ॥ ४९४ ॥
ततः किंचिद्धर्मशास्त्रं विधायातिरसोज्ज्वलम् । पार्श्वान्नटस्य कस्यापि **बप्पभट्टि**प्रभोः पुरः ॥ ४९५ ॥
प्रेषयैतद् यथातथ्यं चाभिनायति तत्पुरः । तत्रापररसावेशं सोऽनुभूय [11]प्रभोक्षते (?) ॥ ४९६ ॥
तथेति प्रतिपद्याथ कृत्वा तत्र नटोत्तमान् । प्रैषयच्छिक्षितान् सम्यक् [12]प्रायादा**मपुरं** च सः ॥ ४९७ ॥
अमिलद् **बप्पभट्टे**श्च तेन राज्ञोऽथ दर्शितः । आदितीर्थकृतो वृत्तमभिनिन्ये स नूतनम् ॥ ४९८ ॥

---

1 A देवत्रि° । 2 A भूभृता । 3 B N विचिन्त्य । 4 N गौडवन्धो मद्रमहीविजय° । 5 A कथितानिधिः । 6 N अवगच्छंति । 7 N केथाधि° । 8 B भवद्वचं प्रतीतेऽपि । 9 N यतो । 10 A B विकल्पतः । 11 A प्रभोः पुरः; B प्रभोक्षाते । 12 B प्रापदाम° ।

विहितं सन्धिबन्धेन रसाय **नन्नसूरिणा** । तत्कथां प्रथयन् नृत्यन्नाह प्राकृतरूपकम् ॥ ४९९ ॥–युग्मम् ।

**कञ्चणहु सुवियहु गिरि वेयहु वेहावइ ।**

श्री**बप्पभट्टि**राहेदमर्द्धोनं रूपकद्वयम् । नर्मधर्म्मेण[1] तथापि नटो व्यावृत्य तत्पुरे ॥ ५०० ॥
आगत्य तथ्यमाचख्यौ **नन्नाचार्य**कवेः पुरः । नैतद्रम्यमिदं कार्यमिति संचिन्त्य हर्षतः ॥ ५०१ ॥
ततो रूपं परावृत्य स सिद्धगुटिकादिभिः । प्रतस्थे **कन्यकुब्जे** च सह **गोविन्दसूरिणा** ॥ ५०२ ॥
प्राप्तोऽथ मिलितो **बप्पभट्टेः** पट्टेश्वरस्य च । राजपर्षदि नृत्यंश्च रसं वीरं वितेनिवान् ॥ ५०३ ॥
तद्ध्यानैकमना [2]भूपश्चकर्ष क्षुरिकां निजाम् । 'मारि मारी'ति शब्देन नदन् सिंह इव क्रुधा ॥ ५०४ ॥
अङ्गरक्षैस्ततो नात्यमिदमित्थं निवारितः । चैतन्ये [3]सङ्गते पश्चात् प्रतिबुद्धो गुरूक्तिभिः ॥ ५०५ ॥
आह **गोविन्दसूरि**स्तद्भूप ! युक्तं कथं कृतम् । केनापि न परं शान्तरसः सर्वोऽनुभूयते ॥ ५०६ ॥
ततो वात्स्यायने व्याख्यायमाने **नन्नसूरिणा** । सविकल्पो मनीषी त्वमन्यः को न विकल्पयेत् ॥५०७॥
लज्जितेन[4] ततो राज्ञा क्षमितौ कोविदाधिपौ । सत्यं तद्वचनं बाढं यदूचे सुहृदा मम ॥ ५०८ ॥
संयमेन [5]सुशीलेन वृत्त्या विद्वत्तया तथा । तद्गुरुभ्रातरौ पूज्यौ भ्रान्तिर्मे क्षम्यतामिति ॥ ५०९ ॥
इत्याकर्ण्य ततः प्रोचे श्रीम**द्गोविन्दसूरि**णा । तपो न नः कलंक्येत त्वयि वृत्तानि पश्यति ॥ ५१० ॥

यतः–

**भवन्तु ते दोषविदः शिवाय विशेषतस्तद्वचनैकनिष्ठाः[6] ।**
**येषां [7]प्रवादादपवादभीता गुणार्जनोत्साहपरा नराः स्युः ॥ ५११ ॥**

तथा–

**जे चारित्तिहिं निम्मला ते पंचायण सीह ।**
**विसयकसाइंहिं गंजिया ताहं फुसिज्जइ लीह ॥**
**ताहं फुसिज्जइ लीह, इत्थ ते तुल्ल सीआलह ।**
**ते पुण विसयपिसायछलिय गय करिणिहिं बालह ॥**
**ते पंचायण सीह सत्ति उज्जल नियकित्तिहिं ।**
**ते नियकुलनहयलमयंक निम्मलचारित्तिहिं ॥ ५१२ ॥**

श्रुत्वेति नृपतिस्तोपादुवाच[8] सुहृदं गुरुम् । धन्योऽहमेव यस्याभूद् गुरोः कुलममूदृशम् ॥ ५१३ ॥
राज्ञा[9]ऽवस्थापितौ तत्र दिनान्यथ कियन्त्यपि । आपृच्छ्य **बप्पभट्टिं** तावागतौ स्वभुवं ततः ॥ ५१४ ॥
धर्मव्याख्या सदाख्यानाख्यानप्रश्नोत्तरादिभिः । कियानपि ययौ कालः ममुदोः सुहृदोस्तयोः ५१५ ॥

§१७. आययावन्यदा वृन्दं गायनानां तावसायिनाम् । श्रवःस्वादिमहानादरसनिर्जिततुंबरुः ॥ ५१६ ॥
तत्रैका किन्नरी साक्षान्मातङ्गी गीतभङ्गिभिः । राजानं रञ्जयामास रूपादपि रसादिभिः ॥ ५१७ ॥
प्रवाह्य प्रतिपक्षस्य राज्ञो रागद्विषन् जयी । चित्तवृत्तिमहापुर्यामवस्कन्दं ददौ तदा ॥ ५१८ ॥
वास्तव्यानीन्द्रियाण्यस्य बहिर्भीत्येव निर्ययुः । तैरिव प्रेरितो राजा वासं बहिरचीकरत् ॥ ५१९ ॥

---

1 N नर्मवर्म्मेण । 2 N °मना भूय चकर्ष । 3 N चैतन्यै संगतः । 4 N लक्षितेन । 5 N तु शीलेन । 6 N °षतस्तेह शिवैकनिष्ठाः । 7 N प्रभावाद° । 8 N नृपतिस्तेषामुवाच । 9 N राज्ञाथ स्था° ।

उवाच च—

वक्त्रं पूर्णशशी सुधाऽधरलता दन्ता मणिश्रेणयः
कान्तिः श्रीर्गमनं गजः परिमलस्ते पारिजातद्रुमाः ।
वाणी कामदुघा कटाक्षलहरी तत्कालकूटं विषं
तत्किं चन्द्रमुखि ! त्वदर्थममरैरामन्थि दुग्धोदधिः ॥ ५२० ॥

अन्तश्चरेभ्यो विज्ञातवृत्तान्तः सूरिरप्यथ । दध्यौ स सादिनो दोषो यदश्वो विपथं व्रजेत् ॥ ५२१ ॥
आमभूपे विमार्गस्थे विश्वप्रकृतिषु ध्रुवम् । अपकीर्तिः कलङ्कोऽयं ममैवासज्जति स्फुटः ॥ ५२२ ॥
तदुपायाद् विनेयोऽसाविति ध्यात्वा बहिर्गृहे । ययौ विलोकनव्याजात् कामार्त्तेरौषधं स्मरन् ॥ ५२३ ॥
नव्येषु पट्टशालायाः पट्टेषु खटिनीदलैः । काव्यानि व्यलिखद् बोधबन्धुराणि ततो गुरुः ॥५२४॥—युग्मम् ।

तथाहि—

शैत्यं नाम गुणस्तवैव तदनु स्वाभाविकी स्वच्छता
किं ब्रूमः शुचितां व्रजन्ति[1] शुचयः सङ्गेन यस्यापरे ।
किं चातः परमस्ति ते स्तुतिपदं त्वं जीवितं देहिनां
त्वं चेन्नीचपथेन[2] गच्छसि पयः कस्त्वां निषेद्धुं क्षमः ॥ ५२५ ॥
सद्वृत्त सद्गुण महार्घ्य महार्ह कान्त कान्ताघनस्तनतटोचितचारुमूर्त्तेः ।
आः पामरीकठिनकण्ठविलग्नभग्न हा हार ! हारितमहो भवता गुणित्वम् ॥५२६॥
उप्पहजायाएँ असोहरीइ फलकुसुमपत्तरहियाए ।
बोरीइँ वइँ दिंतो भो भो पामर न लज्जिहिसि ॥ ५२७ ॥
मायंगासत्तमणस्स मेइणि तह य भुंजमाणस्स ।
अब्भिडइ तुज्झ ना या व लो य को नट्ठधम्मस्स ॥ ५२८ ॥
लज्जिज्जइ जेणि जणे मइलिज्जइ नियकुलक्कमो जेण ।
कंठट्ठिएहि जीवे मा सुंदर तं कुणिज्जासु ॥ ५२९ ॥
जीयं जलबिंदुसमं संपत्तीओ तरंगलोलाओ ।
सिविणयसमं च पिम्मं जं जाणह तं करिज्जासु ॥ ५३० ॥

लिखित्वा स्वाश्रयं प्राप बप्पभट्टिप्रभुर्मुदा । द्वितीयेऽहनि भूपोऽपि तत्सद्म[3] प्रेक्षितुं[4] ययौ ॥ ५३१ ॥
अवाचयच्च काव्यानि[5] हृल्लेखीनि यथा यथा । तथा तथा भ्रमोऽनेशद् दुग्धाद्धत्तूरमोहवत् ॥ ५३२ ॥
अथान्वतप्यत श्रीमानामः श्याममुखाम्बुजः । व्यमृशच्च[6] विना मित्रं कोऽन्य एवं हि बोधयेत् ॥५३३ ॥
इदानीमहमप्रेक्ष्यं स्वमास्यं दर्शये कथम् । तस्य व्यथाकरं विश्वप्राणिनां दोषकारणम् ॥ ५३४ ॥
सांप्रतं मे बृहद्भानुरेव शुद्धिं विधास्यति । कलङ्कपङ्किलं त्याज्यमेवास्माकं हि जीवितम् ॥ ५३५ ॥
इति ध्यात्वा स तत्रैवादिशत् प्रेष्यांश्चिताकृते । अनिच्छन्तोऽपि भूपालादेशं तत्र व्यधुर्बलात् ॥ ५३६ ॥
राजलोक इदं ज्ञात्वा पूत्चक्रे करुणस्वरम् । राजमित्रगुरोरग्रे ततोऽसौ[7] तत्र जग्मिवान् ॥ ५३७ ॥
उवाचाथ गुरुर्भूप ! प्रारब्धं स्त्रीजनोचितम् । किमिदं विदुषां निन्द्यं ततो राजाह तत्पुरः ॥ ५३८ ॥
मम प्रच्छन्नपापस्य मालिन्ये मनसा कृते । स्वदेहत्याग एवास्तु दण्डो दुष्कृतनाशनः ॥ ५३९ ॥

---

1 A भवन्ति । 2 N °पदेन । 3 A तच्छद्म । 4 B N प्रेक्षितुं । 5 B N वाक्यानि । 6 A विमृशश्च । 7 B N तेनासौ ।

यथा दुष्कृतिलोकस्य वयं दण्डमकृष्महि । तथा स्वस्यापि किं नैव कुर्मः कर्मच्छिदाकृते ॥ ५४० ॥
गुरुराह स्मितेनाथ विमृश त्वं हि चेतसा । निबद्धं कर्म चित्तेन चित्तेनैव विमोच्यते ॥ ५४१ ॥
स्मार्त्तानार्त्त(र्त्तिं)भिदे पृच्छ प्रायश्चित्तानि पाप्मनाम् । यतः स्मृतिषु सर्वेषां मोक्ष ऊचे मनीषिभिः[1] ॥५४२॥
वेदान्तोपनिषत्तत्त्वश्रुतिस्मृतिविशारदाः । तत्राहूयन्त भूपेन स्तूपेन न्यायनाकिनः ॥ ५४३ ॥
यथावृत्तं मनःशल्यं जगदे तत्पुरस्तदा । ततस्ते स्मृतिवाचालास्तथ्यं शास्त्रानुगं जगुः ॥ ५४४ ॥
आयसीं पुत्रिकां वह्निध्मातां तद्वर्णरूपिणीम् । आश्लिष्यन्मुच्यते पापाच्चाण्डालीसङ्गसम्भवात् ॥ ५४५ ॥
श्रुत्वेति भूपतिः कारयित्वा तां कथितक्रमात् । आनाय्य तत्र सज्जोऽभूत् तदालिङ्गनहेतवे ॥ ५४६ ॥
वेगादागत्य पाञ्चालीमाश्लिष्यंस्तां स्वसिद्धये । पुरोधो[2]-**बप्पभट्टि**भ्यां भूपतिर्भुजयोर्धृतः ॥ ५४७ ॥
आह श्री**बप्पभट्टि**श्च स्थिराधार ! स्थिरो भव । मा कोटिंभरमात्मानं नाशयेथा मुधा सखे ! ॥ ५४८ ॥
उक्तश्चैकामचित्तेन साहसानन्यवेश्मना । भवता कर्म चित्तेन बद्धमुन्मोचितं त्वया ॥ ५४९ ॥
अस्य पापस्य मुक्तोऽसि कृष्णाभ्रादिव भास्करः । द्योतिष्यसे सतामन्तर्मुञ्च तत्कर्म दुष्करम् ॥ ५५० ॥
आनन्दितः प्रभोर्वाग्भिरिति तत्याज कुग्रहम् । इति ज्ञाते च हर्षोऽत्र पुनर्जात इवाभवत् ॥ ५५१ ॥
अमात्यैर्नगरे तत्र सर्वद्धर्यालंकृते कृते । गजगन्धर्वसन्दोहरथ्यापादातिसंवृतः ॥ ५५२ ॥
पट्टहस्तिशिरःस्थानाग्रासनस्थे मुनीश्वरे । रोमगुच्छातपत्रादिप्रक्रियाप्रकटप्रभे ॥ ५५३ ॥
प्रविवेश विशामीशः स्वयं श्रीश इव[3] श्रिया । सुराणामप्यपूर्वेण पुरमत्युत्सवेन सः ॥–त्रिभिर्विशेषकम् ।

§१८. इतो **वाक्पतिराज**श्च तं दृष्ट्वा राजवैकृतम् । निर्बन्धान्नृपमापृच्छ्य वैराग्यान्**मथुरां** ययौ ॥ ५५५ ॥
धर्माख्यावसरेऽन्येद्युः प्रभुर्भूपालमूचिवान् । धर्मतत्त्वानि पार्श्वस्थमानितानि विमृश्य सः ॥ ५५६ ॥
नवनीतसमं विश्वधर्माणां करुणानिधिम्[4] । [5]सन्त्याज्यमार्हतं धर्मं परीक्षापूर्वकं श्रय ॥ ५५७ ॥
राजा प्राहार्हतो धर्मो निर्वहत्येव मादृशाम् । परीक्षायां[6] परं शैवधर्मे चेतोऽलगद्[7] दृढम् ॥ ५५८ ॥
त्वदुक्तो नीरमानेष्ये कुम्भेनामेन[8] रङ्गतः । परं मा माममुं धर्मं त्याजयिष्यसि सौहृदात् ॥ ५५९ ॥
न मुञ्चे पैतृकाचारं वच्मि किंचिन्न वः पुरः । चेद्रोषं नहि धत्तात्र गुरुरोपाद्विभीः श्रिये ॥ ५६० ॥
श्रुतेति[9] गुरुणा प्रोक्ते [10]नृपः प्राह स्मितं दधन् । बोधयेयुर्भवन्तोऽपि बालगोपाङ्गनादिकम् ॥ ५६१ ॥
कोविदं नैव शास्त्रार्थपरिकर्मितधीसखम् । रम्भाफलं यथा भक्ष्यं न तु निम्बफलं तथा[11] ॥ ५६२ ॥
शक्तिश्चेद्भवतामद्य मध्ये **मथुर**मागतम् । पुराणपुरुषं नित्यं चित्ते ध्यायन्तमद्भुतम् ॥ ५६३ ॥
यज्ञोपवीतवीताङ्गं नासाग्रन्यस्तदृष्टिकम् । तुलसीमालया लीढवक्षःस्थलमिलास्थितम् ॥ ५६४ ॥
श्रीकृष्णगानसत्तृष्णवैष्णवब्राह्मणावृतम् । पुत्रजीवकमालाभिर्मण्डितोरःस्थलं किल ॥ ५६५ ॥
वराहस्वामिदेवस्य प्रासादान्तरवस्थितम् । वैराग्यातिशयात्तत्र कृतप्रायोपवेशनम् ॥ ५६६ ॥
प्रतिबोध्य तदा जैनमते स्थापयत द्रुतम् । **वाक्पतिराज**सामन्तं पर्यङ्कासनसंस्थितम् ॥ ५६७ ॥
—पंचभिः कुलकम् ।

तैश्चाभ्युपगतेऽशीतिं चतुर्भिरधिकां तदा । सामन्तानां बुधानां च सहस्रं प्रैषयन्नृपः ॥ ५६८ ॥
आचार्यैः सह ते प्रापुस्त्वरितं शीघ्रवाहनैः । **मथुरां** तत्र चाजग्मुर्वराहस्वामिमन्दिरे ॥ ५६९ ॥
पूर्वाख्यातोदितावस्थं परमात्मस्थचेतनम् । ददृशुः सूरयो भूभृत्पुमांसश्च तमादरात् ॥ ५७० ॥
तत्र श्री**बप्पभट्टि**श्च त्रयीस्तवनतत्परम् । काव्यवृन्दमुदाजह्रे तस्य चेतः परीक्षितुम् ॥ ५७१ ॥

1 A महर्षिभिः । 2 A पुरोधा° । 3 N यशःश्रिया । 4 A °निधेः । 5 N संत्याज्य° । 6 N परीक्षायाः । 7 N लगेद्दढं । 8 A कुंभनासेन । 9 N श्रुतेऽथ । 10 A नृपे । 11 N तथा निंबफलं न तु ।

तथा हि–

रामो नाम बभूव हुं तदबला सीतेति हुं तां पितु-
वाचा पंचवटीवने विचरतस्तस्याहरद् रावणः ।
निद्रार्थं जननीकथामिति हरेर्हुंकारिणः शृण्वतः
*पूर्वस्मर्तुरवन्तु कोपकुटिलभ्रूभंगुरा दृष्टयः ॥ ५७२ ॥

दर्प्पणार्पितमालोक्य मायास्त्रीरूपमात्मनः ।
आत्मन्येवानुरक्तो वः श्रियं दिशतु केशवः ॥ ५७३ ॥

उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा
धृत्वा चान्येन वासो विगलितकबरीभारमंसे वहन्त्याः ।
सद्यस्तत्कायकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः
शय्यामालिंग्य नीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु ॥ ५७४ ॥

सन्ध्यां यत्प्रणिपत्य लोकपुरतो बद्धाञ्जलिर्याचते
धत्से यत्त्वपरां विलज्ज शिरसा तच्चापि सोढं मया ।
श्रीर्जातामृतमन्थने यदि हरेः कस्माद् विषं भक्षितम्
मा स्त्रीलम्पट ! मां स्पृशेत्यभिहितो गौर्या हरः पातु वः ॥ ५७५ ॥

यदमोघमपामन्तरुप्तं बीजमज त्वया ।
अतश्चराचरं विश्वं प्रभवस्तस्य गीयसे† ॥ ५७६ ॥

कुलं पवित्रं जननी कृतार्था वसुन्धरा पुण्यवती त्वयैव ।
अबाह्यसंवित्सुखसिन्धुमग्नं लग्नं परे ब्रह्मणि यस्य चित्तम् ॥ ५७७ ॥

स कर्णकटुकं तच्च श्रुत्वा शीर्षं व्यधूनयत् । आकूण्य नासिकां वाचं प्राहाथो दुर्मनायितः ॥ ५७८ ॥
अमीषां रसकाव्यानां प्रशंसायाश्च किं सखे ! । अ(इ)यं वेला कथं नाम सौहार्दं तव चेदृशम् ॥ ५७९ ॥
इदं च श्री**बप्पभट्टि**सदृशं भवतीह किम् । पारमार्थिकवाणीभिर्बोधवेला ममाधुना ॥ ५८० ॥
ततः प्राह गुरुः साधु साधु ते चेतनां स्तुमः । प्रष्टव्यमस्ति किंचित्तु भवत्पार्श्वे सुहृत्तम ! ॥ ५८१ ॥
देवानां यन्मयाऽऽख्यायि स्वरूपं भवदग्रतः । तत्तथ्यं वितथं वास्ते [1]तथ्यं चेद्दुर्मनाः कथम् ॥ ५८२ ॥
वितथं च कथं तत्स्यात् प्रत्यक्षे संदीहीत[2] कः । अत्र कार्ये प्रवृत्तिस्ते राज्यादीच्छावशादिह ॥ ५८३ ॥
परमार्थोपलम्भे वा ?, विकल्पः प्रथमो यदि । संमतं नस्तदाऽऽराद्धा देवा भूपतयोऽपि च ॥ ५८४ ॥
इष्टं प्रणयिनां दद्युः सामर्थ्यात् संशयोऽपि न । परमार्थे तु चेदिच्छा तत् त्वं तत्त्वं विचारय ॥ ५८५ ॥
संसारोपाधिमग्नैश्चेत् सुरैर्मुक्तिः प्रदीयते । तन्नात्र मत्सरोऽस्माकं स्वयं निखिलवेद्यसि ॥ ५८६ ॥

–पंचभिः कुलकम् ।

श्रुत्वेति सद्गुरोर्वाचं पंकापनयवारिभाम् । अवलेपो ययौ तस्य हिक्काऽकस्माद्भयादिव ॥ ५८७ ॥
अहो पुण्यपरीपाको मम यत् सूनृतः सुहृत् । संगतोऽवसरेऽमुत्र तत्[3] तत्त्वोपकृतिं कुरु ॥ ५८८ ॥
इत्युक्त्वा विरते दत्तावधाने **वाक्पतौ** प्रभुः । धर्म-देव-गुरूणां च तत्त्वान्याख्यात् तदग्रतः ॥–युग्मम् ।

* A आदर्शे—'सौमित्रेयधनुर्धनुर्धनुरिति व्यक्ता गिरः पान्तु वः ।' एतादृशोऽयं चतुर्थः पादः ।
† A आदर्शे नास्त्यसौ श्लोकः । 1 N B नास्ति । 2 N संदिहानकः । 3 N तत्र चोप° ।

त्रैकाल्यं द्रव्यषट्कं नवपदसहितं जीव-षट्काय-लेश्याः
पंचान्ये चास्तिकाया व्रत-समिति-गति-ज्ञान-चारित्रभेदाः ।
इत्येतन्मोक्षमूलं त्रिभुवनमहितैः प्रोक्तमर्हद्भिरीशैः
प्रत्येति श्रद्धधाति स्पृशति च मतिमान् यः स वै शुद्धदृष्टिः ॥ ५९० ॥

अथ देवतत्त्वम्–

अर्हन् सर्वार्थवेदी यदुकुलतिलकः केशवः शंकरो वा
बिभ्रद्गौरीं शरीरे दधदनवरतं पद्मजन्माऽक्षसूत्रम् ।
बुद्धो चालं कृपालुः प्रकटितभुवनो भास्करः पावको वा
रागाद्यैर्यो न दोषैः कलुषितहृदयस्तं नमस्यामि देवम् ॥ ५९१ ॥

यत्र तत्र समये यथा तथा योऽसि सोऽस्यभिधया यया तया ।
वीतदोषकलुषः स चेद् भवानेक एव भगवन्! नमोऽस्तु ते ॥ ५९२ ॥

मदेन मानेन मनोभवेन क्रोधेन लोभेन च संमदेन ।
पराजितानां प्रसभं सुराणां वृथैव साम्राज्यरुजा परेषाम् ॥ ५९३ ॥

प्राइं मुणिहि वि भ्रंतडी तिं मणिअडा गणंति ।
अखयनिरंजणि परमपइ अज्जवि तउ न लहंति ॥ ५९४ ॥

अथ गुरुतत्त्वम्–

पंचमहव्वयजुत्त पंचपरमिट्ठिहिं भत्तउ ।
पंचिंदियनिग्गहणु पंचविसय जु विरत्तउ ॥
पंचसमिइ निव्वहणु पगुणगुणु आगमसत्थिण ।
कुविहि कुगह परिहरइ भविय बोहिय परमत्थिण ॥
बालीसदोससुद्धासणिण छव्विह जीवह अभयकरु ।
निम्मच्छरु केसरि कहइ फुड तिगुत्तिगुत्तु सो मज्झ गुरु ॥ ५९५ ॥

कुक्खी संबल चत्तधण निच्चुवलंबिय हत्थ ।
एहा कहवि गवेसि गुरु ते तारणह समत्थ ॥ ५९६ ॥

दोवि गिहत्था धडहड वहइं को किर कस्स य पत्तु भणिज्जइ ।
सारंभो सारंभं पुज्जइ कद्दमु कद्दमेण किम सुज्झइ ॥ ५९७ ॥

इत्यादिसद्गुरोर्वाक्यैः प्रीणितो हृदयंगमैः । ध्यानं प्रपार्य पप्रच्छ किंचित् सन्दिग्धि मे मनः ॥ ५९८ ॥
अनन्ताः प्राणिनो मुक्तिं यदि प्राप्ता नृलोकतः । रक्तो भवेत् स पूर्णत्वान्मुक्तौ स्थानं च नास्ति तत् ॥५९९॥
गुरुराह महासत्त्वाज्ञातजैनगिरामयम् । आलापं(पः) शृणु दृष्टान्तमत्र श्राव्यं विपश्चिताम् ॥ ६०० ॥

तथा हि–

आसंसारं सरियासएहिं हीरंतरेणुनिवहेहिं ।
पुहवी न निट्ठिय च्चिय उदही वि थली न संजाओ ॥ ६०१ ॥

उल्लसत्पुलकाङ्कुरो दूरीकृतकुवासनः । प्राह **वाक्पतिराजो**ऽथ राजा यो ब्रह्मवेदिनाम् ॥ ६०२ ॥
इयन्तं समयं यावद् भ्रान्ताः स्मो मोहलीलया । परमार्थपरामर्शिधर्म्मतत्त्वबहिष्कृताः ॥ ६०३ ॥

चिरं परिचयः पूज्यैस्त्वादृशैरपि मेऽफलः । एतावन्ति दिनान्यासीद् धर्माख्यानविनाकृतः ॥ ६०४ ॥

उक्तं च तेन–

**मयनाहिकलुसिएणं इमिणा किं किर फलं निडालेण ।**
**इच्छामि अहं जिणवरपणामकिणकलुसियं काउं ॥ ६०५ ॥**

मुमुक्षोर्मम यत्प्राय औचित्यं न विलंघयेत् । तदादिश यथादिष्टं विदधे कर्मनाशकम् ॥ ६०६ ॥
श्री**बप्पभट्टि**राहाथ शङ्का चेन् कर्मणां तव । मनःशुद्धिस्ततः कार्या व्यवहारोऽपि तादृशः ॥ ६०७ ॥
ततः संन्यस्त एव त्वं जैनमार्गं समाश्रय । श्रुत्वेति तैः सहैवा[1]सावुदस्थाद् भवनात् ततः ॥ ६०८ ॥
आजगामाथ पार्श्वस्य[2] स्तूपे श्रीपार्श्वमन्दिरे । मिथ्यादर्शनवेषं च विमुञ्चत्[3] स्वीकृतं पुरा ॥ ६०९ ॥
जैनर्षिवेषमास्थाय संयमाचारशिक्षकः[4] । संसारचरमप्रत्याख्यानी ध्यानैकतानभृत् ॥ ६१० ॥
अष्टादश तदा पापस्थानान्युत्सृज्य सर्वतः । चतुःशरणमादध्यौ निर्द्धूतान्तरकल्मषः ॥ ६११ ॥–युग्मम् ।
प्रशंसागर्हणे प्राच्यसुकृतासुकृते व्यधात् । परमेष्ठिपदाधीनमानसो मानशोपभूः ॥ ६१२ ॥
दिनान्यष्टादश प्रायमुपायं दुष्कृतार्दने । एकावतारान्तरितो महानन्दपदस्तदा ॥ ६१३ ॥
सम्यगाराधनोपात्तपाण्डित्यमृतिरीतितः । देहमुक्त्यां गतः साम्यं प्राप प्राचीनबर्हिषा ॥ ६१४ ॥–युग्मम् ।
ततः किंचित्सखिस्नेहगद्गदः शमिनायकः । उवाच विश्वसामन्तविद्वद्वृन्दस्य शृण्वतः ॥ ६१५ ॥

तथा हि–

**पइं सग्गगए सामंतराय अवरत्तउ न फिट्टिहइ ।**
**पढमं चिय वरिय पुरंदराइ सग्गस्स लच्छीए ॥ ६१६ ॥**

तत्र **गोकुलवासे**ऽस्ति पुरा **नन्द**निवेशिते । श्रीशान्तिः शान्तिदेवी च हेतुर्विश्वस्य शान्तिके ॥ ६१७ ॥
तत्र श्री**बप्पभट्टिः** श्रीतीर्थेश्वरनमस्कृतौ । गत्वा च तुष्टुवे शान्तिदेवतासहितं जिनम् ॥ ६१८ ॥
'जयति जगद्रक्षाकर' इत्याद्यं शान्तिदेवतास्तवनम् । अद्यापि वर्त्तते तच्छान्तिकरं सर्वभयहरणम् ॥६१९॥
ततः सामाजिकस्तोमस्तुतो व्याघुट्य संययौ । **कन्यकुब्जपुरं बप्पभट्टिः** कतिपयैर्दिनैः ॥ ६२० ॥
पुरापि ज्ञातवृत्तान्तो नृपतिर्गूढपूरुषैः । संमुखीनः पुरोपान्तं गत्वा प्रावेशयद् द्रुतम् ॥ ६२१ ॥
गुरुं सभोपविष्टं च प्राह भूपश्चमत्कृतः । अहो वो वाच[5]सामर्थ्यं सोऽपि यत् प्रतिबोधितः ॥ ६२२ ॥
प्रभुः प्राहाथ[6] का शक्तिर्मम यत् त्वं न बुध्यसे । राजाह सम्यग् बुद्धोऽस्मि त्वद्धर्मोऽस्तीति निश्चितम् ॥६२३॥
माहेश्वरं पुनर्द्धर्मं मुञ्चतो मे महाव्यथा । तत्प्राच्यभवसंबद्ध इवायं किं करोम्यतः ॥ ६२४ ॥
श्रुतज्ञाननिमित्तेन ज्ञात्वा प्रभुरुवाच च । तव[7] प्राक्कृतकष्टस्य राज्यमल्पतरं फलम् ॥ ६२५ ॥
सविस्मयैस्तदा पर्षत्प्रधानैरौच्यत प्रभुः । प्रसह्य कथ्यतां राज्ञः प्राग्भवोऽस्मत्प्रबुद्धये ॥ ६२६ ॥
प्रभुराह ततः सम्यग् विमृश्येति[8] यथातथम् । प्रश्नचूडामणेः शास्त्रादस्ताघज्ञानशेवधिः ॥ ६२७ ॥
शृणु भूमिपते ! **कालिंजरा**ख्यस्य गिरेरधः । शालिशालद्रुमोर्द्ध्वस्थशाखाबद्धपदद्वयः ॥ ६२८ ॥
अधोमुखो जटाकोटिसंस्पृष्टपृथिवीतलः । द्व्यन्हे द्व्यन्हे मिताहारो हारी[9] क्रोधादिविद्विषाम् ॥ ६२९ ॥
इति वर्षशतं साग्रं तपस्तप्त्वातिदुष्करम् । आयुःप्रान्ते तनुं त्यक्त्वाऽभवस्त्वं भूपनायकः ॥ ६३० ॥
यदि न प्रत्ययो राजन् ! प्रेषय प्रवरान् नरान् । जटा अद्यापि तत्रस्था आनायय तरोस्तलात् ॥ ६३१ ॥

1 N सहैवास उद° । 2 N पार्श्वेऽस्य । 3 N व्यमुंचत् । 4 N संयमाचारशिष्यकः । 5 N अहो चोवाच । 6 N प्राह च । 7 N तत्र । 8 N विमृशेति । 9 A °हाराहारी ।

इत्याचार्यकथास्मेरो नृपतिः प्रेष्य मानुषान् । जटा आनाययत्, तत्र गत्वाऽऽनीताश्च तास्ततः ॥ ६३२ ॥
मुनीन्द्रोऽयं महाज्ञानी कलावपि कलानिधिः । भूपालः कृतपुण्योऽसौ यस्येदृग्गुरुरद्भुतः ॥ ६३३ ॥
पार्षद्या धूतमूर्द्धानस्तद्वृत्तोल्लाससंशिनः । पर्युपास्तिं दधुः सूरिपादान्तभ्रान्तमौलयः ॥ ६३४ ॥

§ १९. अन्यदा सौधमूर्द्धस्थो नृपः कुत्रापि वेश्मनि । कलहान्तरितां रामां भिक्षार्थं गृहमागतम् ॥ ६३५ ॥
जैनभिक्षुं परब्रह्मध्यानैकाग्रहसंग्रहम् । वृषस्यन्तीमवज्ञातां तेन निर्गच्छता गृहात् ॥ ६३६ ॥
बाढं कपाटमाश्लिष्य प्रहारेऽङ्घ्रेः समुद्यते । नूपुरं यतिपादाब्जप्रविष्टं[1] कौतुकादिव ॥ ६३७ ॥
पश्यन्तीमथ सोत्प्रासां निर्लज्जां कामदामनीम् । गणयत्येप नेत्येवं वदन्तीं च तदैक्षत[2] ॥ ६३८ ॥

—चतुर्भिः कलापकम् ।

प्राकृतस्याथ[3] वृत्तस्य पादमेकमुवाच सः[4] । गुरोरग्रे ततोऽवादीत् [5]स्प्रागेव पदत्रयम् ॥ ६३९ ॥

तद्य—

**कवाडमासज्ज वरंगणाए अब्भत्थिओ जुव्वणमत्तियाए ।**
**अमन्निए मुक्कपयप्पहारे सनेउरो पव्वइयस्स पाओ ॥ ६४० ॥**

युवा भिक्षाचरोऽन्येद्युः [6]प्रोपितप्रेयसीगृहे । दृष्टः प्रविष्टो भिक्षार्थं राज्ञा सौधाग्रचारिणा ॥ ६४१ ॥
आनीयान्नभृतां दर्व्वीमूर्द्धाऽस्थात् सा तदास्यदृक् । सोऽपि तन्नाभिसौन्दर्यासक्तनेत्रस्तथा स्थितः ॥ ६४२ ॥
एकचित्ततया दानग्रहणा[7]स्मरणात् तदा । *नृपस्तयोरेकदृशोर्ध्यानं पश्यन् जगौ स्मितः ॥ ६४३ ॥

तद्यथा—

**भिक्खयरो पिच्छइ नाहिमंडलं सा वि तस्स मुहकमलं ।**

श्रीबप्पभट्टिराकर्ण्य नृपाग्रे वाक्यमब्रवीत् । किं गण्यानीदृशान्यस्य पयोधेरिव बुद्बुदाः ॥ ६४४ ॥

**दुण्हं पि कवालं चट्टुयं च काया विलुंपंति ॥ ६४५ ॥**

श्रुत्वेति भूपतिस्तुष्टः प्राह कल्याणधीनिधिम् । विना मन्मित्रमेते कः पूरयेन्मन्मथेक्षितम् ॥ ६४६ ॥
इत्येवं सत्यसौहार्दमार्दवार्दनभीतिभूः । गुरुवक्त्राम्बुजे नित्यं भृशं भृङ्गीतुलां व्यधात् ॥ ६४७ ॥

§ २०. एकदा समगादेकच्छेको विश्वकलाश्रयः । चित्रकृच्चित्रकृच्चित्रकर्म्मकर्म्मणि कर्मठः ॥ ६४८ ॥
पूर्वमालिखितं सम्यक् ततः[8] कर्पटवारितम् । रेखितं[9] रङ्गिवर्णौघपूर्णक्षणमथ स्फुटम् ॥ ६४९ ॥
अलक्ष्यमपि[10] मा चित्रभङ्गे जीववधो[11] ध्रुवः । इति सत्यापयन्[12] वाचं सजीवकलया स्वया (?) ॥६५०॥
स त्रयोदशभिर्भागैर्भूपरूपं विधाय तत् । चित्रचूडामणिं राज्ञो दर्शयन् विकटे पटे ॥—त्रिभिर्विशेषकम् ।
राजा सुहृद्गुणग्रामरामणीयकलम्पटः । अनास्थया समीक्ष्यास्य ददौ नोत्तरमप्यसौ ॥ ६५२ ॥
एवं त्रिर्विहिते रूपे यदा नोत्तरमाप सः । अवोचत् प्रेक्षकानन्यान् निर्वेदादतिदीनगीः ॥ ६५३ ॥

1 N प्रविष्टं । 2 A तदैक्ष्यते; B तदैक्ष्यत । 3 N प्राकृकृतस्याथ । 4 A च । 5 N प्रागेव । 6 N प्रेषितः । 7 A °ग्रहण स्मरणा° ।

* N पुस्तके "नृपस्तयोरेकदृशोर्ध्याने दृष्टेऽथवायसैः ॥
विकीर्णे सकलेऽप्यन्ने विस्मयस्मेरलोचनः । गाथार्द्धमूचिवांस्तत्र यथा दृष्टार्थवाचकम् ॥
ध्यानं पश्यन् जगौ स्मितः–" एतादृशः पाठविशेषोऽत्र दृश्यते ।

8 N सम्यवृतः; A सम्यक् तव । 9 N रेखिनं । 10 A अलक्ष्यमति मां; B अलक्ष्म । 11 N °वधाद् । 12 A सत्यापयस्वा… ।

छिनद्मि स्वौ करौ किं वा ललाटं स्फोटये निजम् । कला यातु क्षयं भाग्यहीनस्य मम किं ब्रुवे ॥ ६५४॥
**बप्पभट्टिं** समीक्षस्वेत्युक्तः कैश्चिद्दयालुभिः । ततोऽसौ गुरवे जैनं बिम्बं कृत्वा करे ददौ ॥ ६५५ ॥
प्राशंसि च ततोऽसौ तैरेष चित्रकलानिधिः । भूपालाग्रेऽथ[1] सोऽप्यस्य टंकलक्षं ददौ मुदा ॥ ६५६ ॥
श्रीवर्द्धमानबिम्बेन भास्वत्पटचतुष्टयम् । व्यधापयदधाच्चैकं **कन्यकुब्ज**पुरान्तरा ॥ ६५७ ॥
**मथुरायां** तथैकं **चाणहिल्लपुर** एककम् । **सतारकपुरे** चैकं प्रतिष्ठाप्य न्यधापयत् ॥ ६५८ ॥
**श्रीपत्तनान्तरा मोढ**चैत्यान्तर्म्लेच्छभङ्गतः । पूर्वमासीत् तमैक्षन्त तदानीं तत्र धार्मिकाः ॥ ६५९ ॥
द्वापंचाशत् प्रबन्धाश्च कृतास्ता रा ग णा दयः । श्री**बप्पभट्टि**ना शैक्षकविसारस्वतोपमाः ॥ ६६० ॥
§ २१. अथ **राजगिरिं** दुर्गमन्यदा रुरुधे नृपः । **समुद्रसेन**भूपालाधिष्ठितं निष्ठितद्विपत्[2] ॥ ६६१ ॥
गजाश्वरथपादातपाद[3]पातादिसादितैः । शब्दाद्वैतमिव व्योम्नि प्रतितिष्ठत्[4] समुन्नतम् ॥ ६६२ ॥
समग्रप्राग्र्[5]सामग्रीजाग्रदूव्यग्रपरिग्रहम् । अपि प्रपंचलक्षाभिर्दुर्ग्रहं विग्रहिद्विपाम्[6] ॥ ६६३ ॥
भैरवादिमहायन्त्रयष्टिमुक्ताश्मगोलकैः । बाह्यकुट्टिमकुट्टाकैः कुट्टिताट्टघटातटम् ॥ ६६४ ॥
अभ्रंलिहट्टषड्भित्तिशिरस्थकपिशीर्षकैः । सर्ढिबैः क्लेशसंचारं रवेस्तारापतेरपि ॥ ६६५ ॥
सुरंगा[7]शूकरीमुख्यप्रपंचैरपि विद्विषाम् । पतत्युष्णतैलौघप्लुष्टैर्विफलविक्रमम् ॥ ६६६ ॥—षड्भिः कुलकम् ।
पप्रच्छ **बप्पभट्टिं** च निर्वेदादा**मभूपतिः** । कथं कदा वा ग्राह्योऽयं प्राकारः क्ष्माधरोपमः ॥ ६६७ ॥
प्रश्नचूडामणेः शास्त्रात् [8]सुविचार्याब्रवीदिति । पौत्रस्ते **भोज**नामाऽमुं ग्रहीष्यति न संशयः ॥ ६६८ ॥
अभिमानादसोढेदं राजा तत्रैव तस्थिवान् । वर्षैर्द्वादशभि**र्दुन्दुक**स्य सूनोः सुतोऽजनि ॥ ६६९ ॥
स च पर्यंकिकान्यस्तः प्रधानैर्जातमात्रकः । आनिन्ये तस्य दम्भोलिरिव शैलच्छिदाविधौ ॥ ६७० ॥
तद्दृष्टिर्दुर्गशृङ्गाग्रे मुखं बालस्य तन्मुखम् । विधायापात्यतापित्ततैलज्वालाविलासिरुक् ॥ ६७१ ॥
स कोट्टः कुट्टिताधस्थरणमण्डपमण्डलः । स्फुटदट्टालकस्तोमप्रभ्रस्यद्गोपुरादपि ॥ ६७२ ॥
मृद्यमानमनुष्यस्त्रीगजाश्वमहिषीगवाम् । आर्त्ताक्रन्दरवैः शब्दाद्वैतं सर्वत्र पोषयन् ॥ ६७३ ॥
निर्घातक्षुण्णसामान्यपर्वतो महतामपि । गिरीणां प्रददद्भीतिं न्यपतन्नाकिलोकिनः ॥ ६७४ ॥—त्रिभिर्विशेषकम् ।
**समुद्रसेन**भूपोऽपि धर्मद्वाराद् ययौ बहिः । **आमनामा**थ भूपालः श्री**राजगिरि**माविशत्[9] ॥ ६७५ ॥
अधिष्ठाता तु दुर्गस्य यक्षोऽङ्गीकृतवैरतः । **आमा**धिष्ठायिकैः कृष्टः प्रतोलीस्थो[10] हि तज्जनम् ॥ ६७६ ॥
इति लोकात् परिज्ञाय राजा तत्रागमत् तदा । तमाह प्राकृतं लोकं मुक्त्वा मामेव घातय ॥ ६७७ ॥
इति साहसवाचा स तुष्टो हिंसाग्रहात् ततः । न्यवर्त्तत प्रशान्तात्मा सत्संग उपकारकः ॥ ६७८ ॥
मैत्रीं च प्रतिपेदे स यथादिष्टकरः प्रभोः । कियन्मे जीवितं मित्र ! ज्ञानाद्दृष्ट्वा निवेदय ॥ ६७९ ॥
षण्मास्यामवशेषायां कथयिष्यामि तत्र च । इति जल्पन् तिरोधत्तावसरे च तदब्रवीत् ॥ ६८० ॥
**गंगान्तर्मागधे** तीर्थे नावाऽवतरतः सतः । मकाराद्यक्षरग्रामोपकण्ठे मृत्युरस्ति ते ॥ ६८१ ॥
निर्यद्धूमं जलाद्दृष्ट्वाभिज्ञानं भवता दृढम् । विज्ञेयमुचितं यत्ते तत्प्रेत्यार्थं समाचर ॥ ६८२ ॥
§ २२. तीर्थयात्रामसौ मित्रोपदेशादुपचक्रमे । अलसः को हिते स्वस्य नेच्छेन् सद्गतिमात्मनः ॥ ६८३ ॥
प्रयाणैः प्रवणैः **पुण्डरीकाद्रिं** प्राप भूपतिः । युगादिनाथमभ्यर्च्य कृतार्थं स्वममन्यत ॥ ६८४ ॥
ययौ **रैवतकाद्रिं** च श्रीनेमिं हृदि धारयन् । उपत्यकाभुवं प्राप प्राप्तरेखः सुधीषु यः ॥ ६८५ ॥
तीर्थं प्रणन्तुमानेकानेकादश नरेश्वरान् । अपश्यन्नश्यदातङ्को हयायुतपरिच्छदान् ॥ ६८६ ॥

1 A भूपालाग्रेपि । 2 N B °द्विषन् । 3 A °पादापातादि° । 4 A प्रतितिष्ठन् । 5 N °प्राज्य° । 6 A विग्रहद्विषां । 7 A °सूकरी° । 8 A स विचा° । 9 A °मावसत् । 10 N कृष्टप्रतोलीस्थायिनं जनम् ।

तथैकादशभिः फल्गुवागडम्बरदिगम्बरैः । राक्षसैरिव शाखोटान् कलिनिष्ठैरधिष्ठितान् ॥६८७॥–युग्मम् ।
स्वीकुर्वाणान्महातीर्थं शैलारोहनिषेविनः । असंख्यसैन्यसंख्यायतानाह्वयदिलापतिः ॥ ६८८ ॥
तान् दृष्ट्वा **बप्पभट्टिः** श्रीसुहृद्भूपालमब्रवीत् । धर्मकर्मोद्यमे युद्धात् प्राणिनः को जिघांसति ॥ ६८९ ॥
वागाहवेन जेष्यामि विद्वत्पाशानिमान् नृप ! । नखच्छेद्येऽब्जिनीखण्डे कुठारं कः प्रयोजयेत् ॥ ६९० ॥
ते जिता वादमुद्रायाममुद्रायासमन्तरा । दीपस्य शलभप्लोषे[1] स्तुतिः संस्तूयते हि का ॥ ६९१ ॥
ततोऽपि तानभ्यमित्रानवादीद् विशदाम्बरः[2] । निर्जयादपि[3] चेद् यूयं शमिनो न व्रतादपि ॥ ६९२ ॥
असंख्यव्यन्तराधीशचुम्बितांह्रिनखावलिः । अम्बा श्रीनेमिपादाब्जकादम्बा शासनामरी ॥ ६९३ ॥
आत्मनोरुभयोः कन्यायुग्मं व्यत्ययतः स्थितम् । देवी तदन्तरा येषामेतां[4] संजल्पयिष्यति ॥ ६९४ ॥
तीर्थं तदीयमेवास्तु यस्याम्बा क्रमतोऽमुतः । समर्पयति तत्किं नु वादैरादीनवास्पदैः ॥६९५॥–विशेषकम् ।
उभयाभिमतो जज्ञे व्यवहारोऽयमेतयोः । पक्षयोरक्षयोदग्रप्रभावाम्बालये ततः ॥ ६९६ ॥
ततः कुमारिकां तेषां **बप्पभट्टि**रिहार्पयन् । द्वादशप्रहरान् यावत्तैर्मन्त्रैः साधिवासिता ॥ ६९७ ॥
एडमूकेव[5] नाह स्म कथंचिदथ तेऽवदन् । शक्तिश्चेद् यूयमप्यत्र कन्यां जल्पयताद्य नः ॥ ६९८ ॥
तन्मूर्ध्नि **बप्पभट्टि**श्च करं कमलकोमलम् । ददावम्बा च तद्वक्त्रे स्थिता स्पष्टमुवाच च ॥ ६९९ ॥

**उज्जिंतसेलसिहरे दिक्खा-नाणं निसीहिया जस्स ।**
**तं धम्मचक्कवट्टिं अरिट्ठनेमिं नमंसामि ॥ ७०० ॥**

ततो जयजयध्वानमिश्रो दुन्दुभिरध्वनत् । रोदःकुक्षिंभरिः श्वेताम्बरपक्षोन्नतिप्रदः ॥ ७०१ ॥
ततः प्रभृति गाथेयं चैत्यवन्दनमध्यतः । सिद्धस्तवनकृद्गाथात्रितयादूर्ध्वमादृता ॥ ७०२ ॥
शक्रस्तववदाबालाङ्गनापाठ्याऽत्र मानिता । अष्टापदस्तुतिश्चापि श्रुतवृद्धैः पुरातनैः ॥ ७०३ ॥
ततो **रैवतका**रोहात् समुद्रविजयाङ्गजम् । आनर्चासौ महाभक्त्या[6] मानयन् जन्मनः फलम् ॥ ७०४ ॥
**दामोदरहरिं** तत्राभ्यर्च्यागात् **पिंडतारके** । तथा **माधवदेवे** च **शंखोद्धारे** च तं स्थितम् ॥७०५॥
**द्वारकायां** ततः श्रीमान् कृष्णमूर्तिं प्रणम्य च । तत्र दानादि दत्त्वा श्री**सोमेश्वरपुरं** ययौ ॥ ७०६ ॥
ततः श्री**सोमनाथ**स्य हेमपूजापुरस्सरम् । तल्लोकं प्रीणयामास वासवो जीवनैरिव ॥ ७०७ ॥
पुनः[7] स्वं नगरं प्राप श्री**माना**म**म**हीपतिः । यादृच्छिकं ददौ दानं धर्मस्थानानि च व्यधात् ॥ ७०८ ॥
§२३. प्राप्ते काले सुतं राज्ये **दुन्दुकं** स न्यवेशयत् । प्रकृतीः क्षमयामास पूर्वमानन्दिता अपि ॥ ७०९ ॥
प्रयाणं दत्तवान् **गंगा**सरित्तीरस्थ**मागध**म् । तीर्थं जिगमिषुर्नावमारूढश्च तदन्तरा ॥ ७१० ॥
सूरिणा सह तन्मध्ये दृष्टवान् धूमनिर्गमम् । उप**गंगं** जनाज्जज्ञे **मगटोडा**निवेशनम् ॥ ७११ ॥
प्रतीते व्यन्तराख्याते सूरिरा**हाम**भूपतिम् । जैनधर्मं प्रपद्यस्व प्रान्तेऽपि प्रत्ययोऽस्ति चेत् ॥ ७१२ ॥
राजाह प्रतिपन्नोऽस्मि सर्वज्ञः शरणं मम । देवो गुरुर्ब्रह्मचारी धर्मश्चेत् कृपयोदितः ॥ ७१३ ॥
देवो गुरुश्च धर्मश्च यश्चक्रे व्यावहारिकः । इयद्दिनानि सोऽत्याजि मया त्रिविधशुद्धितः ॥ ७१४ ॥
मम सौहार्दतः पूज्यपादानामपि सांप्रतम् । विधिवद्विग्रहत्याग इह वो नोचिता स्थितिः ॥ ७१५ ॥
परत्रापि यथा लोके समस्यापूरणादिभिः । कालोऽतिवाह्यते सौख्यान्मिलितैरेव निश्चितम् ॥ ७१६ ॥
श्रुत्वेत्याह प्रभुर्मुग्धवागियं स्वस्वकर्मभिः । कस्कः कां कां गतिं गन्ता बुद्ध्यते को जिनं विना ॥ ७१७ ॥

---

1 A शलभाप्लोषे । 2 N A °विशदांवरः । 3 A निर्ययादपि । 4 A येष्वामेतां । 5 A एकमूकेव । 6 N महाभक्तो । 7 N A पुरः ।

युक्तमेतद् व्रतस्थानां नात्मप्राणापरोपणम् । तथातः पञ्चवर्षाणि ममाद्याप्यायुरस्ति च ॥ ७१८ ॥

विक्रमतो वर्षाणां शताष्टके सनवतौ च भाद्रपदे ।
शुक्ले सितपञ्चम्यां चन्द्रे चित्राख्यऋक्षस्थे ॥ ७१९ ॥

तुलाराशौ तथा चन्द्रस्थिते[1]ऽर्के प्रहरेऽन्तिमे । श्राव्यमाणो भृशं पञ्चपरमेष्ठिनमस्क्रियाम् ॥ ७२० ॥

दृढं जिनेशसन्मित्रगुरुपादस्मृतिस्थितः ।
श्रीमान् **नागावलोका**ख्यो राजा प्राप दिवं तदा ॥ ७२१ ॥–विशेषकम् ।

अथ किंचित्सुहृन्मोहात् तत्र स्थित्वौर्द्धदेहिकम् । कारयामास पार्श्वस्थः प्रधानैस्तत्सनाभिभिः ॥ ७२२ ॥
किंचिच्छोकोर्मिसन्तप्त उवाच करुणं तथा । सोद्वेगं च तदीयानां गुणानां संस्मरन् भृशम् ॥ ७२३ ॥

मा भूत् संवत्सरोऽसौ वसुशतनवतेर्मा च ऋक्षेषु चित्रा
धिग्मासं तं नभस्यं क्षयमपि स खलः शुक्लपक्षोऽपि यातु ।
संक्रान्तिर्या च सिंहे विशतु हुतभुजं पञ्चमी या तु शुक्रे
गंगातोयाग्निमध्ये त्रिदिवमुपगतो यत्र नागावलोकः ॥ ७२४ ॥

§ २४. अथ श्री**बप्पभट्टि**श्च **कन्यकुब्जे** मुनीश्वरः । प्राप **दुन्दुक**भूपालाधिष्ठितं तन्निरुद्यमः ॥ ७२५ ॥
सक्तः **कंट्या**ख्यवेश्यायां भूपो **भोजं** निजं सुतम् । भाग्योदयकलाकेलिविलासमपि पापभूः ॥ ७२६ ॥
अभिद्रुह्यति मूढस्तद्वाग्भिर्विगतचेतनः । अविवेकधराधुर्यं धिग् वेश्याजनसंगमम् ॥ ७२७ ॥–युग्मम् ।
तन्माता निजबन्धूनां ज्ञापयामास दुःखिता । संकटे हि कुलस्त्रीणां शरणं शरणं पितुः ॥ ७२८ ॥
समागत्याह्वयंस्ते च पुत्रजन्मोत्सवच्छलात् । आपृच्छ्यायै पुन**र्भोजः** संचचार नृपालये ॥ ७२९ ॥
ज्ञापितो गुरुभिः सौधद्वारे[2] विज्ञाय शस्त्रिणः । निवृत्तो[3] मातुलैः साकं प्रययौ **पाटलीपुरम्** ॥ ७३० ॥
आचार्यमन्यदा राजा **दुन्दुकः** प्राह मत्सरी । मयि प्रसादमाधायानीयतां नन्दनोत्तमः ॥ ७३१ ॥
ततः स ध्यानयोगादिप्रारम्भैरुत्तरोत्तरैः । वाहयामास वर्षाणि पंच[4] पंचत्ववासरम् ॥ ७३२ ॥
ततोऽन्त[5]समये प्राप्ते राज्ञा[6] दृढतरं गुरुः । उपरोध्य सुताह्वानहेतवे प्रैष्यतादरात् ॥ ७३३ ॥
ययौ तन्नगराभ्यासे विममर्श च चेतसि । चेद् **भोजो** नीयते यस्मात् तन्नृपेण स हन्यते ॥ ७३४ ॥
नोचेत् **कंटिक**या बाढं मूर्खोऽसाविति संहितः । शिष्याणां विद्रवैः कर्त्ता शासनस्याप्रभावनाम् ॥ ७३५ ॥
सांप्रतं सांप्रतं मृत्युस्तस्मात् प्रायोपवेशनात्[7] । तच्च कृत्वातिगीतार्थकारिताराधनादृतः ॥ ७३६ ॥
स्वयमध्यात्मयोगेन दिनानामेकविंशतिः । अतिवाह्य क्षुधा-तृष्णा-निद्रादिद्वेषिविग्रही ॥ ७३७ ॥
आत्मानं दशमद्वाराभिरवासयदुद्यतः । ईशाने नाकितां प्राप **बप्पभट्टि**र्मुनीश्वरः ॥७३८॥–विशेषकम् ।

विक्रमतः शून्यद्वयवसुवर्षे[8] ( ८०० ) भाद्रपदतृतीयायाम् ।
रविवारे हस्तर्क्षे जन्माभूद् बप्पभट्टिगुरोः ॥ ७३९ ॥
षड्वर्षस्य व्रतं चैकादशे वर्षे च सूरिता[9] ।
पंचाधिकनवत्या च प्रभोरायुः समर्थितम् ॥ ७४० ॥
शर-नंद-सिद्धिवर्षे ( ८९५ ) नभःशुद्धाष्टमीदिने ।
स्वातिभेऽजनि पंचत्वमामराजगुरोरिह ॥ ७४१ ॥

---

1 B चन्द्रस्थितो । 2 A द्वारि । 3 निर्वृत्तो । 4 A पंचापंच° । 5 N ततोश्च सम° । 6 N राजा । 7 N °वेशने । 8 A °वर्षैः । 9 N सूरिणा ।

इत्याकर्ण्यामराजस्य पौत्रोऽतिस्फारशोकभूः । **भोजः** संकुचिताम्भोजवदनं विललाप च ॥ ७४२ ॥
विवेकौघो[1]ऽविवेकेन जितः[2] सारस्वतं हृतम्[3] । अनुत्सेकस्तिरोधत्त ज्ञाने दत्तो जलांजलिः[4] ॥ ७४३ ॥
इति क्षणं विमृश्यासावादिदेश चिताकृते । प्रेष्यानदूष्यचारित्रो गुरुभक्तिपवित्रितः ॥ ७४४ ॥
पितामहवियोगेऽपि वर्द्धितस्तस्य मित्रतः । अनाथ इव लोकेऽत्र तत्रापि त्रिदिवं गते ॥ ७४५ ॥
ततः क्षणमपि स्थातुं न शक्तः पृथिवीतले । [5]पितृवत्प्रसुहृत्सूरेरनुव्रज्याऽधुनोचिता ॥ ७४६ ॥
मातृपक्षप्रधानानां बोधं चावगणय्य सः । गुरुमृत्युभुवं[6] प्राप गन्ता लीलावने यथा ॥ ७४७ ॥
भुजदण्डे जनन्या च धृत्वाऽथाजल्पि तत्क्षणम् । निर्वीरात्वनिषेधाय राज्यस्य कृपयापि च ॥ ७४८ ॥
स्वसुरद्वयसंहारे जाते ते विद्विषन् पिता । जितंमन्यो महापापी त्वत्प्रजाः पीडयिष्यति ॥ ७४९ ॥
हृदयालुः कृपालुश्च तत् त्वं प्रार्थनया मम । कर्मतो विरमामुष्मात् हृदानन्दन नन्दन[7] ! ॥ ७५० ॥
इति मातुरलंघ्यत्वात् श्री**भोजः** साश्रुलोचनः । उत्तरीयं निचिक्षेप चितायां गुरुपृष्ठतः ॥ ७५१ ॥
अस्तोकशोकसम्भारधारणक्रान्तदेहरुक् । ऊ(औ?)र्द्धदेहिकमाधत्त कृत्यं[8] पैतामहं प्रभोः ॥ ७५२ ॥

§ २९. अन्यदा मातुलैः साकमाकस्मिकदवोपमः । तातं शमयितुं प्रायात् **कन्यकुब्ज**मचिन्तितः ॥ ७५३ ॥
प्रविष्टो[9] गोपुरेणाथ द्राग् राजद्वारसंनिधौ । मालाकारं ददर्शाथ बीजपूरत्रयान्वितम् ॥ ७५४ ॥
तेन ढौकनकं[10] स्वामिपुत्रस्यास्य कृतं तदा । तं गृहीत्वा ययावन्तःसौधं रोधं विशन् विशम्[11] ॥ ७५५ ॥
सह **कंटिक**या तत्रोपविष्टं प्रवरासने । जघान हृदये घातैस्त्रिभिस्तैर्बीजपूरकैः ॥ ७५६ ॥
महाप्राणकृताघातादुभौ प्राणैर्वि(र्व्य)युज्यताम् । प्रागध्यातपुत्रहत्यांहोभीतैरिव विनिर्गतैः ॥ ७५७ ॥
अपद्वाराद् बहिः कृष्ट्वा[12] कोष्टारमिव वेश्मनः । **दुन्दुकं** कन्दुकस्थित्या क्रीडया प्रेरितं[13] नरैः ॥ ७५८ ॥
निस्वानस्वानपूर्वं सोऽविशन् कंठीरवासने । प्रणतः सर्वसामन्तैः [14]सपौरैर्मन्त्रिभिस्तथा ॥ ७५९ ॥
श्रीम**दामविहारा**ख्यतीर्थं नन्तुं ययौ नृपः । तत्र शिष्यद्वयं दृष्टं **बप्पभट्टे**र्महामुनेः[15] ॥ ७६० ॥
विद्याव्याक्षेपतस्ताभ्यां न चक्रे भूमिपोचितम् । अभ्युत्थानादिसन्मानं श्री**भोजो**ऽथ व्यचिन्तयत् ॥ ७६१ ॥
अज्ञातव्यवहारौ हि शिष्यावेतौ प्रभोः पदे । न युज्येते यतो विश्वे व्यवहारो महत्वभूः ॥ ७६२ ॥
श्री**नन्नसूरि**राचार्यः श्रीमान् **गोविन्द** इत्यपि । आहूय पूजितौ राज्ञा पट्टे च स्थापितौ प्रभोः ॥ ७६३ ॥
**मोढेरे** प्रहितो **नन्नसूरिः** सूरिगुणोन्नतः[16] । पार्श्वे **गोविन्दसूरि**श्चावस्थाप्यत नृपेण तु ॥ ७६४ ॥
**भोजराज**स्ततोऽनेकराज्यराष्ट्रमहाग्रहः[17] । **आमा**दभ्यधिको जज्ञे जैनप्रवचनोन्नतौ ॥ ७६५ ॥

**बप्पभट्टिर्भद्रकीर्त्तिर्वादिकुञ्जरकेसरी ।**
**ब्रह्मचारी गजवरो राजपूजित इत्यपि ॥ ७६६ ॥**

विख्यातो विरुदैर्जैनशासनक्षीरसागरे । कौस्तुभः[18] कृतसंस्थानः पुरुषोत्तमवक्षसि ॥ ७६७ ॥
जयताज्जगतीपीठे धर्मकल्पद्रुमाङ्कुरः । इदानीमपि यन्नाममन्त्रो जाड्यविषापहः ॥७६८॥–त्रिभिर्विशेषकम् ।

ॐ

1 A विवेकांढ्यौ । 2 A जितसार° । 3 N हितं । 4 A जलांजलि । 5 N पितृवत्तु । 6 A गुरुभृत्यभुवं । 7 A नन्दनः । 8 A कृतं । 9 N प्रतिष्ठो । 10 A ढौकनके । 11 N दिशत्विषाम् । 12 A कृत्वा । 13 N प्रेषितं । 14 A सपूरै° । 15 A महामतिः, B महामतिं । 16 N सूरिगणो° । 17 N राज्यभ्रष्टमहग्रहः । 18 A B कौस्तुभकृतसंस्थान° ।

इत्थं श्रीबप्पभट्टिप्रभुचरितमिदं विश्रुतं विश्वलोके
प्राग्विद्वत्ख्यातशास्त्रादधिगतमिह यत् किंचिदुक्तं तदल्पम् ।
पूज्यैः क्षन्तव्यमत्रानुचितमभिहितं यत्तथा तत्प्रसादात्
एतत्सर्वाभिगम्यं भवतु जिनमतस्थैर्यपात्रं ध्रुवं च ॥ ७६९ ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीबप्पभट्टेः कथा
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गः किलैकादशः ॥ ७७० ॥
दुष्कर्मजैत्रः पुरुषोत्तमाङ्गाज्जन्माविशुद्धाक्षरहेतुमूर्त्तिः ।
गिरीशतुङ्गाध्वपुरःस्थितश्रीः प्रद्युम्नदेहः शिवतातिरस्तु ॥ ७७१ ॥



श्रीकन्यकुब्जक्षितिपप्रबोधकर्त्तुस्तथा पूर्वगतश्रुतेन ।
विश्वे समस्तानवपाठबन्धैः श्रीभद्रकीर्तेर्नरिनर्ति कीर्त्तिः* ॥ ७७२ ॥

॥ ग्रंथा० ८२०, † उभयं २९४० ॥

---

* A आदर्शे नोपलभ्यते पद्यमिदम् । † B आदर्शे इयं संख्या '८४०,' तथा '२९६०' प्रमिता ।

# १२. श्रीमानतुङ्गसूरिचरितम् ।

§१. प्रभोः श्री**मानतुङ्ग**स्य देशनायां रदत्विषः । जयन्ति ज्ञानपाथोधिशारदेन्दुसहोदराः ॥ १ ॥
नित्यं योजनलक्षेण वर्णनीयः[1] सुवर्णरुक् । **मानतुङ्गः** प्रभुः पातु मेरुः सौमनसाश्रितः ॥ २ ॥
अस्यैवाबाह्यमैतिह्य[2]मप्रणाय्यं [3]जगत्यपि । निकाय्यं[4] तीर्थशृङ्गारप्रकर्षस्य प्रकीर्त्यते ॥ ३ ॥
सदा सुरसरिद्वीचीनिचयाचान्तकश्मला । पुरी [5]**वाराणसी**त्यस्ति साक्षादिव दिवःपुरी ॥ ४ ॥
आसीत् कोविदकोटीरमर्थिदारिद्र्यपारभूः । तत्र श्री**हर्षदेवा**ख्यो राजा नतु कलङ्कभृत् ॥ ५ ॥
**ब्रह्मक्षत्रिय**जातीयो **धनदेवा**भिधः सुधीः । श्रेष्ठी तत्राभवद् विश्वप्रजाभूपार्थसाधकः ॥ ६ ॥
तत्सुतो **मानतुङ्गा**ख्यो विख्यातः [6]सत्त्वसत्यभूः । अवज्ञातपरद्रव्यवनितावितथाग्रहः ॥ ७ ॥
सन्तीह मुनयो जैना नग्ना [7]भग्नस्मराधयः । तच्चैत्ये जग्मिवानन्यदिवसे विवशेतरः ॥ ८ ॥
वीतरागप्रभुं नत्वा गत्वा गुरुपदान्तिकम् । प्राणमद्धर्म्मवृद्ध्याशीर्वादेन गुरुणार्हितः ॥ ९ ॥
महाव्रतानि पंचास्योपादिशन्नग्नतां तथा । ऊर्णकार्प्पासकौशेयशौम्बा[8]वृतिनिषेधतः ॥ १० ॥
इत्याद्यनेकधा धर्म्ममार्गाकर्णनतस्तदा । वैराग्यरङ्गिणो **मानतुङ्गस्य** व्रतकांक्षिणः ॥ ११ ॥
तन्मातापितरौ पृष्ट्वाऽऽचार्यस्तस्य व्रतं ददौ । **चारुकीर्तिर्महाकीर्ति**रित्यस्याख्यां ददौ च सः ॥ १२ ॥
स्त्रीणां न निर्वृतिर्मान्या भुक्तिः[9] केवलिनोऽपि हि । द्वात्रिंशदन्तरायाणि बुबुधे च बुधेश्वरः ॥ १३ ॥
कृतलोचस्ततो हस्तस्थिततोयकमण्डलुः । [10]सन्त्यक्तसर्वावरण[11] ईर्यासमितिसंयुतः ॥ १४ ॥
गृहस्थावसथोर्द्धस्थावस्थानकृतभोजनः । मायूरपिच्छिकाहस्तो मौनकालेषु मौनवान् ॥ १५ ॥
सदा निःप्रतिकर्म्मासौ प्रतिक्रमणयोर्द्वयोः । दक्षो गुरुकनीयस्त्वे[12] दुष्करं[13] कुरुते व्रतम् ॥१६॥—विशेषकम् ॥

§२. अस्य स्वसृपतिर्**लक्ष्मीधरो** लक्ष्मीवरस्थितिः । आस्तिकानां शिरोरत्नमत्रासीद् विस्फुरद्यशाः ॥ १७ ॥
दृढभक्त्या स चर्यार्थमन्यदोपनिमन्त्रितः । महर्षिस्तेन काले च[14] मध्ये तद्गृहमागमत् ॥ १८ ॥
अशोधनप्रमादेनानुमन्धानाज्जलस्य च । नैके संमूर्छितास्तत्र पूतरास्तत्कमण्डलौ ॥ १९ ॥
गण्डूषार्थमृषिर्यावच्चुलुके जलमाददे । ददर्श तान् स्वसा प्राह लीना श्वेताम्बरव्रते ॥ २० ॥
व्रते कृपाभरः[15] सारस्तदमी द्वीन्द्रियास्त्रसाः । विपद्यन्ते प्रमादाद् वस्तज्जैनसदृशं नहि ॥ २१ ॥
लज्जावरणमात्रेऽत्र वस्त्रखण्डे परिग्रहः । ताम्रपात्रे कथं न स्याद् यादृच्छिकमिदं किमु ॥ २२ ॥
धन्याः श्वेताम्बरा जैनाः प्राणिरक्षार्थमुद्यताः । न सन्निदधते नीरमपि रात्रौ क्रियोद्यताः ॥ २३ ॥
अचेलाश्च सचेलाश्च नावधारणदुर्नयम् । आद्रियन्ते स्म निःसङ्गाः परमार्थकृतादराः ॥ २४ ॥
पञ्चाश्रवेन्द्रियार्थानां परिहारपरायणाः । गुप्तिभिस्तिसृभिर्गुप्ताः स्थिताः[16] समितिपंचके ॥ २५ ॥
—त्रिभिर्विशेषकम् ॥

इत्याकर्ण्य मुनिः प्राह प्राञ्जलं शृणु मद्वचः । गृहवासपरित्यागो मया पुण्यार्थिना कृतः ॥ २६ ॥
आस्तामन्यः[17] समाचारो यत्र जीवदयापि न । तेन धर्मेण किं कुर्वे श्रीसर्वज्ञविरोधिना ॥ २७ ॥
अत्र देशे समायान्ति दुःप्रापाः[18] श्वेतभिक्षवः । सा प्राह मध्यदेशात्ते समायास्यन्ति सांप्रतम् ॥ २८ ॥

1 A वर्णनीय° । 2 'अनादिवार्ता' इति D टिप्पणी । 3 'संमत°' इति D टि० । 4 'निवासः' इति D टि० । 5 A वाणारसी । 6 A सत्यसत्त्वभूः । 7 A नम° । 8 N शौचावृत्ति° । 9 N मुक्तिः । 10 N सत्यक्त° । 11 B °सर्वाचरण; N °सर्वाभरण । 12 N कनीयश्चेदुःकरं° । 13 A दुःव्रतं । 14 N कालेन । 15 N कृपारसः । 16 N स्थितिः । 17 A अन्यसमा° । 18 N दुःप्राया ।

साङ्गत्यं कारयिष्यामि तव तैः सह निश्चितम् । तपसा निर्मलेनाशु भवं पावयसे यथा ॥ २९ ॥
इदानीं क्वापि कूपादौ रहो जलमिदं त्यज । शासनस्य यथा म्लानिर्न भवेल्लघुताकरा[1] ॥ ३० ॥
विराधना पुनर्जीवगणस्यात्र भवेद्ध्रुवम् । अपरापरनीरोत्थजीवा अन्योऽन्यविद्विषः ॥ ३१ ॥
श्रुत्वेति तद्वचोऽकार्षीद् भृशं विप्रतिसारतः* । भोजितः परया भक्त्या बोधितश्चाश्रयं ययौ ॥ ३२ ॥
अन्यदा[2]ऽ**जितसिंहा**ख्याः सूरयः पुरमाययुः । पुरा श्रीपार्श्वतीर्थेशकल्याणकपवित्रिताम् ॥ ३३ ॥
**गङ्गा**तीरस्थमुद्यानमुद्दामं शिखरित्रजैः । शिश्रियुर्ज्ञानसंयुक्तास्त्रिदशा इव नन्दनम् ॥ ३४ ॥
तया च ज्ञापिते श्राद्धकान्तया सोदरो मुनिः । श्रुत्वा समाययौ तत्र गुरूणां सङ्गतस्तदा ॥ ३५ ॥
पूर्वर्षिभिः समाचीर्णा सामाचारी न्यवेद्यत । तैस्तदग्रे च पीयूषवत् तां सोऽथादनोऽशृणोत् ॥ ३६ ॥
गुरुभिर्दीक्षित[3]श्चासौ नदीष्णोऽग्रेऽपि च क्वचित् । तपस्याविधिपूर्वं चागममध्याप्यतादरात् ॥ ३७ ॥
ततः प्रतीतिभृत् सम्यक्तपःश्रुतसमर्जनात् । योग्यः सन् गुरुभिः सूरिपदे गच्छादनः कृतः ॥ ३८ ॥
क्लिष्टकाव्यभ्रमिश्रान्ता देवी वाचामधीश्वरी । यद्वचोऽमृतसंसिक्ता परमानन्दभूरभूत् ॥ ३९ ॥
स तदातनकालीयलीनज्ञानक्रियोन्नतिः । अभूदभूमिरुन्निद्रोपद्रवान्तरविद्विषाम् ॥ ४० ॥

§ ३. इतश्च पुरि तत्रासीद् वेदवेदाङ्गपारगः । विरिंचिरिव मूर्तिस्थो भूदेवः पार्थिवार्चितः ॥ ४१ ॥
कोविदानां शिरोरत्नं **मयूर** इति विश्रुतः । प्रत्यर्थिकविसर्पाणां[4] मयूर इव दर्पहृत् ॥ ४२ ॥–युग्मम् ।
दुहिता मुहिता रूपशीलविद्यागुणोदयैः । तस्य सत्या उमा-गङ्गा-लक्ष्मीदेव्यो यदीक्षणात् ॥ ४३ ॥

**पङ्के पङ्कजमुज्झितं कुवलयं चापारनीरे ह्रदे**
**बिम्बी चापि वृतेर्बहिः प्रकटिना क्षिप्तः शशी चाम्बरे ।**
**यस्याः पाणिविलोचनाधरमुखान् वीक्ष्य स्वसृष्टिर्विधे-**
**रुच्छिष्टेव पुरातनी समभवद् दैवाद् विधायेह ताम् ॥ ४४ ॥**

अद्भुतं कुलरूपाद्यैस्तस्याः समुचितं वरम् । सर्वत्रालोचयन् सम्यगप्राप्तावार्तिमासदत्[5] ॥ ४५ ॥
तर्कलक्षणसाहित्यरसास्वादवशैकधीः । अनूचानो महाविप्रो **बाणाख्यः** प्राग्गुणान्वितः ॥ ४६ ॥
प्रख्यातवक्रकः[6] कामाभिरामाकारधारकः । दृष्टे तत्र **मयूरो**ऽभूद् [7]वारिदाडम्बरे यथा ॥ ४७ ॥
संमान्योद्वाहयामास तां सुतां तेन[8] वैभवात् । अनुरूपवरप्राप्तिसुता[9] पित्रापि दुस्त्यजा ॥ ४८ ॥
ततः[10] **श्रीहर्षभूपस्य**[11] दर्शितो दुहितुः पतिः । आशिषोदितया तस्योदितया तोषमाप च ॥ ४९ ॥
तस्यावासः पृथक् चक्रे धनधान्यादिसम्भृतः । एवं राजार्हितौ[12] तौ द्वौ साङ्गत्यं[13] प्रापतुः सदा ॥ ५० ॥

§ ४. **बाणो**ऽन्यदा समं पत्न्या स्नेहतः कलहायितः । सिता हि मरिचक्षोदाद् ऋते भवति दुर्जरा ॥ ५१ ॥
पितुर्गृहमगाद् रुष्टा **बाणपत्नी** मदोद्धुरा । सायं तद्गृहमागत्य भर्त्ता प्राहानुनीतये ॥ ५२ ॥

तद्यथा–

**मानं मुञ्च स्वामिनि ! शत्रुं जगतो विनाशितस्वार्थम् ।**
**सेवक-कामुक-परभवसुखेच्छवो नावलेपभृतः ॥ ५३ ॥**

वासागाराद्बहिः प्रेष्यः पण्डितं तां सखी जगौ । वाग्भङ्गीभिस्ततो मानामुचि तस्याम[दो]ऽवदत् ॥ ५४ ॥

---

1 N °करी । * 'अनुशयात्' इति D टि० । 2 N जिनसिंहा° । 3 A B D °वीक्षित° । 4 B D प्रत्यर्थिसर्पदर्पाणां । 5 A सम्यग् प्राप्तावार्त्तिं समासदत् । 6 N प्रख्यानवक्रकः । 7 N मयूरोभूद्वारिद्राडंबरे । 8 N नैव । 9 N °प्राप्तिः । 10 B D तत्र; N यत्र । 11 N °देवस्य । 12 A D राजार्हतौ । 13 N संगत्य ।

उक्तं च–

**लिखन्नास्ते भूमिं बहिरवनतः प्राणदयितो**
**निराहाराः सख्यः सततरुदितोच्छूननयनाः ।**
**परित्यक्तं सर्वं हसितपठितं पञ्जरशुकै-**
**स्तवावस्था चेयं विसृज कठिने मानमधुना ॥ ५५ ॥**

विलक्षीभूय साऽप्याह[1] बहिरागत्य कोविदम् । भवने प्रविशामोऽस्यामुक्त्वा[2] वयमुपानहौ ॥ ५६ ॥
एतस्यां मौनमालम्ब्यावस्थितायां पुनस्ततः । विद्वानविद्वन्मन्योऽसौ बहुप्रातर्जगाद च ॥ ५७ ॥

तद्यथा[3]–

**गतप्राया रात्रिः कृशतनुशशी शीर्यत इव**
**प्रदीपोऽयं निद्रावशमुपगतो घूर्णित इव ।**
**प्रणामान्तो मानस्तदपि न जहासि क्रुधमहो**
**कुचप्रत्यासत्त्या हृदयमपि ते सुभ्रु ! कठिनम् ॥ ५८ ॥**

तद्भित्तिपरतः सुप्तोऽवकाशे तत्पिता तदा । जजागारातिसम्भ्रान्तः काव्यं श्रुत्वेत्युवाच च ॥ ५९ ॥
स्थाने त्वं 'सुभ्रु'शब्दस्य 'चंडी'त्याख्यामुदाहरेः । यतोऽस्या दृढकोपायाः शब्दोऽयमुचितः खलु ॥ ६० ॥
इत्याकर्ण्य पितुर्वाचं लज्जाभरनताननना । विममर्श निशावृत्तं विश्वं मे जनकोऽश्रृणोत् ॥ ६१ ॥
धिग्मां मूर्खामविज्ञातकारिणीमित्यकुत्सयत् । आत्मानं सा ततो वप्रर्यमर्षं च व्यधाद् घनम् ॥ ६२ ॥
मदं मुक्त्वा च सा प्रेम भर्त्तरि स्थिरमादधे[4] । गङ्गा हिमवतो गर्जे यथा शीतांशुशेखरे ॥ ६३ ॥
अहं[5] शैशवतो भ्रान्ता यद्यसौ विद्वदग्रणीः । जनकोऽनुचिताधायी विमन्दाक्षः कथं किल ॥ ६४ ॥
इदं किमुचितं वक्तुं कुलीनानां हि तादृशाम्[6] । मातृ-स्वसृ-दुहितॄणामवाच्यं नहि वाच्यभूः ॥ ६५ ॥
शशाप कोपाटोपेन पितरं प्रकटाक्षरम् । कुष्ठी भव क्रियाभ्रष्टावज्ञातौरसनात्रकः ॥ ६६ ॥
तस्याः शीलप्रभावेण सद्यः श्वेताङ्गचन्द्रकैः । कलाप्यग्रे मयूरोऽग्रे तदा जज्ञे स चन्द्रकी ॥ ६७ ॥
सागान्निजगृहं **बाणं** बिभ्रती सक्तिमादरात् । पितुर्दुर्वचनं तस्याः सान्त्वनाय तदाऽभवन् ॥ ६८ ॥
सद्यः कुष्ठं समालोक्य[7] पश्चात्तापार्त्तिविद्रुतः[8] । अवाङ्मुखो गृहेऽस्थात्सीन्न[9] ययौ राजपर्षदि ॥ ६९ ॥
पञ्चषान् वासरान्नासौ जगाम क्ष्मापमन्दिरे । **बाणो**ऽपि कुपितस्तस्य बहून् दोषानभाषत ॥ ७० ॥
भोगिभोग[10]विनाशैकप्रतिज्ञो मलिनाङ्गभृत् । सुहृत्समागमे लज्जास्थानं प्रकटयन् सदा ॥ ७१ ॥
असौ मेघसुहृन्मेघसुहृच्चन्द्रकितस्तनौ । चित्रश्चित्रात्सभायोग्यो भूपानां नैनसां निधिः ॥ ७२ ॥
राजा श्रुत्वेति किं सत्यं **मयूरः** कुष्ठदूषितः । इति चित्रात् समाहूतवांस्तं निजनरैः प्रभुः ॥ ७३ ॥
कृतावगुण्ठनः पट्या[11] स संवीताङ्गमण्डनः । उपभूपतिमागच्छदनिच्छन् स्थानमत्र च ॥ ७४ ॥
**बाणे**नोचे स्फुटं दृष्ट्वा **मयूरं** प्राकृतादथ । शीतरक्षाङ्गसंव्यानं 'वरकोढी'ति संसदि ॥ ७५ ॥
पुनर्निजं गृहं गत्वा व्यमृशच्चेतसि स्थिरम् । कलङ्कपङ्किलानां हि नोचिता सहृदां[12] सभा ॥ ७६ ॥
सहक्रीडितसंघेऽस्मिन् ये तिष्ठन्त्यङ्कशङ्किताः । भूखङ्गच्छिन्नमेते किं स्वं मूर्द्धानं न जानते ॥ ७७ ॥
वैराग्यात् त्यज्यते देहः सतां तदपि नोचितम् । दुःखानामसहिष्णुत्वात् स्त्रीवत्कातरता हि सा ॥ ७८ ॥
सुरः सनातनप्रीतिहार्यः कश्चित्कलानिधिः । आराध्यते प्रसादेन यस्य देहो नवो भवेत् ॥ ७९ ॥

1 N D साथाह । 2 A °मुक्त्वा । 3 A तच्च । 4 N °मादधौ । 5 N अहो । 6 N तादृशैः । 7 N तदालोक्य । 8 N विह्वलः । 9 N खेऽस्थान्न । 10 A °भाग° । 11 D N पद्यः । 12 N सुहृदां ।

सहस्रकिरणः कर्मसाक्षी ध्येयो मयास्य यत्। दृश्येते सफले साक्षादाराधनविराधने ॥ ८० ॥
षट्पादं रज्जुयन्त्रं सोऽवलम्ब्यात्रोपविष्टवान्। गर्त्तं च खदिराङ्गारैरधोऽर्चिभिरपूरयत् ॥ ८१ ॥
शार्दूलवृत्तमेकैकमुक्त्वा शस्त्रिकयाच्छिनत्। पादमेवं च काव्येषु पञ्चसूक्तेषु[1] कृष्टिना ॥ ८२ ॥
छिन्दतः शेषपादं च मार्त्तण्डो व्यक्ततेजसा। आगत्यास्य ददौ देहं मंक्षु विध्यापितोऽनलः ॥ ८३ ॥
काव्यानां शततः सूर्यस्तुतिं संविदधे ततः। देवान् साक्षात्करोति स्म येषामेकमपि स्मृतम् ॥ ८४ ॥
श्रीभानुस्तोपतस्तस्य नीरुजं देहमातनोत्। सार्द्धषोडशवर्णिक्यदीप्यत्कनकभास्वरम् ॥ ८५ ॥
प्रातः प्रकटदेहोऽसावाययौ राजपर्षदि। **श्रीहर्षराजः** पप्रच्छासीत् ते किं रुग् नवा वद ॥ ८६ ॥
आसीद् देव! परं ध्यातः सहस्रकिरणो मया। तुष्टो देहं ददावद्य भक्तेः किं नाम दुष्करम् ॥ ८७ ॥
तदा च **बाण**पक्षीयैः सासूयैरिव पण्डितैः। जगदे किंचिदत्युग्रं [2]प्राग्वृत्तश्रुतितः स्फुटम् ॥ ८८ ॥

तथा हि–

**यद्यपि हर्षोत्कर्षं विदधति मधुरा गिरो मयूरस्य।**
**बाणविजृम्भणसमये तदपि न परभागभागिन्यः ॥ ८९ ॥**

राजाह सत्यमेवेदं गुणी गुणिषु मत्सरी। यूयमत्रापि सासूया ब्रूमहेऽत्र वयं किमु ॥ ९० ॥
वैद्यौषधं विना येन प्राञ्जलेनैव चेतसा। सूर्य आराधितो भक्त्या कवित्वैर्देहमातनोत् ॥ ९१ ॥
परितोषं परं प्राप सविता यद्वचःक्रमैः। के वयं मानुषास्तत्राहारादिकलुषाकुलाः ॥ ९२ ॥
**बाणः** प्राह प्रभो! प्रायः कृतपक्षं किमुच्यते। अस्य कः किल शृङ्गारो देवस्यातिशये स्फुटे ॥ ९३ ॥
एवंजातीयमाश्चर्यातिशयं कोऽपि दर्शयेत्। अपरो यदि चेच्छक्तिः कः प्रत्यर्थी शुभायतौ ॥ ९४ ॥
इति राज्ञो वचः श्रुत्वा **बाणः** प्राहातिसाहसात्। हस्तौ पादौ च संछिद्य चण्डिकावासपृष्ठतः ॥ ९५ ॥
मां परानयतु स्वामी तत्र मुक्तोज्झितः स्थिरम्। यथाऽमुष्मादतिप्रौढि प्रातिहार्यं प्रदर्शये[3] ॥ ९६ ॥–युग्मम्।
अवादीच्च **मयूरो**ऽपि तथाप्यस्यानुकम्पया। मयि प्रसद्य भूपाल मा कार्षीरेनमीदृशम् ॥ ९७ ॥
यतो मद्दुहितुः कष्टं व्यङ्गशुश्रूषणाद् भवेत्। आजन्म तन्ममामीलं विलगेत प्रभो! दृढम् ॥ ९८ ॥
श्रुत्वा च भूपतिर्भक्तिं **मयूरे** बिभ्रदद्भुताम्। **बाणे** कोपं वहन् प्राह तथा कौतूहलं महत् ॥ ९९ ॥
कर्त्तव्यमेव **बाण**स्य गीःप्राणस्य कवेर्वचः। पाणिपादं नवं चेत् स्यादस्य स्फारं तदा यशः ॥ १०० ॥
अन्यथा चेत् तथास्फारवचसां भज्यते भणिः[4]। यदृच्छावचसां नावकाशो राज्ञां हि पर्षदि ॥ १०१ ॥
अथवा सूर्यमाराध्य त्वमेनमपि[5] पण्डितम्। विमदं निर्विषं नागमिव प्रगुणमाचरे ॥ १०२ ॥
उक्त्वा चैवं कृते राज्ञा चण्डीं स्तोतुं प्रचक्रमे। **बाणः** काव्यैरतिश्रव्यैरुद्दामाक्षरडम्बरैः ॥ १०३ ॥
ततश्च प्रथमे वृत्ते निवृत्ते सप्तमेऽक्षरे। सधामा[6] तन्मुखी भूत्वा देवी प्राह वरं वृणु ॥ १०४ ॥
विधेहि[7] पाणिपादं मे इत्युक्तिसमनन्तरम्। संपूर्णावयवः[8] शोभाप्रत्यग्र इव निर्जरः ॥ १०५ ॥
महोत्सवेन भूपालमन्दिरं स समीयिवान्। राज्ञा पुरस्कृतौ प्रीतिहार्येऽस्थातामुभावपि ॥ १०६ ॥
ततो विवदमानौ च निवर्त्तेते पुरा क्रुधा। भूप एवं ततः प्राह निर्णयो नानयोरिह ॥ १०७ ॥
वाग्देवी मूलमूर्त्तिस्था यत्रास्ते तत्र गम्यताम्। उभाभ्यामपि **काश्मीर**नीवृति[9] **प्रवरे** पुरे ॥ १०८ ॥
जयः पराजयो वाऽस्तु स्वामिन्यैव कृतोऽनयोः। प्रत्यवायं सचैतन्यः को हि स्वस्यानुपञ्जयेत् ॥ १०९ ॥
यः पराभूतिमाप्नोति तद्ग्रन्थाः प्राङ्गणे मम। प्रज्वाल्य पुस्तकस्तोमं[10] विनाश्या अस्त्वमौ पणः ॥ ११० ॥

---

1 N पंचसूक्तेन। 2 N वाग्वृत्त°। 3 B D N प्रतिश्रये। 4 A भलिः। 5 A त्वमेवमपि। 6 N समाधौ। 7 N विदेहि। 8 B D °वयवशोभा°। 9 N °निवृत्ति°। 10 A °स्तोकं।

# १८. श्रीसूराचार्यचरितम् ।

**सूराचार्यः** श्रिये श्रीमान् सुमनःसङ्घपूजितः । यत्प्रज्ञया सुराचार्यो मात्राधिकतया जितः ॥ १ ॥

**सूराचार्य**प्रभोरत्र ब्रूमः किं गुणगौरवम् । येन श्री**भोजराज**स्य सभा प्रतिभया जिता ॥ २ ॥

चरित्रं चित्रवत्तस्य[1] सुधीहृद्भित्तिषु स्थितम् । ज्ञात्वा वर्णोज्ज्वलं व्याख्यायते स्थैर्याय चेतसः ॥ ३ ॥

§ १. **अणहिल्लपुरं** नाम **गूर्जरा**वनिमण्डनम्[2] । अस्ति प्रशस्तिवत् पूर्वभूपालनयपद्धतेः ॥ ४ ॥

प्रतापाक्रान्तराजन्यचक्र[3]श्चक्रेश्वरोपमः । श्री**भीम**भूपतिस्तत्राभवद् दुःशासनार्दनः ॥ ५ ॥

शास्त्रशिक्षागुरु**र्द्रोणाचार्यः** सत्याक्षतव्रतः । अस्ति क्षात्रकुलोत्पन्नो नरेन्द्रस्यास्य मातुलः ॥ ६ ॥

तस्य **संग्रामसिंहा**ख्यभ्रातुः पुत्रो महामतिः[4] । **महीपाल** इति ख्यातः प्रज्ञाविजितवाक्पतिः ॥ ७ ॥

तत्ताते ऽस्तंगते दैवाद् बाल्य एव प्रभोः पुरः । तन्माता भ्रातृपुत्रं स्वं प्रशाधीति प्रभुं जगौ ॥ ८ ॥

निमित्तातिशयाज्ज्ञात्वा तं शासनविभूषकम् । आदराज्जगृहुर्भ्रातृजायां सन्तोष्यवाग्भरैः ॥ ९ ॥

शब्दशास्त्रप्रमाणानि साहित्यागमसंहिताः । अमिलन् स्वयमेवास्य साक्षिमात्रे गुरौ स्थिते ॥ १० ॥

स्नेहादेव गुरोः पार्श्वममुञ्चन् जगृहे व्रतम् । स्वपट्टे स्थापयेन्मंक्षु तादृशा नोचितातिगाः ॥ ११ ॥

वार्त्तमानिकशास्त्राम्भोरुहभासुर[5]भानुमान् । जनाज्ञानतमश्छेदी **सूराचार्यः** स विश्रुतः ॥ १२ ॥

§ २. अथ श्री**भोजराज**स्य वाग्देवीकुलसद्मनः । कलासिन्धुमहासिन्धोर्विद्वल्लीलामहौकसः ॥ १३ ॥

प्रधाना आजग्मिवांसः[6] श्री**भीम**नृपपर्षदम् । गाथामेकामजल्पंश्च निजनाथगुणाद्भुताम्* ॥ १४ ॥—युग्मम् ।

तथा हि—

**हेलानिद्दलियगइंदकुंभपयडियपयावपसरस्स ।**
**सीहस्स मएण समं न विग्गहो नेय संधाणं ॥ १५ ॥**

हेलया तदवज्ञाय तेषां सन्मानमादधे । आवास-भुक्तिवृत्त्याद्यैर्भूपस्थानं च ते ययुः ॥ १६ ॥

गतेषु तेषु भूपालः स्वप्रधानानिहादिशत् । शोध्यः प्रत्युत्तरार्थाय विपश्चित् कश्चिदद्भुतः ॥ १७ ॥

स्वस्वमत्यनुमानेन प्रत्यार्याः कविभिः कृताः । न चमत्कारिणी राज्ञस्तासामेकाऽपि चाभवत् ॥ १८ ॥

सर्वदर्शनिशालासु चतुष्के चत्वरे त्रिके । हर्म्यचैत्येषु गच्छन्ति ते तत्[7] प्रेक्षाकुतूहलात् ॥ १९ ॥

श्रीमद्**गोविन्दसूरी**णां चैत्ये ते चान्यदा ययुः । तदा पर्वणि कुत्रापि तत्रासीत् प्रेक्षणक्षणः ॥ २० ॥

अङ्गहारप्रकारैश्च त्रिपताकादिहस्तकैः । तत्र नर्नर्ति लास्येन ताण्डवेन च नर्तकी ॥ २१ ॥

आतोद्यतालसंवादसपत्न[8]विषमासनैः । श्रान्ता श्लक्ष्णोपलस्तम्भं स्पर्शे म्रक्षणवन्मृदुम् ॥ २२ ॥

आशिश्लेष नटी स्वेदहृतये पवनार्थिनी । तत्काठिन्यप्रकर्षस्य द्रावणायेव निर्भरम् ॥ २३ ॥—युग्मम् ।

व्यजिज्ञपन् विशिष्टाश्च श्री**गोविन्दाय** सूरये । इमामीदृगवस्थानां वर्णयध्वं[9] प्रभो! स्फुटम् ॥ २४ ॥

**सूराचार्यं** च तत्रस्थं तदुत्कीर्तनहेतवे । तं तदा दिदिशुः पूज्यास्तत्क्षणाच्चाथ सोऽब्रवीत् ॥ २५ ॥

तद्यथा—

**यत् कङ्कणाभरणकोमलबाहुवल्लिसङ्गात् कुरङ्गकदृशोर्नवयौवनायाः ।**
**न स्विद्यसि प्रचलसि प्रविकम्पसे त्वं तत् सत्यमेव दृषदा ननु निर्मितोऽसि ॥ २६ ॥**

---

1 N चित्रकृत्तस्य । 2 N D मण्डलम् । 3 N चक्रं । 4 N महीपतिः । 5 N B °रुहाभासनभानु° । 6 A D आजग्मांस । * 'धराजानिजनाद्भुताम्' इति A D । 7 N ततः । 8 N °सम्पन्न° । 9 A वर्णय त्वं ।

तत्कालं ते नृपायेदं गत्वा हृष्टा न्यजिज्ञपन् । **गोविन्दाचार्य**पार्श्वेऽस्ति कविः प्रत्युत्तरक्षमः ॥ २७ ॥ भूपालः प्राह सौहार्दभूमिः सूरिरसौ हि नः । समानयत सन्मान्य [1]सत्कविं तं गुरुं ततः ॥ २८ ॥ आदेशानन्तरं ते श्री**गोविन्द**स्याश्रयं ययुः । आजूहवंश्च तं[2] सोऽपि भूपसंसदमाययौ ॥ २९ ॥ **सूराचार्यं** च पार्श्वेऽस्य दृष्ट्वा भूपः प्रमोदभूः । मन्मातुलस्य पुत्रोऽसौ सम्भाव्यं सर्वमत्र तत् ॥ ३० ॥ आशीर्वाद्योपविष्टश्च[3] सूरिर्भूपार्हे आसने । श्री**भोज**प्रहितां गाथां विद्वद्भिः श्रावितस्ततः ॥ ३१ ॥ तदनन्तरमेवाथ **सूराचार्य** उवाच च । कोऽवकाशो विलम्बस्य तादृक्पुण्योदये सति ॥ ३२ ॥

तथा हि—

**अंधयसुयाणकालो भीमो पुहवीइ निम्मिओ विहिणा ।**
**जेण सयं पि न गणियं का गणणा तुज्झ इक्कस्स ॥ ३३ ॥**

इत्यार्यां[4] **भीम**भूपालः श्रुत्वा रोमाञ्चकञ्चुकी । **धारा**धिपप्रधानानां द्रुतं प्राजीहयत् करे ॥ ३४ ॥ श्री**भोज**स्तां प्रवाच्याथ[5] विममर्शेति चेतसि । ईदृक्कविभवो देशः स कथं परिभूयते ॥ ३५ ॥ सूरिः श्री**भीम**राजेन सम्मान्येति व्यसृज्यत । किं कुर्यात् त्वयि पार्श्वस्थे श्री**भोजो** विदुषां निधिः ॥३६॥

§ ३. अन्यदा गुरुभिः शिष्याध्यापनेऽसौ न्ययोज्यत । कारयन्ति गुणा[6] एव प्रतिष्ठां पुरुषाकृतेः ॥ ३७ ॥ कुशाग्रीयमतिः शास्त्ररहस्यानि पटुप्रभः । तथा दिशति जानन्त्येकशः श्रुत्वापि ते यथा ॥ ३८ ॥ तारुण्यवयसा प्रज्ञापाटवेनाधिकेन च । किञ्चिद्दृप्तः स्वशिष्याणां कुप्यत्यनवगच्छताम् ॥ ३९ ॥ ततस्तान् शिक्षयन्नेकां रजोहरणदण्डिकाम् । नित्यं भनक्ति कोपोऽरिस्तादृशानपि गञ्जयेत् ॥ ४० ॥ एकदा त्ववलेपोऽपि स्वजातीयसहायताम् । कर्तुमत्राययौ स्वीयानुपदीनो न को[7] भवेत् ॥ ४१ ॥ वैयावृत्त्यकरं स्वीयं [8]खिन्नस्तन्नित्यभङ्गतः । आदिशद्दण्डिका लौहा कार्याऽस्माकं रजोहृतौ ॥ ४२ ॥ छात्रा वित्रासमापन्नाः खिन्नस्विन्नतनूभृतः । उपाध्यायात् कथंचित् ते वासरं निरयापयन् ॥ ४३ ॥ आवश्यकविधेः शास्त्रगुणनायानु ते ततः । अर्द्धरात्रिककालस्यावसरेऽपि विनिद्रकाः ॥ ४४ ॥ ज्येष्ठप्रभुक्रमाम्भोजसेवाहेवाकिनस्ततः । नत्वा व्यजिज्ञपन् विश्रमयन्तश्चरणद्वयम् ॥ ४५ ॥ शरण्यं शरणायाता अश्रान्तस्रवदश्रवः । शिरोभेदभृतेर्भीता उपाध्यायस्य चेष्टितम् ॥४६॥–त्रिभिर्विशेषकम् । श्रुत्वा प्रभुभिरादिष्टं वत्साः स्वच्छाशया ननु[9] । एष वोऽह्नाय पाठाय त्वरते नतु वैरतः ॥ ४७ ॥ यदयोमयदण्डस्य सोऽर्थी तद्धि विरुध्यते । शिक्षिष्यते तथायं वो नाचरेद् विद्रवं यथा ॥ ४८ ॥ इत्थमाश्वासितास्ते च स्वस्वस्थानेष्वसूषुपन् । **सूराचार्यो**ऽपि तत्रागाच्छुश्रूषाहेतवे प्रभोः ॥ ४९ ॥ ददे कृतककोपात् तैर्वन्दने नानुवन्दना । अप्रसादे ततो हेतुं पप्रच्छाह प्रभुः पुनः ॥ ५० ॥ लोहदण्डो यमस्यैवायुधं नहि चरित्रिणाम् । घटते हिंस्रवस्तु स्यात् तथैव तु परिग्रहे ॥ ५१ ॥ आद्योऽपि कोऽप्युपाध्यायः पाठको न शिशुव्रजे । अहो ते स्फुरिता प्रज्ञा पुंसां हृदयभेदिनी ॥ ५२ ॥ श्रुत्वेति व्यमृशच्छात्रवर्गोदयमुपद्रवः । उत्तस्थे च प्रभोरग्रेऽवादीत् सविनयं वचः ॥ ५३ ॥ पूज्यहस्तसरोजं न[10] मौलौ किं व्यलसन्मम । एवं निस्त्रिंशताशङ्कां[11] मयि यूयं विधत्त[12] किम् ॥ ५४ ॥ काष्ठदण्डिकया देहे प्रहारो दीयते यथा । न तथा लोहदण्डेन ज्ञापनैव विधीयते ॥ ५५ ॥ मद्गुणा यद्यमीषां स्युरिति चिन्ता ममाभवत् । घृतपूर्णाश्चपलकैर्न स्युः सत्यमिदं वचः ॥ ५६ ॥

---

1 N सन्मान्यं सत्कवित्वं गुरुं । 2 आजूहवंस्ततः । 3 N °विष्टस्य । 4 इत्यर्थं । 5 N प्रवाच्य । 6 N गुणा यत्र प्रतिष्ठां । 7 N °पदीनोतको । 8 N D खिन्नजित्त° । 9 N स्वच्छाशयस्य तु । 10 N °सरोजेन । 11 °शंका । 12 N व्यधत्त ।

§ ४. अथ ज्येष्ठप्रभुः प्राह सर्वेषां गुणसंहतिः । कोट्यंशेनापि नास्त्यत्र को मदस्तद्गुणेषु भो ! ॥ ५७ ॥ इत्याकर्ण्य ततः **सूराचार्यः** प्राज्यमतिस्थितिः । प्राह नाहंकृतोऽहं को गर्वोऽनतिशयस्य मे ॥ ५८ ॥ अभिसन्धिर्ममायं तु चेन्मया पाठिता अमी । विहृत्य[1] परदेशेषु जायन्ते वादिजित्वराः ॥ ५९ ॥ पूज्यानां किरणा भूत्वा जनजाड्यहृतौ[2] ननु । युष्माकं सोऽपि शृङ्गार उन्नतिर्जिनशासने ॥ ६० ॥ गुरवः प्राहुरुत्तानमते बालेषु का कथा । किमागच्छसि लग्नस्त्वं कृत**भोज**सभाजयः ॥ ६१ ॥ श्रुत्वेत्याह स चादेशः प्रमाणं प्रभुसंमितः । आदास्ये विकृतीः सर्वाः कृत्वादेशममुं प्रभोः ॥ ६२ ॥ इत्युक्त्वा निजसंस्तारेऽक्षिपत् शेपक्षणं[3] ततः । सामर्षः सूरिशार्दूलः शार्दूलः श्रस्तफालवत् ॥ ६३ ॥ प्रातः कृत्वाऽन्ववादीत् सोऽनध्यायोऽद्यास्तु पाठने । शिशुत्वाज्जहृषुः शिष्या महोत्सव इवागते ॥ ६४ ॥ मध्याह्ने शुद्धमाहारमानीय यतिमण्डले । मिलिते **सूरसूरिं**[4] तमाह्वाययत सद्गुरुः ॥ ६५ ॥ आययौ परिवेष्टे स गृह्णाति विकृतिं नहि । अनुनीतोऽपि गीतार्थैः पूज्यैरप्युदिते दृढम् ॥ ६६ ॥ अमुञ्चन्नाग्रहं सङ्केनाप्युक्त इदमभ्यधात् । मम प्रतिश्रवो हन्ताऽनाश्रवो मोच्यतां पुनः ॥ ६७ ॥ भणिष्यथाथ चेत् किञ्चित्तन्ममानशनं ध्रुवम् । ततः संवाहयामासे गीतार्थैः सह साधुभिः ॥ ६८ ॥ तत उत्सङ्गमारोप्य शिशिक्षे तैरसौ सुधीः । परदेशे विहर्ता त्वं[5] वत्स ! भूयात् सचेतनः ॥ ६९ ॥

शास्त्रं वंशो जातिः प्रज्ञा कुलमनणुसंयमाः सन्ति ।
जयिनश्च यमा नियमास्तथापि यौवनमविश्वास्यम् ॥ ७० ॥

इति पूज्योपदेशश्रीशृङ्गारैः स तरङ्गितः । मानयन् स्वान्यदेशीयलब्धवर्णांस्तपस्विनः ॥ ७१ ॥ ततः श्री**भीम**भूपालपृच्छायै राजसंसदम् । संप्राप गुर्वनुज्ञातो राज्ञां ज्ञातः पुरापि यः ॥ ७२ ॥ सुवर्णमणिमाणिक्यमये पीठे च भूपतिः । न्यवेशयद् बुधं बन्धुं हेमान्यत्[6] सौरभाद्भुतम् ॥ ७३ ॥ तदा च **मालवा**धीशविशिष्टाः पुनराययुः । स्वरूपं निजनाथस्य भूपालाय व्यजिज्ञपन् ॥ ७४ ॥ देव ! त्वद्विदुषां प्रज्ञाप्रातिभै रञ्जितो नृपः । श्री**भोजः** सम्यगुत्कण्ठां तेषु धारयते प्रभुः ॥ ७५ ॥ ततः प्रहिणुत प्रेक्षादक्षनाथ ! प्रसद्य तन् । अन्योन्यं कौतुकं विद्वद्भूतां विद्यते यथा ॥ ७६ ॥ राजा प्राह महाविद्वानास्ते मद्बान्धवो नवः । परदेशे कथं नाम प्रस्थाप्योऽसौ स्वजीववत् ॥ ७७ ॥ प्रतिपत्तिं ममेवास्य चेद्विधत्ते भवत्पतिः । प्रवेशादिषु मानं च स्वयं दत्ते तदस्तु तत् ॥ ७८ ॥ **सूराचार्यो**ऽपि दध्यौ च तोषाद् भाग्यमिहोदितम् । मम पूज्यप्रसादेन यत् तस्याह्वानमागमत् ॥ ७९ ॥ अथाह भूपते[7] **धारा**धिनाथकृतिनां[8] मया । गाथया[9] कविता दृष्टा तत्रोत्तरमदामहम् ॥ ८० ॥ शमिनां कौतुकं नः किं विचित्रे जगति ध्रुवे[10] । श्रीमद्**भोज**स्य चित्रार्थं गम्यते [11]त्वदनुज्ञया ॥ ८१ ॥ राजाह तत्र मद्भ्राता त्वं किं तं वर्णयिष्यसि । स प्राहाहं मुनिर्भूपं कुतो हेतौ[12] स्तुवे ततः ॥ ८२ ॥ ऊरीकृते प्रधानैश्च तत्र **मालव**भूपतेः । प्रयाणायानुजज्ञे तं विज्ञेशं **भीम**भूपतिः ॥ ८३ ॥ गजमेकं ततः प्रैषीत् सप्तीनां शतपञ्चकम् । पदातीनां सहस्रं च स बन्धौ भक्तिनिर्भरः ॥ ८४ ॥ शुभे मुहूर्ते नक्षत्र-वार-ग्रहबलान्विते । चरे लग्ने ग्रहे क्रूरे तत्रस्थे शुभवीक्षिते ॥ ८५ ॥ गुरुसङ्घाभ्यनुज्ञातो बहिः प्रस्थानमातनोत् । पञ्चमेऽह्नि प्रयाणं च चक्रे चक्रेश्वराकृतिः ॥ ८६ ॥–युग्मम् । ततः प्रयाणकस्तोकमेवासौ **गूर्जरा**वनेः । सन्धिक्षोणिमवापाथ[13] ससज्ज स च सज्जयः ॥ ८७ ॥ धाराधिरूढप्रज्ञाभूर्धारापुरमवाप्तवान् । प्रधानैश्च प्रतिज्ञातं ज्ञापितः स्वप्रभुस्ततः ॥ ८८ ॥ ततः सर्वर्द्धिसामग्र्या सैन्यमान्यमदैन्यभूः । **अवन्ति**नायकः सज्जयित्वा[14]ऽस्याभिमुखोऽचलत् ॥ ८९ ॥

1 N व्यहृत्य । 2 N °हृतौ । 3 N सेक्षणं । 4 D सूरिसूरि° । 5 N च । 6 N हेमाल्य° । 7 A भूपते धराधिनाथः । 8 N °कृतिना । 9 N गाथाया । 10 N ध्रुवम् । 11 N तदनु° । 12 N हेतोः । 13 N °मवाप्याथ । 14 N सज्जयिता° ।

दन्तावलैः कलैर्विन्ध्य इव पर्यन्तपर्वतैः । रथैर्ध्वनिप्रथैरभ्रैरदभ्रैरभ्रवद् व्यभात्[1] ॥ ९० ॥

शोभमानो वराश्वीयैः कल्लोलैरिव वारिधिः ।
पदातिराजिभिर्भ्रेजे[2] राजा राजेव तारकैः ॥ ९१ ॥—त्रिभिर्विशेषकम् ।

राजामात्योपरोधेन[3] व्रताचारव्यतिक्रमे । प्रायश्चित्तचिकीश्चित्ते[4] सूरिरारूढवान् गजम् ॥ ९२ ॥

दृग्गोचरे करिस्कन्धात् तावुत्तीर्य स्थितौ भुवि । राजा च मुनिराजश्च मिलितौ भ्रातराविव ॥ ९३ ॥

देशागतमहाविद्वदुचितं नृपकोशतः । प्रवालकमयं पट्टं तदध्यक्षाः[5] समानयन् ॥ ९४ ॥

नियुक्तैश्चाथ तैः स्थूलवेष्टनेभ्यो विवेष्ट्य च । कम्बिकाहस्तमानेन दैर्घ्यविस्तरयोः समः ॥ ९५ ॥

अष्टाङ्गुलोच्छ्रयः सूर्यबिम्बवत्तेजसा दृशा । दुर्दर्शः शुद्धभूपीठे व्यमुच्यत नृपाज्ञया ॥ ९६ ॥—युग्मम् ।

अत्राध्वमिति भूपालानुज्ञाताः प्रत्यलेखयन् । ते रजोहरणात् त्रिस्तं तत्रोपविविशुस्ततः ॥ ९७ ॥

अथ श्री**भोज** आह स्मौरणरोमालिपिच्छकात् । किं नु प्रमार्जितं रेणुजीवा[6] वात्र [7]लसन्ति किम् ॥ ९८ ॥

उपविष्टस्ततः सूरिः कम्पमानशरीरकः । राज्ञा पृष्टः कथं कम्पो जज्ञे वः[8] प्राह सोऽप्यथ ॥ ९९ ॥

राजपत्तीन् विकोशासिहस्तान्[9] वीक्ष्य बिभेम्यहम् । राज्ञोचेऽसौ स्थिती राज्ञां स प्राहासौ व्रतिस्थितिः[10] ॥१००॥

अस्त्वेवमिति राज्ञोक्ते स जैनीमाशिषं ददौ । भूपालायोत्तरस्थैर्यहर्षिताय कलानिधिः ॥ १०१ ॥

**हुत्वा मन्त्री विधाता लवणमुडुगणं सान्ध्यतेजःकृशानौ**
**धात्रीपात्रं विमोच्य द्विजनिनदमहामन्त्रघोषेण यावत् ।**
**आदायेन्दुं घरट्टं कृषति मुहुरुषा शाकिनी ताम्रचूड-[11]**
**ध्वानान् तावज्जय त्वं वसुमतिसुमनोमंडले भोजराज ! ॥ १०२ ॥**

परस्परं प्रशंसाभिर्निर्गम्य कमपि क्षणम् । राजा स्वं मन्दिरं प्राप सूरिः पुर्यन्तरीयिवान् ॥ १०३ ॥

§९. मध्ये नगरि तत्रास्ति विहारो हारवत्[12] क्षितेः । जनाद् विज्ञाय तत्रायात् **सूराचार्यः** कलानिधिः ॥१०४॥

सुवर्णमणिमाणिक्यपूजाभिः प्रसरत्प्रभाः । प्रतिमा वीतरागाणां ववन्दे भक्तिनिर्भरम् ॥ १०५ ॥

लुठत्पाठकपाठाग्निकर्म्मठाशठपण्डिते । प्रणष्टवठरे प्रायान्मठे निष्ठितकल्मषः ॥ १०६ ॥

तत्र [13]**बूटसरस्वत्याचार्यो**ऽनार्यतमोऽर्यमा । अस्ति प्रशस्तिर्यस्यास्ति विश्वविद्वन्मुखे सदा ॥ १०७ ॥

सर्वाभिगमपूर्वं च प्रणतस्तैः प्रभुर्मुदा । तच्छिष्याः प्राणमन्तामून्[14] सौवागतिकवाणयः ॥ १०८ ॥

तैस्तथातिथयो नैव गोचरे प्रहितास्तदा । आनीय शुद्धमाहारं भोजिता भक्तिपूर्वकम् ॥ १०९ ॥

साधर्म्मिकनृपश्राद्धकुशलप्रश्नकेलिभिः । अपराह्णोऽभवत् तेषां परितोषभराल्लघुः ॥ ११० ॥

अवलेपश्च भूपस्य प्रभूतातिशयादभूत् । तदा कदाचिदम्भोजादपि कीटः प्रजायते ॥ १११ ॥

असौ षडपि संमील्य दर्शनानि तदाऽभणत् । भवद्भिर्भ्राम्यते लोकः पृथगाचारसंस्थितैः ११२ ॥

तस्मात् सर्वेऽपि संगत्य दर्शनस्थ[15]मनीषिणः । कुरुध्वमेकमेवेदं सन्दिहाम यथा नहि ॥ ११३ ॥

विज्ञप्तं मन्त्रिमुख्यैस्तु भूपः प्राच्योऽपि कोऽपि न । समर्थोऽपि विधाताऽऽसीदीदृक्षस्येह कर्मणः ॥ ११४ ॥

भूपतिः[16] प्राह किं कोऽपि **परमारान्वये** पुरा ।
आसीत् स्वशक्तितो भोक्ता **सगौडं दक्षिणापथम्** ॥ ११५ ॥

---

1 A विभात् । 2 N B C भ्राजद् । 3 D राजमर्त्योपरोधेन । 4 N प्रायश्चितं चिकीर्षुश्चित्ते । 5 B N तदध्यक्षः समानयत् । 6 D रेणुर्जीवा । 7 N चात्र नसंति । 8 N ऽथ । 9 N राजपत्नीविकाशखिहस्तान् । 10 N व्रतस्थितिः । 11 B शाकिनीं ताम्रचूडध्वानां । 12 N हारवक्षिते । 13 N चूडसर° । 14 N °तामुं । 15 N दर्शनस्य । 16 N भूपतिं ।

तूष्णीकेष्विति विश्रुत्य तेषु भूपो निजैर्नरैः । समपिण्डयदेकत्र वाटके तान् पशूनिव ॥ ११६ ॥
सहस्रसंख्यया तत्र पुंसः स्त्रीरपि चानयत् । भोक्तुं नादाच्च सर्वेषामैकमत्यचिकीर्षया ॥ ११७ ॥
अनादिसिद्धशास्त्रौघप्रमाणैश्च निजैर्निजैः । मतिरेका[1] कथं तेषां धान्येष्वेको यथा रसः ॥ ११८ ॥
क्षुधा[2]बाधापरीणामादैकमत्यं त्वजायत । जीवो निजः कथं रक्ष्य इति चिन्तामहाज्वरे ॥ ११९ ॥
तन्मध्ये दर्शनस्थित्या सूराचार्योऽपि चागमत् । सर्वैरैक्येन सोऽभाणि सान्त्वनापूर्वकं तदा ॥ १२० ॥
भूपालः काल एवायं य एवं दर्शनव्रजे । ऐक्यबुद्धिं विधित्सुस्तन्न भूतं न भविष्यति ॥ १२१ ॥
भवन्तो गूर्जराश्छेका वाक्प्रपञ्चेन केनचित् । निवर्त्तयध्वमेनं कुविकल्पादमुतो हठात् ॥ १२२ ॥
परं सहस्रलोकानां भवन्तः प्राणदानतः । उपार्जयध्वमत्युग्रं पुण्यं यद्गणनातिगम् ॥ १२३ ॥
सूराचार्यस्ततः प्राहातिथीनां नः किमागतौ । कार्यं भवेन्महीशो[3]ऽपि न नः[4] प्रतिवदेत् किमु ॥ १२४ ॥
परन्तु दर्शनश्रेणिराराध्याऽनादिपद्धतिः । तदुक्तोपक्रमं किञ्चित् करिष्यामो विमोचकम् ॥ १२५ ॥
अमात्यपार्श्वतो भूपपुरतोऽख्यापयद् गुरुः । आयातयातमस्माकं नृपेण सह नाम्रतः[5] ॥ १२६ ॥
परं दर्शनिलोकानां बहूनामनुकम्पया । किंचिद्वदामि चेद्भूपोऽवधारयति तत्त्वतः ॥ १२७ ॥
राजापि शीघ्रमायातु गूर्जरः कविकुञ्जरः । इत्युक्ते मन्त्रिभिः सार्धं स ययौ राजमन्दिरम् ॥ १२८ ॥
अवदद् भूपते ! अभ्यागतानामातिथ्यमद्भुतम् । उचितं विदधे सम्यक् तप[6] एव तपस्विनाम् ॥ १२९ ॥
परं न नः स्वकं[7] कार्यं दर्शनानि धृतानि यत् । तत्तु दूयेत तेनैव वयं यामो भुवं स्वकाम् ॥ १३० ॥
तत्रापि हि गताः किं नु स्वरूपं कथयेमहि[8] । धारापुरश्च संस्थानं पृच्छामो भवदन्तिके ॥ १३१ ॥
राजाहाभ्यागतानां वो नाहं किमपि संमुखम् । भणाम्येषां तु पार्थक्ये हेतुं पृच्छामि निश्चितम् ॥ १३२ ॥
स्वरूपं मत्पुरो यूयं शृणुतात्व्यग्रचेतसः । चतुर्भिरधिकाशीतिः प्रासादानामिह स्थिता ॥ १३३ ॥
चतुष्पथानि तत्संख्यानि च प्रत्येकमस्ति च । चतुर्विंशतिरट्टानामेवं पुरि च सूत्रणा ॥ १३४ ॥
सूरिः प्राहैकमेकाट्टं कुरु किं बहुभिः कृतैः । एकत्र सर्वं लभ्येत लोको भ्रमति नो यथा ॥ १३५ ॥
राजाऽवदत् पृथग्वस्त्वर्थिनामेकत्र मीलने । महाबाधा ततश्चक्रे पृथग् हट्टावली मया ॥ १३६ ॥
इत्याकर्ण्यावदत् सूरिर्भूरिर्वक्त्रत्वकेलिषु[9] । विद्वानपि महाराज ! विचारयसि किं नहि ॥ १३७ ॥
स्वकृतान्यपि हट्टानि भङ्क्तुं न क्षमसे यदि । अनादिदर्शनानि त्वं कथं ध्वस्तुं समुद्यतः ॥ १३८ ॥
दयार्थी जैनमास्थेयाद् रसार्थी कौलदर्शनम् । वेदांश्च व्यवहारार्थी मुक्त्यर्थी च निरञ्जनम् ॥ १३९ ॥
चिरप्ररूढचित्तस्थावलेपैः सकलो जनः । एकः कथं भवेत् तस्मान्महीपाल ! विचिंतय ॥ १४० ॥
श्रुत्वेति भ्रष्टकुमाहावलेपो भूपतिस्तदा । संमान्य भोजयित्वा च दर्शनान्यमुचद् धृतेः ॥ १४१ ॥
अवस्थेयं भवद्भिश्च सांगत्यामहमाह्वयम् । इत्थं बहुमतोऽगच्छन् निजं सूरिरुपाश्रयम् ॥ १४२ ॥

§ ६. तत्र व्याकरणं श्रीमद्भोजराजविनिर्मितम् । तच्च विद्यामठे छात्रैः पठ्यतेऽहर्निशं भृशम् ॥ १४३ ॥
मिलन्ति सुधियः सर्वे तत्राकारणमागमत् । ततः[10] प्रचलितः सूरिः श्रीमान् "[11]बूटसरस्वती[12]" ॥ १४४ ॥
सहैष्यामो वयमपि सूराचार्येण जल्पिते । गूर्जरावनिविद्वत्ताशङ्कया च न्यषेधि तैः ॥ १४५ ॥
दर्शनार्थे परिश्रान्ता यूयमद्यावतिष्ठथ । सदोद्यतः पुनरसौ प्राह तत्प्रेक्षणोत्सुकः ॥ १४६ ॥
तारुण्ये कः श्रमो युष्मादृशविद्वन्निरीक्षणे । कुतूहलाद् विहारो नः समागच्छाम एव तत् ॥ १४७ ॥
अथ तेऽप्यनुमन्तारोऽप्रतिषेधेन तान् सह । नीतवन्तस्तदा पाठशालायां शङ्कितास्तदा ॥ १४८ ॥

---

1 N गतिरेकः । 2 A D क्षुदा° । 3 D महेशोऽपि । 4 A B न न प्रति° । 5 N सहसाम्रतः । 6 N भूप । 7 N परं ततः कथं । 8 N कथयामहो । 9 A B भूरिवक्तृत्वकेलिषु । 10 N तत्र । 11 N बूडसर° । 12 A °सरस्वतीं ।

उपाध्यायश्च तत्राहातिथयः कुत आययुः । ऊचे तत्रस्थिताचार्यैरणहिल्लपुरादिति ॥ १४९ ॥
विशेषसम्भ्रमाच्चक्रेऽध्यापकः[1] स्वागतादिकम् । उपावीविशदेषोऽपि प्रधानासनि तद्द्वयम् ॥ १५० ॥
**सूराचार्य**स्ततः प्राह ग्रन्थः कोऽत्र प्रवाच्यते । कृतिः श्री**भोजराज**स्य शब्दशास्त्रं स चावदत् ॥ १५१ ॥
प्रोच्यतां तन्नमस्कार इत्युक्तेऽभ्यागतैर्बुधैः । उपाध्यायः सह च्छात्रैः पटुस्वरमुवाच तम् ॥ १५२ ॥

तद्यथा—

**चतुर्मुखमुखाम्भोजवनहंसवधूर्मम ।**
**मानसे रमतां नित्यं शुद्धवर्णा सरस्वती ॥ १५३ ॥**

**सूराचार्य**स्ततः प्राह किञ्चिदुत्प्रासगर्भितम् । एवंजातीयविद्वांसो देशेऽत्रैव न चान्यतः ॥ १५४ ॥
अस्माभिर्भारती पूर्वमश्रावि ब्रह्मचारिणी । कुमारी साम्प्रतं तत्र व्यपदिष्टा वधूरिति ॥ १५५ ॥
चित्रमश्रुतपूर्वं तदन्यत् पृच्छामि किञ्चन । मातुलस्य सुता गम्या यथाऽऽस्ते **दक्षिणापथे** ॥ १५६ ॥
**सुराष्ट्रायां** भ्रातृजाया देवरस्य यथोचिता । भवद्देशे तथा गम्याऽनुजाङ्गजवधूः कथम् ॥ १५७ ॥
यद्वधूशब्दसामीप्ये 'मानसे रमतां मम' । प्रयुक्तं तद् भवन्त्येव देशाचाराः पृथग्विधाः ॥ १५८ ॥
अनुत्तरं प्रतिहतश्चालयन्नन्यसंकथाः । कालं विलम्बयामासेष्टानध्यायकृतादरः ॥ १५९ ॥
सन्ध्यावसरसंप्राप्तः श्री**भोज**नृपतेः पुरः । अपराह्णेतिवृत्तं स जगौ विस्मयकारकम् ॥ १६० ॥
भूपश्च विस्मितः प्राह सम्भाव्यं **गूर्जरावनौ** । इदं प्रातर्विलोक्योऽसौ विद्वानाहूय निश्चितम् ॥ १६१ ॥
तत्रस्थाचार्यपार्श्वे च भूपालः प्रैषयन्नरान् । आह्वातुमतिथिं ते [2]च भक्तिपूर्वं तमाह्वयन् ॥ १६२ ॥
ततो[3] **चूडसरस्वत्या**चार्येण सह स प्रभुः । ययौ श्री**भोज**भूनाथसभां स्वर्गसभानिभाम् ॥ १६३ ॥
राज्ञा नृपाङ्गणेऽग्रे[4] च शिलैका निहिता तदा । **गूर्जरा**ग्रे निजप्राणस्फूर्तिदर्शनहेतवे ॥ १६४ ॥
तत्र पूर्णं पुनश्छिद्रं प्राग् विधाप्य पिधाय[5] च । तद्वर्णसमकल्केन तादृशोऽपि छलार्थिनः ॥१६५॥—युग्मम् ।
आगच्छन्तं तदाऽऽलोक्य सूरिं[6] शरमिलापतिः । आकर्णं धनुराकृष्यामुचल्लक्ष्ये दृशं दधन् ॥ १६६ ॥
**सूराचार्य**श्च सूक्ष्मेक्षी कल्कालेपं तटस्थितम् । बाणाग्रोत्कीर्णमालोक्य गर्भार्थं काव्यमब्रवीत् ॥ १६७ ॥

तथा हि—

**विद्धा विद्धा शिलेयं भवतु परमतः कार्मुकक्रीडितेन**
**श्रीमन् पाषाणभेदव्यसनरसिकतां मुञ्च मुञ्च प्रसीद ।**
**वेधे कौतूहलं चेत् कुलशिखरिकुलं बाणलक्ष्यीकरोषि**
**ध्वस्ताधारा धरित्री नृपतिलक ! तदा याति पातालमूलम् ॥ १६८ ॥**

इत्थमद्भुतसामर्थ्यवर्णनात् तोषितो नृपः । अधृष्यप्रज्ञमेनं श्री**धनपालो**ऽपि बुद्धवान् ॥ १६९ ॥
व्यचिन्तयच्च बुद्धैव[7] विज्ञानं भूपतेरियम् । गर्भितोक्तिरहो जैना जीयन्ते केन मेधया ॥ १७० ॥
निजाश्रयं ययौ श्रीमान् **सूराचार्यो** नृपार्चितः ।
§७. राजाऽऽस्थानमथाऽऽस्थाय समस्तविदुषोऽवदत् ॥ १७१ ॥
**गूर्जरो**ऽयं महाविद्वानाययौ श्वेतचीवरः । अनेन सार्धं कोऽपीह वादमुद्रां बिभर्तु वः ॥ १७२ ॥
पण्डितानां सहस्रार्धमध्ये सर्वेऽप्यवाङ्मुखाः । भग्नास्तत्प्रतिघातेन घनगर्ज्योर्भका इव ॥ १७३ ॥
बिलक्षो नृपतिः प्राह किं गेहेनर्दिनः खलु । स्वयं वृत्तिभुजोऽस्माकं विद्वज्जल्पा मुधा बुधाः ॥ १७४ ॥

1 N व्यापकः । 2 N तं च । 3 N ततश्चूडसर° । 4 N नृपांगणाग्रे च । 5 A विधाय । 6 N सूरीश्वरमिला° ।
7 N बुद्धिं च ।

तेषामेको महाप्राज्ञः प्रादान्मन्त्रं प्रभो ! शृणु । मा वैलक्ष्यं प्रपद्येथा रत्नगर्भा वसुन्धरा ॥ १७५ ॥
निर्जरा इव देहस्था **गूर्जराः** श्वेतभिक्षवः । दुर्जेयास्तदतो मन्त्रसाध्यं कार्यमिदं प्रभो ! ॥ १७६ ॥
छात्रः कोऽपि महाप्राज्ञ आषोडशसमावयाः[1] । प्रमाणशास्त्रोपन्यासं पाठ्यतामशठः सुधीः ॥ १७७ ॥
श्रुत्वेति भूपतिस्तुष्टिपुष्टः पण्डितवाक्यतः । अस्त्वेवमित्यवादीत् तत् त्वमेवैतत् कुरुष्व भो ! ॥ १७८ ॥
एकः पटुर्वटुः सौम्यः प्रज्ञावत्कृत्वशेवधिः । तर्कशास्त्रसदभ्यासोपन्यासं [2]पाठतस्ततः ॥ १७९ ॥
अतिव्यक्ताक्षरं तेनादायि [3]पाठो गुरोः पुरः । एतद् विज्ञाप्य राजानं मुहूर्तः शोधितः शुभः ॥ १८० ॥
ज्ञापितं वादसूराय **सूराचार्याय** भूभुजा । समाहूय च वादार्थं स्थापितोऽसौ वरासने ॥ १८१ ॥
पट्टवासोनिवसनश्छात्रः शृङ्गारितस्ततः । सुवर्णरत्नपुष्पाद्याभरणैः[4] शरणैः श्रियः ॥ १८२ ॥
स्वमङ्कं तं समारोप्य राजाह प्रतिवाद्यसौ । ततो जगाद वादीन्द्रः प्रकटाक्षरपद्धतिः ॥ १८३ ॥
क्षीरकण्ठः क्षीरगन्धवक्त्रोऽपक्त्रिमवागसौ । यूनां न उचितो नैव समानो[5] विग्रहः खलु ॥ १८४ ॥
राजाह रभसा नायं बाल एवेति भाव्यताम् । शिशुरूपा ह्यसौ ब्राह्मी जितेऽस्मिन् मत्सभा जिता ॥१८५॥
पूर्ववादो लघोरस्तु सूरिणोक्ते ततः शिशुः । यथालिखितपाठं च व्यक्तमस्खलिताक्षरम् ॥ १८६ ॥
अपदच्छेदवाक्यं तं[6] विशरारुविभक्तिकम् । शृण्वन्मेने ह्यसावर्थावगमेन[7] विना वदेत् ॥ १८७ ॥—युग्मम् ।
इत्येवं शङ्कया क्षुण्णं विमृशन्निश्चिकाय च । पट्टिकापाठ एवायमीदृशोऽत्र नहीतरत् ॥ १८८ ॥
जल्पेद् यावद् रयेणासौ तावत् परुषशब्दतः । पाश्चात्यं तु पदं कूटं बभणे भवता हि भो ! ॥ १८९ ॥
पुनर्भणेति स प्रोक्तो[8] रभसेति ततोऽवदत् । पट्टिकायां ममेदृक्षं लिखितं निश्चयो मम ॥ १९० ॥
**सूराचार्य** इति श्रुत्वा प्राह सन्तोषनिर्भरम् । यादृग् लक्षणशास्त्रादौ श्लोको वादोऽपि तादृशः ॥ १९१ ॥
तदापृच्छामहे श्रीमन् ! **भोज**भूपालपुङ्गव ! । अदर्शि **मालवो** देशो मण्डकाः स्वादिता अपि ॥ १९२ ॥
इत्युक्त्वा प्रययौ सूरिर्मठं हठजितद्विषन्[9] । लज्जा-मन्युभराक्रान्तो राजाऽऽस्थानं व्यसर्जयत् ॥ १९३ ॥

§८. श्रीमान् **बूटसरस्वत्या**चार्यः प्राघुणमभ्यधात् ।
अस्माकं शासनोद्योतात् सुखं त्वन्मृत्युतोऽसुखम् ॥ १९४ ॥

श्री**भोजराजः** स्वसभाजेतारं हन्ति निश्चितम् । जये पराजये वापि न श्रेयः किमु कुर्महे ॥ १९५ ॥
**सूराचार्य**स्ततोऽवादीद् वीरधोरणिधूर्धरः । स्वं रक्षिष्येऽहमात्मानं भवद्भिर्माऽनुतप्यताम् ॥ १९६ ॥
तदा श्री**धनपालेन** प्रेषितः[10] कविचक्रिणा । पुरुषो **गूर्जरा**चार्यं प्रोचे स्वस्वामिवाचिकम् ॥ १९७ ॥
पूज्याश्छलेन[11] केनापि मद्वेश्मायान्तु सत्वरम् । अविश्वास्यो नृपस्यास्य प्रसादो पि भयंकरः ॥ १९८ ॥
मण्डनं सर्वदेशानां भवादृग् विश्रुतः सुधीः । भाग्यातिशयतो मादृग्जनैर्दुर्लभ एव यत् ॥ १९९ ॥
मद्दर्शनानन्तरं च विधेया कापि नाधृतिः । सुखेन **गूर्जरं** देशं प्रापयिष्यामि निश्चितम् ॥ २०० ॥
अहो जागर्ति भाग्यं वः साधूनामिति भाषिणाम् । प्रातः क्षणेऽश्ववारैस्तन्मैत्यं [12]बाढमवेक्ष्यत ॥ २०१ ॥
सन्तोषाज्जयपत्रं[13] वः प्रदास्यति नृपाग्रणीः । विद्वांसमतिथिं प्रेषयध्वं विध्वस्तवादिनम् ॥ २०२ ॥
इति वास्तव्यसूरिं तेऽभ्यधुर्विधुरिताननम् । आयास्यतीति तानाह शून्यतायातचेतनः ॥ २०३ ॥
मध्याह्ने कर्कशे सूर्यतापात् कुम्भे गुरौ तदा । कृतवेषपरावर्तो दाम दत्त्वा दृढं गले ॥ २०४ ॥
तत्रत्यैकानगारेण प्रावृत्यासौ जरत्पटीम् । मलिनां निःसरंश्चैत्यद्वारेण जगदे भटैः ॥ २०५ ॥—युग्मम् ।

---

1 N समाहृयः । 2 N पाठत॰ । 3 N पाठं । 4 N पुष्पाढ्याभरणैः । 5 N समाने । 6 N तत् । 7 N ॰वगमो न । 8 N सप्तोक्ते । 9 N हतजितद्विषम् । 10 N प्रेरितः । 11 N पूज्याश्च येन । 12 D प्रातरवेक्ष्यत; N बाटमवेक्ष्यत । 13 N सन्तोषजय॰ ।

बहिः कथं तु निर्यासि मध्ये गच्छ सिताम्बर ! । अर्पिते **गूर्जरे** सर्वे सर्वतो मुत्कला भुवम् ॥ २०६ ॥
स च श्रुत्वा करालोक्तिर्विकरालमुखोऽवदत् । मध्ये सिंहासनासीनं भूपालमिव गर्वतः ॥ २०७ ॥
कर्णे धृत्वा प्रभोरग्रे नयतास्माकवैरिणम् । जयपत्रमथाप्नोति यमपत्रमथापि वा ॥ २०८ ॥
तृषाक्रान्ता वयं युष्मत्पुरवासव्यतां गताः । भवद्धर्मेण नीराय गच्छामो मुञ्चत द्रुतम् ॥ २०९ ॥
एकेन चाश्ववारेण कृपया मोचितोऽथ सः । मनीषिमौलिरस्य गृहं प्रापापमीः प्रभुः ॥ २१० ॥
स चाह वाक्पथातीताच्छेकताने यतीश्वरः । यमदृष्टिपथादन्तर्धाय मे दृक्पथे स्थितः ॥ २११ ॥
अद्य ते जन्म मन्येऽहं गच्छस्तेऽद्य सपुण्यकः[1] । यद्भवानागतो जैनशासनव्योमभास्करः ॥ २१२ ॥
कथमागा इदं पृष्टः **सूराचार्यो** यथातथम्[2] । अभ्यधादिति[3] च श्रुत्वा परमानन्दमाप्तवान् ॥ २१३ ॥
भूमीगृहे सावकाशेऽवस्थाप्यादरपूर्वकम् । शुद्धाहारेण तं भक्त्या प्रत्यलाभयदुद्यतः ॥ २१४ ॥
ततस्ताम्बूलिकस्तोमं तत्र यान्तं निरीक्ष्य सः । अत्यादरेण संमान्य भोजनाच्छादनादिना ॥ २१५ ॥
ततश्चाभ्यर्थयामास तान् मम भ्रातरं स्वकम् । **अणहिल्लपुरं** यावत् परानयत निश्चितम् ॥ २१६ ॥
तेऽप्यूचुर्ब्राह्मणः पूज्यो राज्ञां ज्ञातो बुधाग्रणीः । तदादेशः प्रमाणं नः कार्यमावश्यकं ह्यदः ॥ २१७ ॥
नात्रानिर्वृतिराधेया नयामः सपरिच्छदम् । यानारोहे वरे[4] भुक्तौ[5] निश्चिन्तो वर्ततामसौ ॥ २१८ ॥
श्रीमता **धनपालेन** दीनाराणां शतं ददे । अङ्गीकरणतोऽमीषां रङ्गसङ्गतरङ्गिणा ॥ २१९ ॥
गुरचोल्लकमध्ये[6] च गुप्तं कृत्वा गुरुं तदा । पर्याण्य वृषभान् शीघ्रं ते चेलु**र्गूर्जरा**वनौ ॥ २२० ॥
**महीतटा**गतेन श्री**सूराचार्ये**ण सद्गुरोः । विज्ञापितं नरैरात्मागमनं कोशलोत्तरम् ॥ २२१ ॥
§९. इतश्च विविशुश्चैत्यमपराह्णे भटाः स्वयम् । साधुं स्थूलोदरं दृष्ट्वा सिंहासन्युपवेशितम् ॥ २२२ ॥
प्रधानवस्त्रसंवीतमुद्यन्मदकलाकृतिम् । एवमूचुर्नृपादेशान्निर्गच्छत जिनालयात् ॥ २२३ ॥–युग्मम् ।
मध्ये योऽत्र विलम्बः सोदूखले घातवञ्चना । उत्थाय सोऽग्रतो भूत्वाऽश्ववारैः सह जग्मिवान् ॥ २२४ ॥
पार्थिवस्य पुरो मृत्वाऽवतस्थे मौनमाश्रितः । विलक्षेण ततो राज्ञाऽऽह्वायका[7] जल्पितास्तदा ॥ २२५ ॥
कोऽयं भवद्भिरानीतो बठरः स्थूलदेहभृत् । [8]गतोऽसौ **गूर्जर**श्छेको भवतामग्रतो ननु ॥ २२६ ॥
अक्षिण रेणुं हि निक्षिप्य केनाप्यन्धाः कृताः[9] कथम् । भवतां सदृशः कश्चिच्चेतनारहितो नहि ॥ २२७ ॥
तेऽप्यूचुर्नाथ ! नीरस्य वाहकं दुर्गतं मुनिम् । एकं मुक्त्वा न कस्यापि निर्गमोऽस्मत्पुरः प्रभो ! २२८ ॥
भूप आह परावृत्य वेषं वः पश्यतां ययौ । विजित्य नः[10] सभां नान्यस्तं विनोत्पन्नबुद्धिमान् ॥ २२९ ॥
पुरस्थं प्राह राजा स्वमावासं गच्छ पुण्यतः । मूर्खत्वं हि वरं श्लाघ्यं येनास्मत्तोऽपि जीवितः ॥ २३० ॥
इत्यसौ प्रहितो राज्ञा मठे व्यावृत्य चाययौ । मूर्ध्न एव भ्रुवोर्नैवाक्षतवर्द्धन-मुण्डने ॥ २३१ ॥
§१०. इतः श्री**भीम**भूपालः प्रजिघाय नरान् निजान् । आह्वायकान् निजभ्रातुर्मातुलो व्रतिभिः[11] सह ॥ २३२ ॥
स्वदेशे प्रकटो भूत्वा राजधानीमथाययुः । गुरवः[12] सङ्घसंवीतास्तस्याभिमुखमागमन ॥ २३३ ॥
राजा च सर्वसामग्र्या प्रतिपन्थीव कः शुभे । आचार्यः स्वगुरोः पादौ प्रेक्ष्य ह्रीमानिवानमत् ॥ २३४ ॥
प्रत्यासन्नश्च तेषां स सर्वाभिगमपूर्वकम् । योगीवाष्टाङ्गयोगेन प्रह्वोऽभिहितवान् वचः ॥ २३५ ॥
सफलाऽद्य गुरोराशा सफला मादृगाशिषः । प्रसन्ना दृक् च मादृक्षे श्रीसङ्घस्य फलेग्रहिः ॥ २३६ ॥
अविमृश्य विधायी च गतो **मालवके** तदा ।
अथतोऽहमिहागच्छं यजित्वा **भोज**पर्षदम् ॥ २३७ ॥–युग्मम् ।

1 N सुपुण्यकः । 2 N यथा तथा । 3 N अभ्ययादिति । 4 A D N यानारोहेतरे । 5 N भक्तौ । 6 N गुरवोऽल्लक° । 7 N ह्वायिका । 8 N ततो । 9 N °व्यन्धः कृतः । 10 D N न सतां । 11 N वृतिभिः । 12 A सभूपः संघ संवीतः स्वस्या°; D स संघः संवीतः स्वस्या° ।

तथाऽन्तेवासिनोऽमी श्रीगुरुपादाग्रतो मम । क्ष(क्षू ?)णं नाकथयिष्यन्ताशिक्षिष्यत न च प्रभुः ॥ २३८ ॥
बालोऽहं[1] यदि दर्पेण न व्यधास्यं प्रतिश्रवम् । गुरुमस्तकहस्तस्य कः प्रमाणमथोच्यते ॥ २३९ ॥–युग्मम् ।
इत्याकर्ण्य प्रभुर्द्रोणः शोणह्रद इव स्थिरः । उवाच वाचमाचारचारुचारित्रचञ्चुरः ॥ २४० ॥
एवं प्रतिश्रवं क्लीबदुष्करं विदधीत कः । निर्वाहयेत च श्रीमन्! विना त्वामाप्तवाग्वरम्[2] ॥ २४१ ॥
सगच्छ-सङ्घाश्च वयमाचामाम्लैरुपस्थिताः । आभवद्वदनालोकात् सम्यक्शासनदेवताम् ॥ २४२ ॥
सगद्गदमुदित्वैवं स बाढं परिषस्वजे । गुरुभिश्चाथ भूपोऽपि श्री**भीमः** प्राह सादरम् ॥ २४३ ॥
मनीषी विनयी छेकस्तत्कालोत्पन्नबुद्धिमान् । त्वां विना दृश्यते नान्यस्तेजस्वी दृढधैर्यभूः[3] ॥ २४४ ॥
श्री**भोजं** छलयित्वा यत्तादृक्प्राज्ञपरिग्रहम् । आगत्याक्षतदेहस्त्वं मम तेजोऽभ्यवर्द्धय ॥ २४५ ॥
किञ्चित् पृच्छामि सन्देहं नृपतिः स [4]स्तुतो न वा । **सूरसूरि**रथ प्राह पयोवाहनिभध्वनिः ॥ २४६ ॥
रसना मे महाराज ! त्वां विना स्तौति नापरम् । मदुक्तस्य च काव्यस्य भावार्थं शृणु कौतुकात् ॥२४७॥
शिला विद्धा सती विद्धा छिद्रे शरमुचां हि कः । विक्रमः कार्मुकक्रीडां मुञ्च तद् व्याजतः कृताम् ॥२४८॥
व्यसने दृषदां भेदाद् भवतां पूर्वजो गिरिः । **अर्बुद**स्तस्य भेदे तु ध्वस्ताधारा धरित्र्यपि ॥ २४९ ॥
पातालमूलं यान्तीयं शिक्षयेऽहमिति ब्रुवन् । अपि द्विषति सच्छिक्षा दातव्या शमजीवितैः ॥ २५० ॥
श्री**भीमः** प्राह तच्छ्रुत्वा पुलकोद्भेदमेदुरः । मद्बन्धुना जिते **भोजे** का मे चिन्तास्ति तज्जये ॥ २५१ ॥
स्वसमीपे समारोप्य गजराजवरासने । **सूराचार्य**स्य भूपालः प्रवेशोत्सवमातनोत् ॥ २५२ ॥
§११. अतीचारान् स विज्ञप्य गुरुपार्श्वे महामतिः । देशान्तरगतौ जातांस्तपसाऽशोधयद् दृढम् ॥ २५३ ॥
युगादिनाथ-श्रीनेमिचरिताद्भुतकीर्तनात् । इतिवृत्तं द्विसन्धानं व्यधात्[5] स कविशेखरः ॥ २५४ ॥
यः पूर्वं पिपठीः शिष्यवर्गस्तमिह सूरिराट् । सम्यग् निष्पाद्य वादीन्द्रतया स समयोऽजयत् ॥ २५५ ॥
श्री**द्रोणसूरि**णेङ्गिन्यां[6] परलोके सुसाधिते । क्षितावक्षामचारित्रपवित्रः [7]**सूरसद्गुरुः** ॥ २५६ ॥
प्रभावनाभिः श्रीसङ्घमुन्नमय्य श्रुतोदधिः । शिष्यान्निष्पाद्य सम्पाद्य जैनप्रवचनोन्नतिम् ॥ २५७ ॥
योग्यं सूरिपदे न्यस्य भारमत्र निवेश्य च । प्रायोपवेशनं पञ्चत्रिंशद्दिनमितं दधौ ॥ २५८ ॥
आत्मारामादरः सम्यग् योगत्रयनिरोधतः[8] ।
श्री**भीम**भूपतेर्बन्धुरुत्तमां गतिमाश्रयत् ॥ २५९ ॥–चतुर्भिः कलापकम् ।

**श्रीसूराचार्यवृत्तं व्यरचि परिचितं वादविद्याविनोद-**
**क्षुभ्यद्वादिप्रवादं किमपि गुरुमुखादन्यतो वाथ[9] किञ्चित् ।**
**श्रेयो देयादमेयं जिनपतिवचनोद्योतनस्थैर्यहेतुः**
**सेतुर्जाड्याम्बुराशेर्भवतु भवभृतामद्य विद्योद्यमाय ॥ २६० ॥**
**श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-**
**चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।**
**श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीसूरसूरेः कथा**
**श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गोऽयमष्टादशः ॥ २६१ ॥**

॥ ग्रंथ० २६९, अ० २३ । उभयं ४२७७, अ० २८ ॥

## ॥ इति श्रीसूराचार्यप्रबन्धः ॥

---

1 N बालोऽयं । 2 A D °माप्तवान् भरं । 3 N °वीर्यभूः । 4 N सस्तुतो । 5 A विधात् । 6 N द्रोणसूरिणां गत्वा । 7 N सूरि° । 8 A D योगत्रितयरोधतः । 9 C N °वाप्य ।

# १९. श्रीअभयदेवसूरिचरितम् ।

श्रीजैनतीर्थधम्मिलोऽ**भयदेवः** प्रभुः श्रिये । भूयात् सौमनसोद्भेदभास्वरः सर्वमौलिभूः ॥ १ ॥
आद्दत्याष्टाङ्गयोगं यः स्वाङ्गमुद्धृत्य च प्रभुः । श्रुतस्य च नवाङ्गानां प्रकाशी स श्रिये द्विधा ॥ २ ॥
वदन् बालो यथाऽव्यक्तं मातापित्रोः प्रमोदकृत् । तद्वृत्तमिह वक्ष्यामि गुरुहर्षकृते यथा ॥ ३ ॥
§ १. अस्ति श्री**मालवो** देशः सद्वृत्तरसशालितः । **जंबूद्वीपा**ख्यमाकन्दफलं सद्वर्णवृत्तसूः ॥ ४ ॥
तत्रास्ति नगरी **धारा** मण्डलाग्रोदितस्थितिः । मूलं नृपश्रियो दुष्टविग्रहद्रोहशालिनी ॥ ५ ॥
श्री**भोजराज**स्तत्रासीद् भूपालः पालितावनिः । शेषस्येवापरे मूर्ती विश्वोद्धाराय यद्भुजौ ॥ ६ ॥
तत्र **लक्ष्मीपति**र्नाम व्यवहारी महाधनः । यस्य श्रिया जितः श्रीदः कैलासाद्रिमशिश्रयत्[1] ॥ ७ ॥
अन्यदा **मध्यदेशीयकृष्ण**ब्राह्मणनन्दनौ । प्रह्वप्रज्ञाबलाक्रान्तवेदविद्याविशारदौ ॥ ८ ॥
अधीतपूर्विणौ सर्वान् विद्यास्थानांश्चतुर्दश । स्मृत्यैतिह्यपुराणानां कुलकेतनतां गतौ ॥ ९ ॥
**श्रीधरः श्रीपति**श्चेति नामानौ यौवनोद्यमात् ।
देशान्तरदिदृक्षायै निर्गतौ तत्र चागतौ ॥ १० ॥–त्रिभिर्विशेषकम् ।
तौ पवित्रयतः स्मात्र **लक्ष्मीधर**गृहाङ्गणम् । सोऽपि भिक्षां ददौ भक्त्या तदाकृतिवशीकृतः ॥ ११ ॥
गेहाभिमुखभित्तौ च लिख्यते स्मास्य लेखकम् । टंकविंशतिलक्षाणां नित्यं ददृशतुश्च तौ ॥ १२ ॥
सदा दर्शनतः प्रज्ञाबलादप्यतिसङ्कुलम् । तत्परिस्फुरितं सम्यक् सदाभ्यस्तमिवानयोः ॥ १३ ॥
जनो मत्पार्श्वतः सूपकारवत्सूपकारवान् । वर्त्तते निष्ठुरः किं तु मम किञ्चिन्न यच्छति ॥ १४ ॥
ब्राह्मणा अपि गीर्वाणान् मन्मुखादाहुतिप्रदाः । तर्पयन्तु फलं तु स्यात् तत्कर्मकरतैव मे ॥ १५ ॥
इतीव कुपितो वह्निरह्नैकेनापि भस्मसात् । विदधे तां पुरीमूरीकृतप्रतिकृतक्रियः ॥ १६ ॥–त्रिभिर्विशेषकम् ।
**लक्ष्मीपति**र्द्वितीयेऽह्नि न्यस्तहस्तः कपोलयोः । सर्वस्वनाशतः खिन्नो लेख्यदाहाद् विशेषतः ॥ १७ ॥
प्राप्ते काले गतौ भिक्षाकृते तस्य गृहाङ्गणे । प्राप्तौ पुष्टं च तद्दृष्ट्वा विषण्णाविदमूचतुः ॥ १८ ॥
यजमान ! तवोन्निद्रकष्टेनावां सुदुःखितौ । किं कुर्वहे क्षुधा किं तु सर्वदुःखातिशायिनी ॥ १९ ॥
पुनरीदृक्शुचाक्रान्तसत्त्ववृत्तिर्भवान् किमु । धीराः सत्त्वं न मुञ्चन्ति व्यसनेषु[2] भवादृशाः ॥ २० ॥
इत्याकर्ण्य तयोर्वाक्यमाह श्रेष्ठी निशम्यताम् । न मे धनान्नवस्त्रादिदाहाद् दुःखं हि तादृशम् ॥ २१ ॥
यादृग्लेख्यकनाशेन[3] निर्धर्मेण जनेन यत् । कलहः संभवी धर्महानिकृत् क्रियते हि किम् ॥२२॥–युग्मम् ।
जजल्पतुश्च तावावां भिक्षावृत्ती [4]तवापरम् । शक्नुवो नोपकर्तुं हि व्याख्यावो लेख्यकं[3] पुनः ॥ २३ ॥
श्रुत्वातिहर्षभूः श्रेष्ठी स्वपुरस्तौ वरासने । न्यवेशयज्जनः स्वार्थपूरकं ध्रुवमर्हति ॥ २४ ॥
तौ चादितः समारभ्यतिथिवारर्क्षसङ्गतम् । व्यक्तवत्सरमासाङ्कसहितं खटिनीदलैः ॥ २५ ॥
वर्णजात्यभिधामूलद्रव्यसंख्यानवृद्धिभृत् । आख्यातं लेख्यकं स्वाख्याख्यानवद्धिषणाबलात् ॥ २६ ॥
पत्रकेषु लिखित्वा तत् श्रेष्ठी दध्यावहो इमौ । मम गोत्रसुरौ कौचित् प्राप्तौ मदनुकम्पया ॥ २७ ॥
यद्विशोपकमात्रेण वदन्तौ तावविस्मृतम् । दस्तरी-संपुटी[5]-पत्रनिरपेक्षं हि लेख्यकम् ॥ २८ ॥–युग्मम् ।
ततः सन्मान्य सद्भोज्य वस्त्राद्यैर्बहुमानतः । स्वगेहचिन्तकौ[6] तेन विहितौ हितवेदिना ॥ २९ ॥
जितेन्द्रियौ स तौ शान्तौ दृष्ट्वेति व्यमृशद् धनी । शिष्यौ मद्गुरुपार्श्वेऽमू स्तां चेत् तत्संघभूषणौ ॥ ३० ॥

1 A D °शिश्रियत् । 2 N व्यसनेन । 3 N °लेखक° । 4 N नचापरं । 5 N दुस्तरीसंपुटे । 6 B °चित्रकौ ।

§२. इतः **सपादलक्षे**ऽस्ति नाम्ना **कूर्चपुरं** पुरम् । मषीकूर्चकमाधातुं यदलं शात्रवानने ॥ ३१ ॥
**अल्लभूपाल**पौत्रोऽस्ति[1] प्राक्पोत्रीव[2] धराधरः ।
श्रीमान् **भुवनपाला**ख्यो विख्यातः सान्वयाभिधः ॥ ३२ ॥
तत्रासीत् प्रशमश्रीभिर्वर्द्धमानगुणोदधिः । श्री**वर्द्धमान** इत्याख्यः सूरिः संसारपारभूः ॥ ३३ ॥
चतुर्भिरधिकाशीतिश्चैत्यानां येन तत्यजे । सिद्धान्ताभ्यासतः सत्यतत्त्वं विज्ञाय संसृतेः ॥ ३४ ॥
अन्यदा विहरन् **धारापुर्यां** धाराधरोपमः । आगाद् वाग्व्रज्ञधाराभिर्जनमुज्जीवयन्नयम् ॥ ३५ ॥
**लक्ष्मीपति**स्तदाकर्ण्य श्रद्धालक्ष्मीपतिस्ततः । ययौ प्रद्युम्न-शाम्बाभ्यामिव ताभ्यां गुरोर्नतौ ॥ ३६ ॥
सर्वाभिगमपूर्वं स प्रणम्योपाविशत् प्रभुम् । तौ विधाय निविष्टौ च करसम्पुटयोजनम् ॥ ३७ ॥
वर्यलक्षणवर्यौ च दध्यौ वीक्ष्य तनुं तयोः । गुरुराहानयोर्मूर्त्तिः सम्यक् स्वपरजित्वरी ॥ ३८ ॥
तौ च प्राग्भवसम्बद्धाविवानिमिषलोचनौ । वीक्षमाणौ गुरोरास्यं व्रतयोग्यौ च तैर्मतौ ॥ ३९ ॥
देशनाभीशुभिर्ध्वस्ततामसौ बोधरङ्गिणौ । **लक्ष्मीपत्य**नुमत्या च दीक्षितौ शिक्षितौ तथा* ॥ ४० ॥
महाव्रतभरोद्धारधुरीणौ[3] तपसां निधी । अध्यापितौ च सिद्धान्तं योगोद्वहनपूर्वकम् ॥ ४१ ॥
ज्ञात्वौचित्यं च सूरित्वे स्थापितौ गुरुभिश्च तौ । [4]शुद्धवासो हि सौरभ्यवासं समनुगच्छति ॥ ४२ ॥
**जिनेश्वर**स्ततः सूरिरपरो **बुद्धिसागरः** । नामभ्यां विश्रुतौ पूज्यैर्विहारेऽनुमतौ तदा ॥ ४३ ॥
ददे शिक्षेति तैः श्रीमत्**पत्तने** [5]चैत्यसूरिभिः । विघ्नं सुविहितानां स्यात् तत्रावस्थानवारणात् ॥ ४४ ॥
युवाभ्यामपनेतव्यं शक्त्या बुद्ध्या च तत् किल । यदिदानींतने काले नास्ति प्राज्ञो भवत्समः ॥४५॥—युग्मम् ।
अनुशास्तिं प्रतीच्छाव इत्युक्त्वा **गूर्जरा**वनौ । विहरन्तौ शनैः श्रीमत्**पत्तनं** प्रापतुर्मुदा ॥ ४६ ॥
सद्गीतार्थपरीवारौ तत्र भ्रान्तौ गृहे गृहे । विशुद्धोपाश्रयालाभाद् वाचां सस्मरतुर्गुरोः ॥ ४७ ॥
श्रीमान् **दुर्लभराजा**ख्यस्तत्र चासीद् विशांपतिः । गीष्पतेरप्युपाध्यायो नीतिविक्रमशिक्षणे[6] ॥ ४८ ॥
श्री**सोमेश्वर**देवाख्यस्तत्र चासीत् पुरोहितः । तद्गेहे जग्मतुर्युग्मरूपौ सूर्यसुताविव ॥ ४९ ॥
तद्द्वारे चक्रतुर्वेदोच्चारं सङ्केतसंयुतम् । तीर्थं सत्यापयन्तौ च ब्राह्मं पित्र्यं च दैवतम् ॥ ५० ॥
चतुर्वेदीरहस्यानि सारणीशुद्धिपूर्वकम् । व्याकुर्वन्तौ स शुश्राव देवतावसरे ततः ॥ ५१ ॥
तद्ध्वानध्याननिर्मग्नचेताः स्तम्भितवत् तदा । समग्रेन्द्रियचैतन्यं श्रुत्योरेव[7] स नीतवान् ॥ ५२ ॥
ततो भक्त्या निजं बन्धुमाप्याय वचनामृतैः । आव्हानाय तयोः प्रैषीत् प्रेक्षापेक्षी द्विजेश्वरः ॥ ५३ ॥
तौ च दृष्ट्वान्तरायातौ दध्यावम्भोजभूः किमु । द्विधा भूयाद आदत्त दर्शनं शस्यदर्शनम् ॥ ५४ ॥
हित्वा भद्रासनादीनि तद्दत्तान्यासनानि तौ । समुपाविशतां शुद्धस्वकम्बलनिषद्ययोः ॥ ५५ ॥
वेदोपनिषदां जैनतत्त्वश्रुतगिरां तथा । वाग्भिः साम्यं प्रकाश्यैतावभ्यधत्तां तदाशिषम् ॥ ५६ ॥

तथा हि—

**अपाणिपादो ह्यमनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ।**
**स वेत्ति विश्वं नहि तस्यास्ति वेत्ता शिवो ह्यरूपी[8] स जिनोऽवताद् वः ॥५७॥**

ऊचतुश्चानयोः सम्यगवगम्यार्थसङ्ग्रहम् । दययाभ्यधिकं जैनं तत्रावामाद्रियावहि ॥ ५८ ॥
युवामवस्थितौ कुत्रेत्युक्ते तेनोचतुश्च तौ । न कुत्रापि स्थितिश्चैत्यवासिभ्यो लभ्यते यतः ॥ ५९ ॥

---

1 N पुत्रोऽपि; 'वंश्यो' इति D टिप्पणी । 2 N शक्योऽतीव । * इदं पद्यं नोपलभ्यते N पुस्तके । 3 N सूरिणौ तपसो ।
4 N सिद्धवासो । 5 N पत्तनैश्चैत्य° । 6 N शिक्षणात् । 7 D श्रुत्यामेव । 8 N ह्यरूपः ।

चन्द्रशालां निजां चन्द्रज्योत्स्नानिर्मलमानसः। स तयोरार्पयत् तत्र तस्थतुः सपरिच्छदौ ॥ ६० ॥
द्विचत्वारिंशता भिक्षादोषैर्मुक्तमलोलुपौ। नवकोटीविशुद्धं चायातं भैक्षमभुञ्जताम् ॥ ६१ ॥
मध्याह्ने याज्ञिकस्मार्त्तदीक्षितानग्निहोत्रिणः। आहूय दर्शितौ तत्र निर्व्यूढौ तत्परीक्षया ॥ ६२ ॥
यावद् विद्याविनोदोऽयं विरिञ्चेरिव पर्षदि। वर्त्तते तावदाजग्मुर्नियुक्ताश्चैत्यमानुषाः ॥ ६३ ॥
ऊचुश्च ते झटित्येव गम्यतां नगराद् बहिः। अस्मिन्न लभ्यते स्थातुं चैत्यबाह्यसिताम्बरैः ॥ ६४ ॥
पुरोधाः प्राह निर्णयमिदं भूपसभान्तरे। इति गत्वा निजेशानामाख्यातमिद[1] (?) भाषितम् ॥ ६५ ॥
इत्याख्याते च तैः सर्वैः समुदायेन भूपतिः। वीक्षितः प्रातरायासीत् तत्र सौवस्तिकोऽपि सः ॥ ६६ ॥
व्याजहाराथ देवास्मद्गृहे जैनमुनी उभौ। स्वपक्षे स्थानमप्राप्नुवन्तौ सम्प्रापतुस्ततः ॥ ६७ ॥
मया च गुणगृह्यत्वात् स्थापितावाश्रये निजे। भट्टपुत्रा अमीभिर्मे प्रहिताश्चैत्यपक्षिभिः ॥ ६८ ॥
अत्रादिशत मे क्षूणं दण्डं चात्र यथार्हतम्। श्रुत्वेत्याह स्मितं कृत्वा भूपालः समदर्शनः ॥ ६९ ॥
मत्पुरे गुणिनः कस्माद् देशान्तरत आगताः। वसन्तः केन वार्यन्ते को दोषस्तत्र दृश्यते ॥ ७० ॥
अनुयुक्ताश्च ते चैवं प्राहुः शृणु महीपते!। पुरा श्री**वनराजो**ऽभूच्**चापोत्कट**वरान्वयः ॥ ७१ ॥
स बाल्ये वर्द्धितः श्रीमद्**देवचन्द्रेण** सूरिणा। **नागेन्द्रगच्छ**भूद्वारप्राग्वराहोपमास्पृशा ॥ ७२ ॥
**पंचाश्रया**भिधस्थानस्थितचैत्यनिवासिना। पुरं स च निवेश्येदमत्र राज्यं ददौ नवम् ॥ ७३ ॥
**वनराजविहारं** च तत्रास्थापयत प्रभुः। कृतज्ञत्वादसौ तेषां गुरूणामर्हणं व्यधात् ॥ ७४ ॥
व्यवस्था तत्र चाकारि सङ्घेन नृपसाक्षिकम्। सम्प्रदायविभेदेन लाघवं न यथा भवेत्[2] ॥ ७५ ॥
चैत्यगच्छयतिव्रातसम्मतो वसतान्मुनिः। नगरे मुनिभिर्नात्र वस्तव्यं तदसम्मतैः[3] ॥ ७६ ॥
राज्ञां व्यवस्था पूर्वेषां पाल्या[4] पाश्चात्यभूमिपैः। यदादिशसि तत्कार्यं राजन्नेवंस्थिते सति ॥ ७७ ॥
राजा प्राह समाचारं प्राग्भूपानां वयं दृढम्। पालयामो गुणवतां पूजां तूल्लंघयेम [5]न ॥ ७८ ॥
भवादृशां सदाचारनिष्ठानामाशिषा नृपाः। एधन्ते युष्मदीयं तद् राज्यं नात्रास्ति संशयः ॥ ७९ ॥
उपरोधेन नो यूयममीषां वसनं पुरे। अनुमन्यध्वमेवं च श्रुत्वा तेऽत्र तदा दधुः ॥ ८० ॥
सौवस्तिकस्ततः प्राह स्वामिन्नेषामवस्थितौ। भूमिः काप्याश्रयस्यार्थे श्रीमुखेन प्रदीयताम् ॥ ८१ ॥
तदा समाययौ तत्र शैवदर्शनवासवः। **ज्ञानदेवा**भिधः [6]कूरसमुद्रबिर(रु?)दार्ह(र्हि?)तः ॥ ८२ ॥
अभ्युत्थाय समभ्यर्च्य निविष्टं निज आसने। राजा व्यजिज्ञपत् किञ्चिदद्य विज्ञप्यते प्रभो! ॥ ८३ ॥
प्राप्ता जैनर्षयस्तेषामर्पयध्वमुपाश्रयम्। इत्याकर्ण्य तपस्वीन्द्रः प्राह प्रहसिताननः ॥ ८४ ॥
गुणिनामर्चनां यूयं कुरुध्वे विधुतैनसाम्। सोऽस्माकमुपदेशानां फलपाकः श्रियां निधिः ॥ ८५ ॥
शिव एव जिनो [7]बाह्यत्यागात् परपदस्थितः। दर्शनेषु विभेदो हि चिह्नं मिथ्यामतेरिदम् ॥ ८६ ॥
निस्तुषव्रीहिहट्टानां मध्ये त्रिपुरुषाश्रिता। भूमिः पुरोधसा ग्राह्योपाश्रयाय यथारुचि ॥ ८७ ॥
विघ्नः स्वपरपक्षेभ्यो निषेध्यः सकलो मया। द्विजस्तच्च प्रतिश्रुत्य तदाश्रयमकारयत् ॥ ८८ ॥

**ततः प्रभृति सञ्जज्ञे वसतीनां परंपरा।**
**महद्भिः स्थापितं वृद्धिमश्नुते नात्र संशयः ॥ ८९ ॥**

§ ३. श्री**बुद्धिसागरः** सूरिश्चक्रे व्याकरणं नवम्। सहस्राष्टकमानं तत् श्री बु द्धि सा ग रा भिधम् ॥ ९० ॥
अन्यदा विहरन्तश्च श्री**जिनेश्वरसूरयः**। पुन**र्धारापुरीं** प्रापुः सपुण्यप्राप्यदर्शनाः ॥ ९१ ॥

1 N °मिह भाषितं। 2 N लाघवं च यथाभवत्। 3 D °तदसंमितैः। 4 N मान्या। 5 D न नः। 6 A B क्रूरः। 7 N बालस्था°।

श्रेष्ठी [1]**महाधर**स्तत्र पुरुषार्थत्रयोन्नतः । मुक्त्वैकां स्वधने संख्यां यः सर्वत्र विचक्षणः ॥ ९२ ॥
तस्या**भयकुमारा**ख्यो **धनदे**व्यङ्गभूरभूत् । पुत्रः सहस्रजिह्वोऽपि यद्गुणोक्तौ नहि प्रभुः ॥ ९३ ॥
सपुत्रः सोऽन्यदा सूरिं प्रणन्तुं सुकृती ययौ । संसारासारतामूलः श्रुतो धर्मश्चतुर्विधः ॥ ९४ ॥
अथा**भयकुमारो**ऽसौ वैराग्येण तरङ्गितः । आपपृच्छे निजं तातं तपःश्रीसङ्गमोत्सुकः ॥ ९५ ॥
अनुमत्या ततस्तस्य गुरुभिः स च दीक्षितः । ग्रहणासेवनारूपशिक्षाद्वितयमग्रहीत् ॥ ९६ ॥
स चावगाढसिद्धान्त[2]तत्त्वप्रेक्षानुमानतः । बभौ महाक्रियानिष्ठः श्रीसङ्घाम्भोजभास्करः ॥ ९७ ॥
श्री**वर्द्धमान**सूरीणामादेशात् सूरितां ददौ । श्री**जिनेश्वर**सूरिश्च ततस्तस्य गुणोदधेः ॥ ९८ ॥
श्रीमान**भयदेवाख्यः** सूरिः पूरितविष्टपः । यशोभिर्विहरन् प्राप **पल्यपद्रपुरं** शनैः ॥ ९९ ॥
आयुःप्रान्ते च संन्यासमवलम्ब्य दिवः पुरीम् । अलंचक्रु**र्वर्द्धमान**सूरयो भूरयः क्रमात् ॥ १०० ॥
समये तत्र दुर्भिक्षोपद्रवैर्देशदौःस्थ्यतः । सिद्धान्तस्त्रुटिमायासीदुच्छिन्ना वृत्तयोऽस्य च ॥ १०१ ॥
ईषत्स्थितं च यत्सूत्रं प्रेक्षासुनिपुणैरपि । दुर्बोधदेश्यशब्दार्थं खिलं जज्ञे ततश्च तत् ॥ १०२ ॥
निशीथेऽथ[3] प्रभुं धर्मस्थानस्थं शासनामरी । नत्वा निस्तन्द्रमाह स्मा**भयदेवं** मुनीश्वरम् ॥ १०३ ॥
श्री**शीलाङ्कः** पुरा **कोट्याचार्य**नाम्ना प्रसिद्धिभूः । वृत्तिमेकादशाङ्ग्याः स विदधे धौतकल्मषः ॥१०४॥
अङ्गद्वयं विनाऽन्येषां कालादुच्छेदमाययुः । वृत्तयस्तत्र संघानुग्रहायाद्य कुरूद्यमम् ॥ १०५ ॥
सूरिः प्राह ततो मातः ! कोऽहमल्पमतिर्जडः । श्री**सुधर्म**कृतग्रन्थदर्शनेऽप्यसमर्थधीः ॥ १०६ ॥
अज्ञत्वात् क्वचिदुत्सूत्रे विवृते कल्मषार्जनम् । प्राच्यैरनन्तसंसारभ्रमिभृद् दर्शितं महत् ॥ १०७ ॥
अनुलंघ्या च ते वाणी तदादिश करोमि किम् । इतिकर्तव्यतामूढो [4]लेभे न किञ्चिदुत्तरम् ॥ १०८ ॥
देवी प्राह मनीषीश ! सिद्धान्तार्थविचारणे । योग्यतां तव मत्वाऽहं[5] कथयामि विचिन्तय ॥ १०९ ॥
यत्र सन्दिह्यते चेतः प्रष्टव्योऽत्र मया सदा । श्रीमान् सीमन्धरस्वामी तत्र गत्वा धृतिं कुरु ॥ ११० ॥
आरभस्व ततो ह्येतत् माऽत्र संशय्यतां त्वया । स्मृतमात्रा समायास्ये इहार्थे त्वत्पदोः शपे ॥ १११ ॥
श्रुत्वेत्यङ्गीचकाराथ कार्यं दुष्करमप्यदः । आचामाम्लानि चारब्ध ग्रन्थसंपूर्णतावधिः ॥ ११२ ॥
अक्लेशेनैव संपूर्णा नवाङ्ग्या वृत्तयस्ततः । निरवाह्यत देव्या च प्रतिज्ञा या कृता [6]पुरा ॥ ११३ ॥
महाश्रुतधरैः शोधितासु तासु चिरन्तनैः । ऊरीचक्रे तदा श्राद्धैः पुस्तकानां च लेखनम् ॥ ११४ ॥
ततः शासनदेवी च विजने तान् व्यजिज्ञपत् । प्रभो ! मदीयद्रव्येण विधाप्या प्रथमा प्रतिः ॥ ११५ ॥
इत्युक्त्वा सा च समवसरणोपरि हैमनीम् । उत्तरीयां निजज्योतिःक्षतदृष्टिरुचिं दधौ ॥ ११६ ॥
तिरोधत्त ततो देवी यतयो गोचरादथ । आगता ददृशुः सूर्यबिम्बवत् तद्विभूषणम् ॥ ११७ ॥
चित्रीयितास्ततश्चित्ते पप्रच्छुस्ते प्रभून् मुदा । ते चाचख्युरुदन्तं तं श्राद्धानाह्वाययंस्तथा ॥ ११८ ॥
आयातानां ततस्तेषां गुरवः प्रैक्षयंश्च तत् । अजानन्तश्च तन्मूल्यं श्रावकाः **पत्तनं** ययुः ॥ ११९ ॥
अदर्शि तैश्च सा तत्र स्थितरत्नपरीक्षिणाम् । अज्ञास्तेऽपि च तन्मूल्ये मन्त्रं विदधुरीदृशम् ॥ १२० ॥
अत्र श्री**भीम**भूपालपुरतो मुच्यतामियम् । तद्दत्तो निःक्रयो ग्राह्यो मूल्यं निर्णीयते तु [7]न ॥ १२१ ॥
समुदायेन ते सर्वे पुरो राज्ञस्तदद्भुतम् । मुमुचुः किल शक्रेण प्रणयात् प्राभृतं कृतम् ॥ १२२ ॥
तदुदन्ते च विज्ञप्ते तुष्टः प्रोवाच भूपतिः । तपस्विनां विना मूल्यं न गृह्णामि प्रतिग्रहम् ॥ १२३ ॥
ते प्रोचुः श्रीमुखेनास्य यमादिशति निःक्रयम् । स एवास्तु प्रमाणं नस्ततः **श्रीभीम**भूपतिः ॥ १२४ ॥

---

1 N महीधर° । 2 B °सिद्धान्तः तत्वकावनुमानतः; D °सिद्धान्ततत्त्वः प्रेक्षानु° । 3 N ऽत्र । 4 N लभते । 5 N मन्त्वाहं ।
6 D पुरा कृता । 7 N ननु ।

द्रम्मलक्षत्रयं कोशाध्यक्षाद् दापयति स्म सः । पुस्तकान् लेखयित्वा च सूरिभ्यो ददिरेऽथ तैः ॥ १२५ ॥
**पत्तने ताम्रलिप्त्यां चाशापल्यां धवलक्कके** । चतुराश्चतुरशीतिः श्रीमन्तः श्रावकास्तथा ॥१२६॥
पुस्तकान्यङ्गवृत्तीनां वासनाविशदाशयाः । प्रत्येकं लेखयित्वा ते सूरीणां प्रददुर्मुदा ॥ १२७ ॥–युग्मम् ।
प्रावर्त्तन्त नवाङ्गानामेवं तत्कृतवृत्तयः । श्री**सुधर्मो**पदिष्टेष्टतत्त्वतालककुञ्चिकाः ॥ १२८ ॥

§४. पुरं **धवलकं** प्रापुरथ संयमयात्रया । स्थानेष्वप्रतिबन्धो हि सिद्धान्तोपास्तिलक्षणम् ॥ १२९ ॥
आचामाम्लतपःकष्टान्निशायामतिजागरात् । अत्यायासात् प्रभोर्जज्ञे रक्तदोषो दुरायतिः ॥ १३० ॥
अमर्षन्त[1]जनास्तत्र प्रोचुरुत्सूत्र[2]देशनात् । वृत्तिकारस्य कुष्ठोऽभूत् कुपितैः शासनामरैः ॥ १३१ ॥
निशम्येति शुचाक्रान्तः स्वान्तः[3]प्रायाभिलाषुकः । निशि प्रणिदधे पन्नगेन्द्रं श्रीधरणाभिधम् ॥ १३२ ॥
लेलिहानेश्वरं लेलिहानं देहमनेहसा । अचिरेणैक्षत श्रीमान् स्वप्ने सत्त्वकषोपलः ॥ १३३ ॥
कालरूपेण कालेन व्यालेनालीढविग्रहः । क्षीणायुरिति संन्यास एव मे साम्प्रतं ततः ॥ १३४ ॥
इति ध्यायन् द्वितीयाह्नो[4] निशि स्वप्ने स औच्यत ।
धरणेन्द्रेण रोगोऽयं मयाऽऽलिह्य हृतस्ततः ॥ १३५ ॥–युग्मम् ।
निशम्येति गुरुः प्राह नार्तिर्मे मृत्युभीतितः । रोगाद्वा पिशुना यत्तु[5] कद्वदा तद्धि दुःसहम् ॥ १३६ ॥
नागः प्राहाधृतिर्नात्र कार्या जैनप्रभावनाम् । एकामथ विधेहि त्वं हित्वा दैन्यं जिनोद्धृतेः ॥ १३७ ॥
श्री**कान्तीनगरी**सत्क**धनेश**श्रावकेण यत् । वारिधेरन्तरा यानपात्रेण व्रजता सता ॥ १३८ ॥
तदधिष्ठायकसुरस्तम्भिते वहने ततः । अर्चितव्यन्तरस्योपदेशेन व्यवहारिणा[6] ॥ १३९ ॥
तस्या भुवः समाकृष्टा प्रतिमाणां त्रयी शितिः[7] । तेषामेका च **चारूपग्रामे** तीर्थे प्रतिष्ठितम् ॥ १४० ॥
अन्या श्री**पत्तने** चिञ्चातरोर्मूले निवेशिता । अरिष्टनेमिप्रतिमा प्रासादान्तःप्रतिष्ठिता ॥ १४१ ॥
तृतीया **स्तम्भनग्रामे सेटिका**तटिनीतटे । तरुजाल्यन्तरे भूमिमध्ये विनिहिताऽस्ति च ॥ १४२ ॥
तां श्रीमत्पार्श्वनाथस्याप्रतिमां प्रतिमामिह ।
प्रकटीकुरु तत्रैतन्महातीर्थं भविष्यति ॥ १४३ ॥–षड्भिः कुलकम् ।
पुरा **नागार्जुनो** विद्यारससिद्धो धियां निधिः । रसमस्तम्भयद् भूम्यन्तःस्थबिम्बप्रभावतः ॥ १४४ ॥
ततः **स्तम्भनका**भिख्यस्तेन ग्रामो निवेशितः ।
तदेषा तेऽपि कीर्तिः स्याच्छाश्वती पुण्यभूषणा ॥ १४५ ॥–युग्मम् ।
अदृष्टान्यैः सुरी वृद्धारूपा ते[8] मार्गदर्शिका । श्वेत(श्वान ?)स्वरूपतः[9] क्षेत्रपालो गन्ता[10] यथाग्रतः ॥ १४६ ॥
उक्त्वेत्यन्तर्हिते तत्र सूरयः प्रमदोद्धुराः । व्याकुर्वन्ति स्म सङ्घस्य निशावृत्तं तदद्भुतम् ॥ १४७ ॥
ततश्च संमदोत्तालैः प्रक्रान्ता धार्मिकैस्तदा । यात्रा नवशती तत्र शकटानां चचाल च ॥ १४८ ॥
अग्रे भूत्वा प्रभुर्वृद्धा-कौलेयकपदानुगः । श्रावकानुगतो[11]ऽचालीत् तृणकण्टकिना पथा[12] ॥ १४९ ॥
शनैस्तत्र ययुः **सेटीतीरे** तत्र तिरोहितौ । वृद्धा-श्वानौ ततस्तस्थुस्तत्राभिज्ञानतोऽमुतः ॥ १५० ॥
पप्रच्छुरग्रे गोपालान् पूज्यं किमपि भो ! किमु । जाल्यामत्रास्ति तेष्वेकः प्रोवाच श्रूयतां प्रभो ! ॥ १५१ ॥
ग्रामे **महीणला**ख्यस्य मुख्यपट्टकिलस्य गौः । कृष्णाऽऽगत्य क्षरेत् क्षीरमत्र सर्वैरपि स्तनैः ॥ १५२ ॥
गृहे रिक्तैव सा गच्छेद् दुह्यमानाऽतिकष्टतः । मनाग्मुञ्चति दुग्धं न ज्ञायतेऽत्र न कारणम् ॥ १५३ ॥
तत्र तैर्दर्शितं क्षीरमुपविश्यास्य सन्निधौ । श्रीमत्पार्श्वप्रभोः स्तोत्रं प्रोचे प्राकृतवस्तुकैः ॥ १५४ ॥

---

1 N अमर्षणजना° । 2 N प्रोचुरुच्छत्र° । 3 N प्रेयाभि° । 4 N द्वितीयेऽह्नि । 5 N यंतु । 6 N °हारिणो । 7 N त्रयीशितुः । 8 N सूरिवृद्धारूपांते । 9 N °स्वरूपतस्तत्र । 10 N D °पालो यथाग्रतः । 11 N °नुमतो । 12 N यथा ।

'जयतिहुयणे'त्यादि'वृत्तं द्वात्रिंशतं तदा । अवदन् स्तवनं तत्र नासाग्रन्यस्तदृष्टयः ॥ १५५ ॥
बभूव प्रकटं श्रीमत्पार्श्वनाथप्रभोस्ततः । शनैरुन्निद्रतेजस्वि बिम्बं तत्प्रतिवस्तुकम् ॥ १५६ ॥
प्रणतं सूरिभिः सङ्घसहितैरेतदञ्जसा । गतो रोगः समग्रोऽपि कायोऽभूत् कनकप्रभः ॥ १५७ ॥
गन्धाम्भोभिः स संस्नप्य कर्पूरादिविलेपनैः । विलिप्य चार्चितः सौमनसैः सौमनसैस्तदा ॥ १५८ ॥
चक्रे तस्योपरि च्छाया सच्छायाप्रतिसीरया । सत्रादवारितात् तत्र सङ्घो ग्राम्यानभोजयत् ॥ १५९ ॥
प्रासादार्थं ततश्चक्रुः श्राद्धाद् द्रव्यस्य मीलनम् । अक्लेशेनामिलल्लक्षं ग्राम्यैरनुमता च भूः ॥ १६० ॥
श्रीमल्लवादिशिष्यश्च[1] श्राद्धैराम्रेश्वराभिधः । महिषाख्य[2]पुरावासः समाह्वायि धियां निधिः ॥१६१॥
अनुयुक्तः स [3]संमान्य कर्म्मान्तरविचक्षणः । अथ प्रासाद आरेभे[4] सोऽचिरात् पर्यपूर्यत ॥ १६२ ॥
कर्माध्यक्षस्य वृत्तौ यद्द्रम्म एको दिनं प्रति । विहितो घृतकर्षश्च भुक्तौ तण्डुलमानकम् ॥ १६३ ॥
विहृत्य भोजनात् तेन तेन द्रव्येण कारिता । स्वा देवकुलिका चैत्ये सा तत्राऽद्यापि दृश्यते ॥ १६४ ॥
शुभे मुहूर्ते बिम्बं च पूज्यास्तत्र न्यवेशयन् । तद्रात्रौ धरणाधीशस्तेषामेतदुपादिशत् ॥ १६५ ॥
स्तवनादमुतो गोप्यं मद्वाचा वस्तुकद्वयम् । कियतां हि विपुण्यानां प्रत्यक्षीभूयते मया ॥ १६६ ॥
तदादेशादतोऽद्यापि त्रिंशद्वृत्तमिता स्तुतिः । सपुण्यैः पठ्यमानाऽत्र क्षुद्रोपद्रवनाशिनी ॥ १६७ ॥
ततःप्रभृत्यदस्तीर्थं मनोवाञ्छितपूरणम् । प्रवृत्तं रोगशोकादिदुःखदावघनाघनः ॥ १६८ ॥
अद्यापि कलशो जन्मकल्याणकमहामहे । आद्यो धवलकश्राद्धः स च स्नपयति प्रभुम् ॥ १६९ ॥
बिम्बासनस्य पाश्चात्यभागेऽक्षरपरंपरा । ऐतिह्यात् श्रूयते पूर्वकथितात् प्रथिता जने[5] ॥ १७० ॥
नमेस्तीर्थकृतस्तीर्थे वर्षे द्विकचतुष्टये (२२२२) । आषाढः श्रावको गौडोऽकारयत् प्रतिमात्रयम् ॥१७१॥
श्रीमान् जिनेश्वरः सूरिस्तथा श्रीबुद्धिसागरः । चिरमायुः प्रपाल्यैतौ संन्यासाद् दिवमीयतुः ॥१७२॥
श्रीमानभयदेवोऽपि शासनस्य प्रभावना[म्] । पत्तने श्रीकर्णराज्ये धरणोपास्तिशोभितः ॥१७३॥
विधाय योगनीरोधधिकृतापरवासनः । परं लोकमलंचक्रे धर्मध्यानैकधीनिधिः ॥ १७४ ॥–युग्मम् ।

वृत्तान्तोऽभयदेवसूरिसुगुरोरीदृक् सतामर्चितः
कल्याणैकनिकेतनं कलिकलाशैलाग्रवज्रप्रभः[6] ।
भूयाद् दुर्धरदुर्घटोदिततमःप्रध्वंससूर्योदयः
श्रेयःश्रीनिलयो लयं दिशतु वो ब्रह्मण्यनन्तोदये ॥ १७५ ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ प्रद्युम्नसूरीक्षितो
वृत्तान्तोऽभयदेवसूरिसुगुरोः शृङ्गो ग्रहेन्दुप्रभः ॥ १७६ ॥

ॐ

वरकरुणबन्धुजीवकवृतिलकनालीकरूपविजयश्च ।
श्रीप्रद्युम्नसुजाते सुमनश्चित्रं नवकुलश्रीः ॥ १७७ ॥

॥ इति श्रीअभयदेवसूरिप्रबन्धः ॥

॥ ग्रंथाग्र १८२, अ० ४ । उभयं ४४५६ ॥

---

1 N °शिष्यस्य । 2 N महिषाख्यः । 3 N समं मान्य । 4 N आरोढुं । 5 N B A ऐतिह्यान्; A पूर्वकथितात् प्रथितान् जने; N पूर्वं प्रकथिता जने । 6 N °शैलाद्रि° ।

# २०. श्रीवीराचार्यचरितम् ।

§१. **वीराचार्यः** श्रिये [1]वोऽस्तु सन्तः क्रोधादरिक्षयम् ।
यदभ्यासे कृताभ्यासाः[2] कर्तुमिच्छन्ति साम्प्रतम् ॥ १ ॥
यत्करस्पर्शमात्रेण कन्यादिष्वपि संक्रमम् । विधाय भारती वक्तिः कथं **वीरः** स वर्ण्यते ॥ २ ॥
बहुश्रुतमुखाच्छ्रुत्वा तद्वृत्तं कियदप्यहम् । वर्णयिष्यामि बालः किं न वक्ति स्वानुमानतः ॥ ३ ॥
श्रीम**च्चन्द्रमहागच्छ**सागरे रत्नशैलवत् । अवान्तराख्यया गच्छः **षंडिल्ल** इति विश्रुतः ॥ ४ ॥
श्री**भावदेव** इत्यासीत् सूरिरत्र च रत्नवत् । पात्रे स्नेहादिहीनोऽपि सदा लोकहिते रतः ॥ ५ ॥
श्रीमद्**विजयसिंहा**ख्याः सूरयस्तत्पदेऽभवन् । प्रतिवादिद्विपघटाकटपाटनलम्पटाः ॥ ६ ॥
तत्पट्टमानससरोहंसाः श्री**वीरसूरयः** । बभूवुर्गति-शब्दाभ्यामनन्यसदृशश्रियः ॥ ७ ॥
राजा श्री**सिद्धराज**स्तान् मित्रत्वे स्थापयन् गुणैः । स्वभावविशदे ह्येव ददाति कुमुदे मुदम् ॥ ८ ॥
अथ मित्रे समासीनो[3] नृपतिर्नर्मणाऽवदत् । श्री**वीराचार्य**मुनीन्द्र तेजो वः क्षितिपाश्रयात् ॥ ९ ॥
अथाहुः सूरयः स्वीयप्रज्ञाभाग्यैर्विजृम्भते । प्रतिष्ठा नान्यतः श्वा किं सिंहौजस्वी नृपादृतः ॥ १० ॥
राजाह मत्सभां मुक्त्वा [4]भवन्तोऽपि विदेशगाः । अनाथा इव भिक्षाका बाह्यभिक्षाभुजो ननु ॥ ११ ॥
सूरिराह भवत्प्रेम सन्दानमिव नोऽभवत् । दिनानीयन्ति गच्छाम आपृष्टः साम्प्रतं भवान् ॥ १२ ॥
भूपः प्राह न दास्यामि गन्तुं निजपुरात् तु[5] वः । सूरिराह निषिध्यामो यान्तः[6] केन वयं ननु ॥ १३ ॥
इत्युक्त्वा स्वाश्रयं प्रायात् सूरिर्भूरिकलानिधिः । रुरोध नगरद्वारः सर्वान्[7] नृपतिर्नरैः ॥ १४ ॥
इतश्च गुरवः सान्ध्यं[8] धर्मकृत्यं विधाय ते । विधिवद् विदधुर्ध्यानं श्रीपर्णीपट्टकासनाः[9] ॥ १५ ॥
अध्यात्मयोगतः प्राणनिरोधाद् गगनाध्वना । विद्याबलाच्च ते प्रापुः पुरीं **पल्ली**तिसञ्ज्ञया ॥ १६ ॥
प्रातर्विलोकिते तत्रादृष्टे राजा [10]व्यचिन्तयत् । किं मित्रं गत एवायं सदा शिथिलमोहधीः ॥ १७ ॥
ईदृक् पुनः कथं प्राप्योऽनेकसिद्धिकुलावनिः । सिद्धस्नेहे वयं मन्दपुण्याः पिण्याकसंनिभाः ॥ १८ ॥
इतश्च ब्राह्मणैः **पल्ली**वासैः श्री**पत्तने** पुरे । विज्ञाप्यततरां श्रीम**ज्जयसिंह**नरेशितुः ॥ १९ ॥
तिथि-नक्षत्र-वारावासरव्यक्तियुते दिने । श्री**वीरसूरि**रायातः संगतो न इति स्फुटम् ॥ २० ॥
श्रुत्वेति विममर्शाथ भूपालः केलिरीदृशी । विकृता यत्स एवैष प्रेमोहापोहवासरः ॥ २१ ॥
ययावाकाशमार्गेण तद्रात्रावेव स ध्रुवम् । नर्मलीलाद्वितीयेऽह्नि तद्द्विजानां स संगतः ॥ २२ ॥—युग्मम् ।
उत्कण्ठा[11]रसपूर्णोऽथ प्रधानान् प्राहिणोन्नृपः । आह्वानाय महाभक्त्या ययुस्ते तत्र मंक्षु च ॥ २३ ॥
नृपस्यानुनयः सान्द्रीकृत्य तैश्च प्रकाशितः । औदासीन्यस्थितास्ते च प्रोचुः प्रचुरसंयमाः ॥ २४ ॥
*निजं विद्याबलं ज्ञातुं वयं हि विजिहीर्षवः । देशान्तरं पुराप्यात्मस्थानस्थैर्ज्ञायते न तत् ॥ २५ ॥
कारणं सहकार्यत्र राज्ञ उच्चावचं वचः । तस्माद् विहृत्य देशेषु यक्ष्यामो भवत्पुरे ॥ २६ ॥
दुर्लभं मानुषं जन्म व्रतं विद्या बलं श्रुतम् । मुधा नराधिपस्नेहे मोहैः को नाम हारयेत् ॥ २७ ॥
इत्याकर्ण्याथ ते प्रोचुरेकं शृणुत भूपतेः । वचःसिद्धत्वमस्माकं त्वत्संगात् तथ्यतास्पदम् ॥ २८ ॥
भविष्यति पुनः कालमियन्तं पितृनाम तत् । सिद्धे भवति पार्श्वस्थे वयं सिद्धा हि नान्यथा ॥ २९ ॥

---

1 N सोऽस्तु । 2 A कृतभ्यासः कर्तुमिच्छति; D कृतभ्यासाः । 3 N सभासीनो । 4 N भवतो । 5 N °पुराय । 6 N यातः । 7 N सर्वत्र नृपतेर्नरैः । 8 N साध्यं । 9 N श्रीपट्टपट्टिका° । 10 N व्यचिंतयत् । 11 N उत्कंवारस° । * एष श्लोको नास्ति N पुस्तके ।

श्रुत्वेति बहुमानाद्रेरिव तैराददे वचः । आयास्यते पुरे तत्र मा चिन्ताऽत्र विधीयताम् ॥ ३० ॥
**महाबोधपुरे** बौद्धान् वादे जित्वा बहूनथ[1] । **गोपालगिरि**मागच्छन् राज्ञा तत्रापि पूजिताः ॥ ३१ ॥
परप्रवादिनस्तैश्च जितास्तेषां च भूपतिः । छत्र-चामरयुग्मादिराजचिह्नान्यदान्मुदा ॥ ३२ ॥
व्यावृत्याथ[2] निजां भूमिमायान्तस्तेऽवतस्थिरे । पुरे **नागपुरे** तत्राप्यकार्षुश्च प्रभावनाः ॥ ३३ ॥
ज्ञात्वाथ **सिद्धराजे**नाहूता भक्तिभृताऽथ ते । प्रैषुः परिच्छदं **गोपगिरि**राजसमर्पितम् ॥ ३४ ॥
विजहुः सूरयस्तस्माच्छनैः संयममात्रया । **अणहिल्लपुरा**सन्नं **चारूपग्राम**मागमन् ॥ ३५ ॥
अभ्युद्ययावथ श्रीम**ज्जयसिंह**नरेश्वरः । प्रवेशोत्सवमाधत्तादृष्टपूर्वं सुरैरपि ॥ ३६ ॥

§ २. अथात्र **वादिसिंहा**ख्यः सांख्यवादी समागमत् ।
पत्रं[3] प्रदत्तवानीदृक्लिखित[4]श्लोकदुर्घटम् ॥ ३७ ॥

तथा हि–

**उद्धृत्य बाहू किल रारटीति यस्यास्ति शक्तिः स च वावदीतु ।**
**मयि स्थिते वादिनि वादिसिंहे नैवाक्षरं वेत्ति महेश्वरोऽपि ॥ ३८ ॥**

श्रीमत्**कर्णमहाराज**बालमित्रं यतीश्वरः । **गोविन्दाचार्य** इत्यस्ति **वीराचार्य**कलागुरुः ॥ ३९ ॥
रात्रौ रहः समागत्य छन्नवेषः क्षमाधिपः । प्राह तं किमयं भिक्षुरपि पूज्यैः प्रतीक्ष्यते ॥ ४० ॥
तैः प्रोचे भवतामेव वाग् विलोक्याऽत्र भूपते ! । प्रभाते विवदिष्यन्तं **वीराचार्यो** विजेष्यते ॥ ४१ ॥
प्रीतो राजा प्रभाते तमाह्वास्त नृपपर्षदि । स निःस्पृहत्वदम्भेन शान्तोऽवददिदं तदा ॥ ४२ ॥
वयं किमागमिष्यामो निःसंगा यदि भूपतिः । असद्वाक्कौतुकी भूम्यासनोऽत्रायातु सोऽपि तत् ॥ ४३ ॥
प्रातः कुतूहली राजोररीकृत्य तदप्यथ । तदावासे समागच्छदुर्व्यामुर्व्यामुपाविशत् ॥ ४४ ॥
समाह्वयत **गोविन्दसूरिं** सूरिसभासदम् । सोऽपरान् साकृतीनीदृग् विदुषोऽपि पुरो दधे ॥ ४५ ॥
**वीराचार्यं** महाप्रज्ञाप्रज्ञातानेकशास्त्रकम् । उद्यत्कवित्व[5]वक्तृत्ववारिधिं पश्चाच्चकार च ॥ ४६ ॥
समाययौ ततस्तत्रोपविष्टः कम्बलासने । राजाह को वदेदेषाममुना वादिना सह ॥ ४७ ॥
श्री**गोविन्द**प्रभुः स्माहानौचित्यज्वरसंगिना । अनेन शास्त्रपाथोधितरण्डोपमधीजुषः ॥ ४८ ॥
अज्ञेन सह लज्जन्ते वदन्तस्तत् शिशुः कृती । **वीरो** वदिष्यति प्राज्ञः श्रुत्वा वादी स चावदत् ॥ ४९ ॥
दुग्धगन्धमुखो मुग्धः किं वक्ष्यति मया सह । असमानो विग्रहोऽयं नास्माकं भासते शुभः ॥ ५० ॥
राज्ञोचे क्षीरकण्ठास्यादर्थपीयूषगन्धितः । अस्मात् त्वन्मदधत्तूरविभ्रमः स हरिष्यति ॥ ५१ ॥
श्रुत्वेति स उपन्यासमवज्ञावशतो दधे । अर्धकूर्पर[6]हस्तस्थमस्तकस्तर्कसंभवम् ॥ ५२ ॥
विरते तत्र चाजल्पत् श्री**वीरो** विदुषां प्रभुः । वदामि गद्यात् पद्याद् वा यच्चित्ते तव भासते ॥ ५३ ॥
स्वेच्छं तदुद्दिश छन्दोऽलंकारं च ममाग्रतः । सर्वानुवादमर्थानुवादं वा सत्वरं भवान् ॥ ५४ ॥
श्रुत्वेति स पुनः प्राह **गूर्जर**ाडम्बरः पुरः । मम न[7] क्रियते बालः किं ज्ञास्यति[8] भवानिह ॥ ५५ ॥
अथ शक्तिस्तवास्ते चेत् पद्येन छन्दसा पुनः । वद मत्तमयूरेणालंकाराच्छिह्नवात् तथा ॥ ५६ ॥
सर्वानुवादमाश्रित्य स निशम्येति तं जगौ । उत्तिष्ठासनसंस्थोऽस्याः सावधानस्ततः शृणु ॥ ५७ ॥
वयं नहि गिरां देव्या अवहेलां विदध्महे । अर्द्धसुप्तपुरो वादादाकर्ण्येति स चोत्थितः ॥ ५८ ॥
वाचि वीरं ततो वीरं यथा प्रागुक्तसंश्रवात् । उपन्यस्यन्तमाकर्ण्याखिद्यतोद्यतगीर्बलः ॥ ५९ ॥

1 N बहून् तथा । 2 N व्यावृत्याथ । 3 N पत्रं । 4 N लिखितश्लोक° । 5 N °कवितवितत्कला । 6 A N °कर्पूर° । 7 N गमनं । 8 A ज्ञास्यसि ।

श्रीवीरे विरते अल्पादर्थतस्तस्य कुर्वतः। अनुवादं जगादासौ जल्प सर्वानुवादतः॥ ६०॥
न शक्तोऽहमिति प्राह वादिसिंहस्ततो नृपः। स्वयं बाहौ विधृत्यामुं पातयामास भूतले॥ ६१॥
वक्तुं न शक्तश्चेदुच्चैरासने कथमासिवान्। तथा च कविराजः श्रीश्रीपालो वाक्यमब्रवीत्॥ ६२॥

गुणैरुत्तुङ्गतां याति नोच्चैरासनसंस्थितः।
प्रासादशिखरस्थोऽपि काकः किं गरुडायते॥ ६३॥

ततो विडम्ब्यमानं तं दृष्ट्वा श्रीवीर ऊचिवान्। श्रूयतां[1] भूप मे वाणी प्राणी दर्पेण जीयते॥ ६४॥
यदनेन नराधीश! शुद्धन्यायैकनिष्ठधीः। सभाध्यक्षमवज्ञातो[2] वर्णाश्रमगुरुर्भवान्॥ ६५॥
स्वास्याम्बुजस्थिरावासप्रदानात् प्रीणिता दृढम्। त्वद्गुरा कोपभूरत्र दैन्यदाद् वाचि मन्दताम्॥६६॥—युग्मम्।
वाचां रणे तु चास्माकं प्रागूढः समयो ह्ययम्। वादी निगृह्यमाणो हि संरक्ष्यः प्रतिवादिना॥ ६७॥
ततो विमुच्यतां श्रीमन्! मदान्धोऽयं कृपास्पदम्। निशम्येति नृपेणासौ मुक्तो[3] दृष्ट्वा ततो बहिः॥ ६८॥
जयपत्रार्पणादस्याददे तेजः परं तदा। द्रव्यं तु निःस्पृहत्वेन स्पृशत्यपि पुनर्न सः॥ ६९॥

§ ३. अन्यदा जययात्रायां चलिते[4] गूर्जरेशितुः[5]। चतुरङ्गचमूचक्रे रेणुच्छादितभानुनि॥ ७०॥
श्रीवीराचार्यचैत्यस्य पुरतः सञ्चरिष्णुनि। नृपमीक्षितुमाप्ते च कवीन्द्रे तत्र विश्रुते॥ ७१॥
क्रमात् तत्र च संप्राप्तः श्रीसिद्धाधीशभूपतिः। तं समीक्ष्य कविः कश्चित् समस्यापदमभ्यधात्॥७२॥
तदुद्दिश्य कवौ वीराचार्ये दृष्टिं न्यधान्नृपः। अनायासात् ततोऽपूरि कृतिना तेन सत्वरम्॥ ७३॥

तथा हि—

कालिन्दि ब्रूहि कुम्भोद्भवजलधिरहं नाम गृह्णासि कस्मा-
च्छत्रोर्मे नर्मदाऽहं त्वमपि मम सपत्न्याश्च गृह्णासि नाम।
मालिन्यं तर्हि कस्मादविरलविगलत्कज्जलैर्मालवीनां
बाष्पाम्भोभिः किमासां समजनि चलितो गूर्जराणामधीशः॥ ७४॥

श्रुत्वेति भूप आचख्यौ तव सिद्धगिराऽनया। मालवेशं गृहीष्यामि संशयो नात्र मे हृदि॥ ७५॥
त्वया बलानकस्थेनाशिष्टो मे शत्रुनिग्रहः। विजयस्य पताकेयं ततस्तत्रास्तु सा दृढम्॥ ७६॥
श्रीभावाचार्यचैत्यस्य पताकाऽभूद् बलानके। महता विहितं यस्माच्चिरेणापि न नश्यति॥ ७७॥

§ ४. वादी कमलकीर्त्याख्य आशाम्बरयतीश्वरः। वादमुद्राभृदभ्यागादवज्ञातान्यकोविदः॥ ७८॥
आस्थानं सिद्धराजस्य जिह्वाकण्डूययार्दितः। वीराचार्यं स आह्वास्त ब्रह्माणं विदुषां रणे॥ ७९॥
पञ्चवर्षीयबालां स सहादाय समागमत्। अवज्ञया वादिनं तं वीक्ष्य न्यविशदासने॥ ८०॥
स चोपन्यस्तवान् सर्वसामर्थ्येन गुरुस्ततः। श्रीवीरो बालया सार्द्धमरंस्त कुतुकादिव॥ ८१॥
स तं दृष्ट्वाऽब्रवीद् वादी भूपते! भवतः सभा। नोचिता विदुषां बालक्रीडाविप्लवसम्भृता॥ ८२॥
[6]राजाऽऽह स्वप्रमाणेन क्रीडत्येष बुधेश्वरः। इत्युक्त्वा प्रेक्षितो[7] वीरो नृपेण प्राह[8] सस्मितः॥ ८३॥
समानवयसोर्वादो विमृश्येति मया ततः। एषा बाला समानिन्ये वस्त्रावृति[9]निरादरा॥ ८४॥
एष वाद्यपि नग्नत्वाद् दृश्यते डिम्भसन्निभः। उभयोरेतयोरस्तु वादो क्रीडात्वनेन नः[10]॥ ८५॥
स्त्रीनिर्वाणनिषेधेनानयैवास्य च विग्रहः। विधेयस्तदसौ वादमुद्रयामुं विजेष्यते॥ ८६॥

---

1 N श्रूयते। 2 N सभामध्यमवज्ञातो। 3 B मुक्तः कृष्ट्वा। 4 N चलितो। 5 N गूर्जरे शिशुः। 6 N राजा हस्तप्रमाणेन।
7 N प्रेषितो। 8 D सह। 9 N B वस्त्रावृत°। 10 N तु।

अस्पृष्टहस्तं तन्मौलौ प्रदायोचे यतीश्वरः । तां जल्प वादिनानेन स्थापय क्षीपु निर्वृतिम् ॥ ८७ ॥
ततः सा निपुणाधीतप्रमाणविदुषामिव । वाग्भरैः [1]स्थापयामास तेनाशक्यस्थिरोत्तरैः ॥ ८८ ॥
अनेडमूकतां प्राप्ते तत्र वित्रस्तमानसे । समुर्जेयजयारावाः सभ्यानां नृपतेरपि ॥ ८९ ॥
भूपालः प्राह को जेता मत्सभां तपति प्रभो । श्रीवीरे वादिवीरेऽत्र सिद्धेऽनेकासु सिद्धिषु ॥ ९० ॥
यदीयहस्तस्पर्शेन संक्रान्ता यत्र तत्र च । वाग्देवी भाषतेऽजस्रं स शक्यः केन वर्णितुम् ॥ ९१ ॥
एवं युगप्रधानाभगुणव्यूताः पटा इव । श्रीवीरसूरयः पान्तु भव्यजाड्यापहारिणः ॥ ९२ ॥
श्रीमत्कालकसूरीणामनिर्वाच्यं प्रभाद्भुतम् । अद्यापि यत्कुले वीराः प्राग्वीरान् भासयन्त्यमी ॥ ९३ ॥

श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीवीरवृत्ताद्भुतं
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गः सविंशोऽभवत् ॥ ९४ ॥

॥ ग्रं० ९६ अ० ११; उभयं ४५५२ अ० ११ ॥

## ॥ इति श्रीवीरसूरिप्रबन्धः ॥

---

1 D वाग्भिरस्थापयत्तेनाशक्यमंगाभिरावृता ।

# २१. श्रीवादिदेवसूरिचरितम् ।

श्रीदेवसूरिर्वः पातु य आक्रम्य दिगम्बरम् । कीर्तेरपि स्त्रियः सिद्धमूलधिष्ण्य[1]मतिष्ठिपत् ॥ १ ॥
देवाचार्यः श्रिये[2] भूयात् केवलज्ञानशालिनाम् । विमोच्याभोजनं येनाव्युच्छित्तिः शासने कृता ॥ २ ॥
जीवितानादिराजीवममध्यमहितोदयम् । अनन्तविधुरद्रोहं वदनं तस्य संस्तुमः ॥ ३ ॥
भ्रान्तिसंवर्तकभ्रान्तिदुर्वृत्तरजसः शमे । अवारवारिवाहश्रि तद्वृत्तं परिकीर्त्यते ॥ ४ ॥

§१. अस्ति गूर्जरदेशस्य नवनीतमिवोद्धृतम् । अष्टादशशतीनाम मण्डलं स्वर्गखण्डलम् ॥ ५ ॥
तत्र मड्डाहृतं नाम नगरं नगराजिभिः । ध्वान्तस्येव महादुर्गमगम्यं सूर्यरोचिषाम् ॥ ६ ॥
सद्वृत्तोज्जीवनच्छायो राजमानः स्वतेजसा । प्राग्वाटवंशमुक्तासीद् वीरनागाभिधो गृही ॥ ७ ॥
तत्प्रिया सत्क्रियाधारा प्रियंकरगुणावनिः । जिनदेवीति देवीव मेना हिमवतो बभौ ॥ ८ ॥
अन्यदा सा निशि स्वप्ने पीयूषरुचिमैक्षत । प्रविशन्तं मुखे पृथ्व्यामवतारेच्छया किल ॥ ९ ॥
अन्वये गुरवस्तस्य श्रीमुनिचन्द्रसूरयः । सन्ति शान्तिकमश्रान्ते येषां नामाक्षराण्यपि ॥ १० ॥
प्रातः सा तत्पुरो[3] गत्वा नत्वा सत्त्वमहालया । अपृच्छन्मुदिताचार्य(०र्थं ?) स्वप्नस्यातिशयस्पृशः ॥ ११ ॥
देवश्चन्द्रनिभः कोऽप्यवततार तवोदरे । आनन्दयिष्यते विश्वं येन ते चेत्थमादिशन् ॥ १२ ॥
अथ सा समयेऽसूत सुतं वज्रोपमद्युतिम् । यत्तेजसा कलिः शैलश्चकम्पे भेदभीतितः ॥ १३ ॥
हृदयानन्दने तत्र वर्धमाने च नन्दने । चन्द्रस्वप्नात् पूर्णचन्द्र इत्याख्यां तत्पिता व्यधात् ॥ १४ ॥
कदाचिन्नगरे तत्राशिवं जज्ञे जनान्तकृत् । सहसैव यतो लोकः प्रेक्ष्याप्रेक्ष्यत्वमादधौ ॥ १५ ॥
वीरनागो विचिन्त्यैतद् दक्षिणां दिशमाश्रयत् । भृगुकच्छपुरं प्राप लाटदेशविभूषणम् ॥ १६ ॥
विहारं जंगमं तीर्थं श्रीमुनिचन्द्रसूरयः । चक्रुस्तत्र तदादेशात् स्थापितोऽसौ सधर्मिभिः ॥ १७ ॥
वर्षाष्टकवयाः पूर्णचन्द्र इत्यस्य नन्दनः । चक्रे [4]सुखासिकादीनां वाणिज्यं शैशवोचितम् ॥ १८ ॥
वित्त[5]नौवित्तहर्म्येषु विकाशिचणकैः समाः । द्राक्षा अवापदर्भत्वेऽपि हि पुण्यानि जाग्रति ॥ १९ ॥
कस्मिंश्चित्सदनेऽन्येद्युर्गतो व्यञ्जनविक्रये । द्रम्मान् हेम च गेहेशं पिटैरुज्झन्तमैक्षत ॥ २० ॥
[6]भवाभाग्याद् घटश्लक्ष्णकर्कराङ्गाररूपतः । पश्यति स्म ततः पूर्णचन्द्रः प्राहातिविस्मितः ॥ २१ ॥
किमुज्झसि महाद्रव्यं नरसञ्जीवनौषधम् । इत्युक्ते स गृही दध्यौ चित्तेऽहो पुण्यवानसौ ॥ २२ ॥
वत्स ! द्रव्यमिदं वंशपात्रे क्षिप्त्वा ममार्पय । इत्युक्तः[7] पूरयित्वाऽसौ पात्राण्यस्यार्पयत् तदा ॥ २३ ॥
तत्करस्पर्शमाहात्म्यात् तद् द्रव्यं पश्यति स्म सः । अपुण्य-पुण्ययोः साक्षादीदृशं दृश्यतेऽन्तरम् ॥ २४ ॥
सोऽन्तर्गेहं क्षिपत्येवं सर्वं निहितमन्तरा । एका सुखादिकाहेतोः प्रसृतिस्तेन चार्प्यत[8] ॥ २५ ॥
हृष्टश्च पितुराख्याय[9] ददौ तद् द्रविणं मुदा । वीरनागः प्रभूणां च यथावृत्तमदोऽवदत् ॥ २६ ॥
व्यमृशंस्तेऽप्यवातार्पीत्[10] किमेष पुरुषोत्तमः । दर्शयन्ती स्वरूपाणि लक्ष्मीर्यस्याभिलाषुका ॥ २७ ॥
रक्तत्कुमुदचन्द्रांशुप्रसराच्छादकोदयः । विरोचनो विनेयश्चेदेषानन्तोन्नतिस्तदा ॥ २८ ॥
ततस्तेऽप्यवदन् वाचं शृणु नस्तव यद्वरम् । वस्तु सम्पद्यते कस्य भक्त्या तत् प्रतिपद्यते ॥ २९ ॥
स प्राह नाथ ! पूज्यानां कुले नो गुरुताभृताम् । अहं त्वेकसुतो जीर्णस्तदास्था मेऽत्र जीवितुम् ॥ ३० ॥

---

1 N मूलविद्या° । 2 N प्रियो । 3 N तत्पुरे । 4 B सुखादिका° । 5 D चित्त; N चितनौचित्यह° । 6 N D तवा° । 7 N इत्युक्त्वा । 8 N चार्थिता । 9 D पिधेत्राख्याय । 10 A ऽप्याथाता° ।

व्यवसाये क्षमः कीदृक्षेऽपि नाहं जनन्यपि । अस्य नश्यत्तनुक्षेमाऽनन्यसुहृद् वदामि किम् ॥ ३१ ॥
अत्र चेत् पूज्यपादानामाग्रहस्तन्मया नहि । विचारणं हि कर्तव्यं गृह्यतामेष नन्दनः ॥ ३२ ॥–विशेषकम् ।
प्रभुराहाथ मे पञ्चशती चारित्रिणां गणे । सर्वेऽपि ते सुताः सन्तु तवैकस्मादतः प्रति ॥ ३३ ॥
अमी साधर्मिका यावज्जीवं कशिपुदास्तव । धर्मं चेद्यास्व निश्चिन्तः परलोकैकशम्बलम् ॥ ३४ ॥
तदम्बां च यथादेशकारिणीमनुमान्य च । पूर्णचन्द्रं दृढाभक्तिं प्रभवः समदीक्षयन् ॥ ३५ ॥
§ २. रामचन्द्राभिधां तस्य[1] ददुरानन्दनाकृतेः[2] । दर्शनोल्लासिनः सङ्घसिन्धुवृद्धिविधायिनः ॥ ३६ ॥
दुर्जय[3]त्वकलंकस्यापनोदादुपकारिणीम् । यत्प्रज्ञा[4] दुर्गशास्त्राणामपि वाग्गोचरः स किम् ॥ ३७ ॥
तर्क-लक्षण-साहित्यविद्यापारगतः स च । अभूत् स्वपरसिद्धान्ते वर्तमाने कषोपलः ॥ ३८ ॥
शिवाद्वैतं वदन् धन्धः[5] पुरे धवलके द्विजः । काश्मीरः सागरो जिग्ये वादात् सत्यपुरे पुरे ॥ ३९ ॥
तथा नागपुरे क्षुण्णो गुणचन्द्रो दिगंबरः । चित्रकूटे भागवतः शिवभूत्याख्यया पुनः ॥ ४० ॥
गंगाधरो गोपगिरौ धारायां धरणीधरः । पद्माकरो द्विजः पुष्करिण्यां वादमदोद्धुरः ॥ ४१ ॥
जितश्च श्रीभृगुक्षेत्रे कृष्णाख्यो ब्राह्मणाग्रणीः । एवं वादजयोन्मुद्रो रामचन्द्रः क्षिताविभूत् ॥ ४२ ॥
विद्वान् विमलचन्द्रोऽथ हरिचन्द्रः प्रभानिधिः । सोमचन्द्रः पार्श्वचन्द्रो विबुधः कुलभूषणः ॥
प्राज्ञः शान्तिस्तथाऽशोकचन्द्रश्चन्द्रोल्लसद्यशाः । अजायन्त सखायोऽस्य मेरोरिव कुलाचलाः ॥ ४४ ॥
ततो योग्यं परिज्ञाय रामचन्द्रं मनीषिणम् । प्रत्यष्ठिपन् पदे दत्तदेवसूरिवराभिधम् ॥ ४५ ॥
पितुस्तस्य व्रतं वीरनागाख्यस्य स्वसुः पुनः । पुरात्तव्रतमुद्राया अमुद्राया महाव्रतैः ॥ ४६ ॥
महत्तराप्रतिष्ठां च व्यधुर्विधुरितांहसः । श्रीमच्चन्दनबालेति नामास्याः प्रददुर्मुदा ॥ ४७ ॥–युग्मम् ।
§ ३. अन्यदा गुर्वनुज्ञाताः श्रीमन्तो देवसूरयः । विहारमादधुः पूज्याः पुरे धवलकाभिधे ॥ ४८ ॥
उदयो नाम तत्रास्ति विदितो धार्मिकाग्रणीः । श्रीमत्सीमंधरस्वामिबिम्बं सैष व्यधापयत् ॥ ४९ ॥
स प्रतिष्ठाविधौ तस्यानिश्चिन्वन् सद्गुरुं ततः । श्रीमच्छासनदेवीं चाराध्नोत् त्र्यहमुपोषितः ॥ ५० ॥
युगप्रधानकल्पेन श्रीमता देवसूरिणा । प्रतिष्ठापय बिम्बं स्वमित्युपादिशत्ताथ सा ॥ ५१ ॥
तत्तदर्थनया बिंबप्रतिष्ठां विदधुस्तदा । ऊ दा व स ति नाम्ना तच्चैत्यमद्यापि विद्यते ॥ ५२ ॥
§ ४. अथ नागपुरेऽन्येद्युः प्रभवो विजिहीर्षवः । गिरीन्द्रमर्बुदं प्रापुरुत्का आरुरुहुश्च तम् ॥ ५३ ॥
मन्त्रिणोऽम्बप्रसादस्य गिरिमारोहतः सह । गुरुभिः कर्मवैचित्र्याद् दन्दशूकोऽदशत् पदे ॥ ५४ ॥
ज्ञात्वा ते प्रेषयंस्तस्य हेतुं पादोदकं तदा । धौतमात्रे तदा तेन दंशोऽसौ निर्विषोऽभवत् ॥ ५५ ॥
श्रीनाभेयं नमस्कृत्य संसारार्णवतारणम् । तुष्टुवुः श्रीमदम्बां च प्रत्यक्षां शासनेश्वरीम् ॥ ५६ ॥
साऽवादीत् कथयिष्यामि किंचित्ते बहुमानतः । दूरे सपादलक्षे त्वं मा यासीर्मम वाक्यतः ॥ ५७ ॥
गुरुस्तवाष्टमासायुरस्मादेव दिनाद् यतः । व्यावर्तस्व ततो वेगादणहिल्लपुरं प्रति ॥ ५८ ॥
इत्याख्याय तिरोधाच्च देवी दध्यौ ततः प्रभुः । मय्यम्बाया इवाम्बाया वत्सलत्वमहो महत् ॥ ५९ ॥
व्यावृत्यायात् ततः पूज्यपुर आख्यत् सुरीवचः । आनन्दमसमं प्रापुस्ते कालज्ञानतो निजात् ॥ ६० ॥
§ ५. अन्यदा देवबोधाख्यः श्रीभागवतदर्शनी । भूरिवादजयोन्मुद्रः श्रीमत्पत्तनमाययौ ॥ ६१ ॥
अवालम्बत[6] पत्रं च राजद्वारे मदोद्धुरः । तत्र श्लोकं दुरालोकं विबुधैरलिखच्च सः ॥ ६२ ॥

1 D यस्य । 2 A D °कृते । 3 A दुर्जेयत्व°; N दुर्नयत्व° । 4 N °प्राज्ञा° । 5 N बंधः । 6 N अवलंबत° ।

तथा हि–

**एकद्वित्रिचतुःपंचषण्मेनकमने न काः ।**
**देवबोधे मयि क्रुद्धे षण् मेनकमनेनकाः ॥ ६३ ॥**

ततः सर्वेऽपि विद्वांस एनमालोक्य सूर्यवत् । दृशो विपरियन्ति स्म दुर्बोधं सुधियामपि ॥ ६४ ॥
षण्मासान्ते तदा **चाम्बाप्रसादो** भूपतेः पुरः । **देवसूरि**प्रभुं विज्ञराजं दर्शयति स्म च ॥ ६५ ॥
स भूपालपुरः श्लोकं बिभेदोद्भेदधीनिधिः । कुलत्थजलवद्दण्डशैलं राज्ञा मतः सुहृत् ॥ ६६ ॥

**अथास्य श्लोकस्य विवरणं–कै गै रै शब्दे । कायन्तीति कचित् डप्रत्यये काः शब्देन वादिनः । ते षड्वाः । सन्तीति क्रियाध्याहारे, षड्वादिनो न सन्ति । क सति–देवबोधे मयि क्रुद्धे सति । पुनः कथंभूते–एकद्वित्रिचतुःपंचषण्मेनकमने । मांक माने, मानं माः क्विप् प्रमाणं । एकं प्रमाणं प्रत्यक्षरूपं येषां ते एकमाः, चार्वाकाः, एकप्रमाणवादिनः । तथा द्विमाः–द्वे प्रमाणे प्रत्यक्षानुमानरूपे येषां ते द्विमाः, द्विप्रमाणवादिनो बौद्धाः वैशेषिकाश्च । तथा त्रिमाः–त्रीणि प्रमाणानि प्रत्यक्षानुमानागमरूपाणि येषां ते त्रिमाः, त्रिप्रमाणवादिनः सांख्याः । चत्वारि प्रत्यक्षानुमानागमोपमानरूपाणि प्रमाणानि येषां ते चतुर्माः, चतुःप्रमाणवादिनो नैयायिकाः । तथा पंचमाः–पंच प्रत्यक्षानुमानागमोपमानार्थापत्तिरूपाणि प्रमाणानि येषां ते पंचमाः, पंचप्रमाणवादिनः प्राभाकराः । तथा षण्माः–षट् प्रत्यक्षानुमानागमोपमानार्थापत्त्यभावरूपाणि प्रमाणानि येषां ते षण्माः, षट्प्रमाणवादिनो मीमांसकाः । तेषामिनास्तद्वेत्तृत्वात्, तान् कमते अभिलषति, स एकद्वित्रिचतुःपंचषण्मेनकमनः, तस्मिन्मयि । तथा मेनकमनेनका अपि न काः न वादिनः । मा लक्ष्मीः, तस्या इनः स्वामी विष्णुः; कमनो ब्रह्मा; इन आदित्यः; मेनकमनेनाः । अल्पत्वात्कप्रत्यये मेनकमनेनकाः । तेऽपि विष्णु-ब्रह्म-सूर्या मयि देवबोधे क्रुद्धे सति अज्ञानत्वाच्च काः न वादिनः । यतो–देवान् बोधयति–इति शब्दव्युत्पत्त्या तेऽपि मया बोधिताः सुज्ञाना भवन्ति । ततो मानुषाणां षड्वादिनां विदुषामपि किं प्रमाणं का वार्ता ॥ इति पत्रावलंबव्याख्या ॥ ग्रं० १६ ॥**

ॐ

§ ६. अथास्ति [1]**थाहडो** नाम धनवान् धार्मिकाग्रणीः । गुरुपादान् प्रणम्याथ चक्रे विज्ञापनामसौ ॥६७॥
आदिश्यतामतिश्लाघ्यं कृत्यं यत्र धनं व्यये । प्रभुराहालये जैने द्रव्यस्य सफलो व्ययः ॥ ६८ ॥
आदेशानन्तरं तेनाकार्यत श्रीजिनालयः । हेमाद्रिधवलस्तुङ्गो दीप्यत्कुम्भमहामणिः ॥ ६९ ॥
श्रीमतो वर्द्धमानस्याबीभरद् बिम्बमद्भुतम् । यत्तेजसा जिताश्चन्द्रसूर्यकान्तमणिप्रभाः ॥ ७० ॥
**शतैकादशके साष्टासप्ततौ विक्रमार्कतः । वत्सराणां व्यतिक्रान्ते श्रीमुनिचन्द्रसूरयः ॥ ७१ ॥**
आराधनाविधिश्रेष्ठं कृत्वा प्रायोपवेशनम् । शमपीयूषकल्लोलप्लुतास्ते[2] त्रिदिवं ययुः[3] ॥ ७२ ॥–युग्मम् ।
वत्सरे तत्र चैकत्र पूर्णे श्री**देवसूरि**भिः । श्रीवीरस्य प्रतिष्ठां स **थाहडो**ऽकारयन्मुदा ॥ ७३ ॥

§ ७. अथ **नागपुरे** श्रीमान् **देवसूरि**प्रभुर्ययौ । अभ्यागादत्र च श्रीमा**नाह्लादन**नरेश्वरः ॥ ७४ ॥
प्रणनाम सहायातः[4] स च भागवतेश्वरः । **देवबोध** इमामार्यामार्याचारोऽवदत् प्रभुम्[5] ॥ ७५ ॥

सा चेयं–

**यो वादिनो द्विजिह्वान् साटोपं विषममानमुद्गिरतः ।**
**शमयति स देवसूरिर्नरेन्द्रवन्द्यः कथं न स्यात् ॥ ७६ ॥**

एवं चासौ महाभक्त्या स्थापितो नगरान्तरा । राज्ञा विज्ञाततत्त्वार्थो भव्यान् बोधयति स्म सः ॥ ७७ ॥
तत्र **श्रीसिद्धराजो**ऽथ नगरं रुरुधेतराम् । तत्रस्थं **देवसूरिं** च ज्ञात्वा व्याववृते ततः ॥ ७८ ॥
मध्यस्थितेऽत्र तन्मित्रे दुर्गं लातुं न शक्यते । इति ध्यात्वाऽऽह्वयद् भक्त्या नृपः श्रीपत्तने प्रभुम् ॥७९॥

---

1 N थाहडो । 2 N °प्लुतोऽसौ । 3 N ययौ । 4 N तदायातः; B तदायात°; D सदायातः । 5 B प्रभोः; D प्रभुः ।

तत्र वर्षास्ववस्थाप्याश्विने[1] तं चाभ्यमित्रयत् । प्राकारं जगृहे श्रीमान् **सिद्धराज**श्च सत्वरम् ॥ ८० ॥

§८. अथ **कर्णावती**सङ्घोऽन्येद्युरुत्कण्ठितः प्रभोः । आह्वाययन्महाभक्त्या चतुर्मासकहेतवे ॥ ८१ ॥
ततस्तत्राययुः पूज्याः सङ्घादेशपुरस्कृताः । [2]शुद्धोपाश्रयमासाद्यावस्थानं प्रतिशुश्रुवुः ॥ ८२ ॥
अरिष्टनेमिप्रासादे व्याख्यानं च प्रतुष्टुवुः । अबुध्यन्ताबुधा लोका यस्य श्रवणतो घनाः ॥ ८३ ॥

इतश्च दाक्षिणात्यः श्री**कर्णाट**नृपतेर्गुरुः । श्री**जयकेशिदेव**स्य श्री**सिद्धेश**प्रसूपितुः ॥ ८४ ॥
अनेकवादिनिर्जिष्णुर्वादिपुत्रकपद्धतिम् । वामपादे वहन् गर्वपर्वताधित्यकाश्रितः ॥ ८५ ॥
जैनो जैनमतद्वेषिदर्पसर्पकरण्डिका । श्रीमान् **कुमुदचन्द्रा**ख्यो वादिचक्री दिगम्बरः ॥ ८६ ॥
श्रीवासुपूज्यचैत्यस्थो वर्षानिर्वाहहेतवे । श्री**देवसूरि**धर्माख्याप्रभावामर्षणस्तदा ॥ ८७ ॥
दानान्मुखरयन् बंदिवृन्दानि प्रजिघाय सः । उद्दीपयन् वचोभिस्तं सूरिं शमिकुलेश्वरम् ॥ ८८ ॥
—पंचभिः कुलकम् ।

वैतालिकपतिर्धर्म्मिपर्षदन्तःप्रविश्य च । आह स्तुतिपरस्तस्य काव्यानि क्रोधदीप्तये ॥ ८९ ॥

गेय-वाङ्मययोः पारदृश्वरीं प्रेक्ष्य यन्मतिम् ।
वीणापुस्तकभृद् ब्राह्मी विस्मिता [3]तदपारगा ॥ ९० ॥

ततस्तद्ब्रह्ममास्थाय तदुपास्तितरास्तिकाः । सिताम्बराः परानन्दभाजो भवत किं न हि ॥ ९१ ॥

तथा हि—

**हंहो श्वेतपटाः किमेष विकटाटोपोक्तिसण्टङ्कितैः**
**संसारावटकोटरेऽतिविषमे मुग्धो जनः पात्यते ।**
**तत्त्वातत्त्वविचारणासु यदि वो हेवाकलेशास्तदा**
**सत्यं कौमुदचन्द्रमंह्रियुगलं रात्रिंदिवं ध्यायत ॥ ९२ ॥**

अथाह **देवसूरीणां माणिक्या**ख्यो विनेयराट् । दर्शनप्रतिकूलाभिर्वाग्भी रोपाङ्कुरं वहन् ॥ ९३ ॥

तद्यथा—

**कः कण्ठीरवकण्ठकेसरसटाभारं स्पृशत्यंह्रिणा**
**कः कुन्तेन शितेन नेत्रकुहरे कण्डूयनं कांक्षति ।**
**कः सन्नह्यति पन्नगेश्वरशिरोरत्नावतंसश्रिये**
**यः श्वेताम्बरदर्शनस्य कुरुते वन्द्यस्य निन्दामिमाम् ॥ ९४ ॥**

**माणिक्यः** शिष्यमाणिक्यं जगदे **देवसूरिभिः** । नात्र कोपावकाशोऽस्ति खरवादिनि दुर्जने ॥ ९५ ॥

अथ वन्दिराज आह श्वेताम्बरचणकतुरग इह वादी ।
श्वेताम्बरतमसोऽर्कः श्वेताम्बरमशकधूमोऽयम् ॥ ९६ ॥
श्वेताम्बरप्रहसने[4] स सूत्रधारः प्रभुः **कुमुदचन्द्रः** ।
किं वाच्यस्तव वाचा संदिश किमिहान्यवाग्डमरैः[5] ॥ ९७ ॥

स गुरुः प्राह नाहंयुर्व्रतमास्माकदर्शने । ततः कथय मद्भ्रातुः [6]पुर एकं हि वाचिकम् ॥ ९८ ॥

तद् यथा—

**दिगम्बरशिरोमणे ! गुणपराङ्मुखो मा स्म भू-**
**र्गुणग्रहफलं हि तद् वसति यद् रमापङ्कजे ।**

---

1 N °स्थाप्याश्विते । 2 सिद्धो° । 3 N वेदपारगा । 4 N श्वेतांबरः प्रहसनैः । 5 N वाग्डंबरैः । 6 D पर ।

ततस्त्यज मदं कुरु प्रशमसंयतान् स्वान् गुणान्
दमो हि मुनिभूषणं स च भवेन्मदव्यत्यये ॥ ९९ ॥

इत्येवं कथिते बन्दिवरेणास्य पुरो मुनेः । वादिनः सोऽवदन्मूर्खसाधूनां शम उत्तरम् ॥ १०० ॥
उत्तेजनं किमप्येष क्रियते चित्तपीडनम् । अस्य विद्याकलामध्यं ज्ञायते येन तत्त्वतः ॥ १०१ ॥
विमृश्येति निजैः साधुवृन्दं रथ्यान्तरागतम् । वैरानुबन्धचेष्टाभिरुपासर्जयदद्भुतम् ॥ १०२ ॥
इत्येवमुपसृष्टेऽत्र निःप्रकम्पे सुमेरुवत् । दिग्वासा निजरूपाभमविशिष्टं प्रचक्रमे ॥ १०३ ॥
निजचैत्यामतो यान्तीं वृद्धां गोचरचर्यया । उपसर्गयितुं साध्वीमारेभेऽन्येद्युरुद्यतः ॥ १०४ ॥
अथ पल्लवकान् पल्लवकानिव [1]तमस्तरोः । प्रेष्य तां कुण्डके क्षिप्त्वा नर्त्तयामास साहसी ॥ १०५ ॥
अहो साध्वीमसौ वृद्धां दर्शनिव्याजबुक्कसः । विडम्बयति पापीति तस्यावर्णो जनेऽभवत् ॥ १०६ ॥
अथ सा मोचिता कैश्चिदनुकम्पापरैर्नरैः । सूरेरुपाश्रयं प्रायादतिगद्गदशब्दभूः ॥ १०७ ॥
किंकृतस्तेऽपमानोऽयमिति पृष्टा च सूरिभिः । जरामन्युभराव्यक्तस्वरं प्राह तदग्रतः ॥ १०८ ॥
वर्द्धितोऽध्यापितः सूरिपदे मद्गुरुभिर्भवान् । स्थापितोऽस्मादृशामीदृग्विडम्बनकृते ध्रुवम् ॥ १०९ ॥
दिगम्बरोऽयं बीभत्सदर्शनः स्वविटव्रजैः । राजाध्वनि प्रयान्तीं मामनाथवदुपाद्रवत् ॥ ११० ॥
विद्वत्तया प्रभुत्वेन किं फलं तेऽवकेशिना । किं करस्थेन शस्त्रेण यदि शत्रुर्न हन्यते ॥ १११ ॥
शमशैत्यमहावल्ल्याः फलं परिभवो दृढः । ग्रस्यते मुच्यते वापि राहुणा स्वेच्छया शशी ॥ ११२ ॥
अद्य ते विक्रमः[2] कालः पठितस्य फलं ह्यदः । धान्ये शुष्के धने चास्ते वर्षन् मेघः करोतु किम् ॥ ११३ ॥
देवसूरिरथो वाचमुवाच क्रोधदुर्द्धराम् । मा विषादं कुरुष्वार्ये ! दुर्विनीतः पतिष्यति ॥ ११४ ॥
आर्याह दुर्विनीतोऽयं पतिष्यति नवा पुनः । त्वयि न्यस्तभरः सङ्घः पतिष्यत्येव वेत्रवत् ॥ ११५ ॥
प्रभुराह स्थिरीभूय चेद् विलोकयसे ततः । मुक्तानामिह वेधो नः संभवी गुणयुक्तये[3] ॥ ११६ ॥
अथ चोवाच माणिक्य ! विज्ञप्तिं लिख मामिकाम् । श्रीमत्पत्तनसङ्घाय विनयातिशयस्पृशम् ॥ ११७ ॥
आदेशानन्तरं सोऽथ लिखति स्म स्फुटाक्षरम् । अदर्शयत् प्रभोः पश्चादथासौ प्रत्यवाचयत् ॥ ११८ ॥

'स्वस्ति नत्वा जिनं श्रीमदणहिल्लपुरे प्रभुम् ।
संघं कर्णावतीपुर्याः श्रीमंतो देवसूरयः ॥ ११९ ॥
भक्त्या विज्ञपयन्त्यत्राशाम्बरेण विवादिना ।
शीघ्रमेवागमिष्यामः कृतवादाश्रवा इति ॥ १२० ॥'

अचिराध्वन्यपुंसश्च हस्ते साऽथ समर्पिता । गूर्जराणां राजधानीं स प्राप प्रहरत्रयात् ॥ १२१ ॥
दृष्ट्वा सङ्घेन मर्त्योऽसौ भोजनाच्छादनादिभिः । सम्मान्य प्रहितः शीघ्रं प्रतिलेखं समर्प्य च ॥ १२२ ॥
आयाद् देवगुरोः पार्श्वे सङ्घादेशं ददौ मुदा । एनं ललाटे विन्यस्य विवृत्यावाचयच्च सः ॥ १२३ ॥

'स्वस्ति श्रीतीर्थनेतारं नत्वा श्रीपत्तनात् प्रभुः ।
सङ्घः कर्णावतीपुर्यां परवादिजयोर्जितम् ॥ १२४ ॥
श्रीदेवोपपदं सूरिं समादिशति सम्मदात् ।
आगन्तव्यं झटित्येव भवता वादिपुङ्गव ! ॥ १२५ ॥

---

1 N नमस्तरोः । 2 N विक्रमे । 3 A B N °युक्तयोः ।

किं च श्रीवादिवेतालशान्त्याचार्यस्य सद्गुरोः ।
पार्श्वेऽधीतस्य शैवाख्यवादिजेतुर्महामतेः[1] ॥ १२६ ॥
मुनिचन्द्रप्रभोः किं न भवान् शिष्यशिरोमणिः ।
कालेऽधुनातने सङ्घोदयस्त्वय्येव तिष्ठते ॥ १२७ ॥
ततः श्रीसिद्धभूपालं विज्ञप्यात्र सकौतुकम् ।
त्वत्कृतं विजयं स्वस्य वयं वीक्षामहे ध्रुवम् ॥ १२८ ॥
श्राद्धानां श्राविकाणां च शतानि त्रीणि सप्त च ।
विजयाय तव श्रीमन्नाचामाम्लानि तन्वते ॥ १२९ ॥
प्रतिहन्तुं प्रत्यनीकसुराणां वैभवं लघु ।
देव्याः श्रीशासनेश्वर्या बलं दातुं स्वसत्त्वतः[2] ॥ १३० ॥

तदर्थमिति विज्ञाय विश्ववन्द्यः स बन्दिनम् । प्राहिणोद् वादिने धीमान् शिक्षयित्वा स्ववाचिकम् ॥१३१॥
स गत्वा चाह—वादीन्द्रो **देवाचार्यो** वदत्यदः । मन्मुखेन प्रजल्पस्मि **पत्तने**ऽहं त्वमापतेः ॥ १३२ ॥
सभायां **सिद्धराज**स्य पश्यतां तत्सभासदाम् । स्वपराभ्यस्तवाणीनां प्रमाणं लभ्यते यथा ॥ १३३ ॥
भवत्वेवमिति प्रोच्य[3] स दिगम्बरसंनिधौ । गत्वा प्रोवाच तत्सर्वं श्रुतं तेनावधानतः ॥ १३४ ॥
गमिष्यत इति प्रोक्ते वादिनाऽजायत क्षुतम् । तत्तस्याशकुनं मत्वा समेत्याकथयद् गुरोः ॥ १३५ ॥
ततः सूरिर्दिने शुद्धे मेषलग्ने रवौ स्थिते । सप्तमस्थे शशांके च षष्ठे राहौ रिपुद्रुहि ॥ १३६ ॥
प्रयाणं कुर्वतस्तस्य निमित्तं शकुनाः शुभाः । स्फुरितं दक्षिणेनाक्ष्णा शिरःस्पन्दोऽप्यभूद् भृशम् ॥ १३७ ॥
किकीदिविर्दिशोर्मार्गमाययौ चन्द्रकी व्यरौत् । मृगाः प्रदक्षिणं जग्मुर्विषमा विषमच्छिदः ॥ १३८ ॥
तथा रथः प्रभोस्तीर्थनाथस्याभ्यर्चितो जनैः । अभ्यर्हितप्रतिमया बभूवाभिमुखस्तथा ॥ १३९ ॥
इत्यादिभिर्निमित्तैश्च मनः[4]सौष्ठवमाश्रितः । अक्षेपात् **पत्तनं** प्राप प्राप्तरूपेश्वरः प्रभुः ॥ १४० ॥
प्रवेशोत्सवमाधत्त सङ्घ उत्कण्ठितस्ततः । तत्र **सिद्धाधिपं** भूपमपश्यच्च क्षणे शुभे ॥ १४१ ॥
पुनश्च मागधाधीशो दिगम्बरपुरो गतः । प्राह स्फुटं वचोभिः श्री**देवाचार्य**स्य वाचिकम् ॥ १४२ ॥
मदं मुञ्च यतः पुंसां दत्तेऽसौ व्यसनं महत् । शलाकापुरुषस्यापि दशास्यस्य यथा पुरा ॥ १४३ ॥
एवमुक्त्वा स्थिते वैतालिके दिग्वसनोऽवदत् । श्वेताम्बराः कथाभिज्ञा एषामेतद्धि जीवनम्[5] ॥ १४४ ॥
अहं तु तत्कथातीतः[6] प्रीतो वादेन केवलम् । येन स्वस्य परस्यापि प्रमाणं हि प्रतीयते ॥ १४५ ॥
[7]एकमेवोचितं तेन जल्पितं [8]यन्नृपाग्रतः । संगम्यं[9] वादमुद्रायां तदेतत् क्रियतां ध्रुवम् ॥ १४६ ॥
तत्रागच्छाम शीघ्रं च वयमप्यद्य निश्चितम् । प्रस्थास्नवस्तदित्युक्त्वाऽऽरुरोह च सुखासनम् ॥ १४७ ॥
संमुखं पुनरासीच्च क्षुतं व्यमृशदत्र च । विकारः श्लेष्मणः शब्दस्तत्रास्था काऽस्तु मादृशाम् ॥ १४८ ॥
स्याद् वाततोऽपि कण्डूतिर्जिह्वाया मे नरेण न । प्रतिहन्येत वादेन क्षुतमस्माभिषेधकम् ॥ १४९ ॥
याम एव तथाप्येवमुक्त्वा सञ्चरतः सतः । अवातरत् फणी श्यामः कालरात्रेः कटाक्षवत् ॥ १५० ॥
व्यलम्बत परीवारस्तस्याशकुनसम्भ्रमात् । आह च स्वामिनो नैव कुशलं दृश्यते हृदः ॥ १५१ ॥
स प्राह पार्श्वनाथस्य तीर्थाधिष्ठायको मम । धरणेन्द्रो ददौ दर्शं साहाय्यविधये ध्रुवम् ॥ १५२ ॥
इत्याद्यशकुनैर्बाढं निषिद्धोऽपि दिगम्बरः । **अणहिल्लपुरं** प्राप तथा प्रावेशि कैरपि ॥ १५३ ॥

1 N महात्मनः । 2 N स तत्वतः । 3 N प्रोचे । 4 N मतः । 5 N जीवितम् । 6 N कथामीतः । 7 N एकमेवो° । 8 N तन्नृपा° । 9 N संगम्य ।

§९. इतश्च **श्रीदेवसूरेः** पुरं प्रविशतः सतः । **थाहडो नागदेव**श्चाययाते संमुखौ तदा ॥ १५४ ॥
ताभ्यां प्रणम्य विज्ञप्तं दिगम्बरपराजये । दाप्यतां स्वेच्छया द्रव्यमेतदर्थं तदर्जितम् ॥ १५५ ॥
**श्रीदेवसूरयः** प्राहुर्यदि ब्राह्मीप्रसादतः । न जयस्तत् किमुत्कोचैः संकोचैः सत्यसंविदाम् ॥ १५६ ॥
अथाह **थाहडो** नाथाशाम्बरेण धनव्ययात् । तत्रस्थेन धनाध्यक्षाद्वशिता[1] **गांगिला**दयः ॥ १५७ ॥
ऊचुश्च प्रभवो देवा गुरवश्चात्र जाग्रति । कार्यो[2]व्ययो न युष्माभिरस्थाने द्रविणस्य तत् ॥ १५८ ॥
ततः **कुमुदचन्द्रे**णागतेन नगरान्तरा । श्वेताम्बरजयोन्नत्यै कृतं पत्रावलम्बनम् ॥ १५९ ॥
दिनानां विंशतिं प्रत्युपाश्रयं यतिनां तदा । नीरं तृणानि मुक्त्वा च स पुरोगान्यवादयत् ॥ १६० ॥
**केशव**त्रितयं तस्य पक्षे सभ्यतया स्थितम् । अन्येऽप्यर्वाग्दृशः सर्वे तस्य पक्षस्पृशोऽभवन् ॥ १६१ ॥
**थाहड**स्तस्य [3]तत्पत्रं राजद्वारविलम्बितम् । स्फाटयामास शृङ्गारमिव तस्य जयश्रियः ॥ १६२ ॥
श्री**सिद्धा**धीश्वरो राजा **श्रीपालाद**धिगम्य च । वृत्तान्तमाह्वयत् तत्र श्वेताम्बर-दिगम्बरौ ॥ १६३ ॥
सभाव्यवस्थामाधाय प्रैषीद् दूतं च सत्वरम् । सम्बन्धकावतताराय तयो**र्गांगिल**मंत्रिणे ॥ १६४ ॥
ततः श्रीकरणे सोऽथ श्री**देवगुरु**राह्वयत् । जातिप्रत्ययतः किंचिद् [4]विद्विष्टमिव चावदत् ॥ १६५ ॥

तथा हि—

**दन्तानां मलमण्डलीपरिचयात् स्थूलं भविष्णुस्ततिः[5]**
**कृत्वा भैक्षकपिण्डभक्षणविधिं शौचं किलाचाम्लतः[6] ।**
**नीरं साक्षि शरीरशुद्धिविषये येषामहो कौतुकं**
**तेऽपि श्वेतपटाः क्षितीश्वरपुरः[7] कांक्षन्ति जल्पोत्सवम् ॥ १६६ ॥**

आह **देवगुरुः** स्फूर्त्या मीमांसासक्ततांजुषः । धीवराश्चोचितं तद् वः शौचाचारविचारणम् ॥ १६७ ॥

परमुक्तं च—

**विमृश विमृशाम्भोभिः शक्योऽपसारयितुं न यै-**
**र्जठरपिठरीक्रोडस्थेमाप्यहो मललेशकः ।**
**कथमिव सदा तिष्ठन्नात्मन्यरूपिणि तैरहो**
**परिदलयितुं पार्योऽनार्यैः स पातककर्दमः ॥ १६८ ॥**

**माणिक्यः** प्राह किंनाम द्विजस्यास्यास्ति दूषणम् । श्री**सिद्धेश** उपालभ्यः स विवेकबृहस्पतिः ॥१६९॥
संस्कारसूत्रपातेन चतुर्द्धा हृदयात्मनाम् । वपुर्मनोवचःकार्यजातेष्वन्यान्यरूपतः ॥ १७० ॥
अकृत्य-कृत्ययोस्तुल्यकर्त्तव्यत्वस्पृशां सदा । द्विजन्मनां प्रधानत्वं दर्शनानां विडम्बनम् ॥ १७१ ॥
इत्येवमूहापोहेन सम्बन्धो नार्पितस्तदा । प्रातः सभागतः[8] पृष्टो राजा सचिव**गांगिलः** ॥ १७२ ॥
लिखितो भवता कः सम्बन्धः किं वादिनोर्द्वयोः । स प्राहैषामपावित्र्यान्नार्हा राजसभास्थितिः ॥ १७३ ॥
अतो मया न चालेखि सम्बन्धो नृपतिस्ततः । अन्तःकोपानलं बभ्रे पयोधिरिव वाडवम् ॥ १७४ ॥
एवं च सदसन्मर्त्यविशेषविदुषस्तव । व्ययस्य करणं तेऽलंकारारोपस्तवोचितः ॥ १७५ ॥
प्रजानां[9] गौरवर्णोऽपि काल एवावभासते । अल्पोऽप्यत्र न ते दोषः सा ममैवाविचारिता ॥ १७६ ॥
परं दर्शनबाह्यत्वाद् ग्राम्यवन्नागरोऽपि सन् । नान्तर्मुखो गुणान् दोषीकृत्य यस्मात् प्रजल्पसि ॥ १७७ ॥

1 A ध्यक्षोद्वसिता; B ध्यक्षावसिता । 2 N कार्योऽन्वयो । 3 N तत्रत्यं । 4 N विशिष्ट° । 5 N °ष्णुस्तुतिं । 6 N किल-श्रात्मनः । 7 N किमीश्वरपुरः । 8 N समागतः । 9 N प्र(अ)ज्ञानां ।

अन्यदेकं च ते भाग्यं यत्तेन ब्रह्मचारिणा । एवं विवदमानोऽपि शापाद् भस्मीकृतोऽसि[1] न ॥ १७८ ॥
संमान्य चास्य सम्बन्धमधुनैव समर्पय । लिखित्वा वादिनोर्वादकाले जयपराजये ॥ १७९ ॥
राजादेशं गृहीत्वेति तेन प्रैषि निजोऽनुजः । सान्त्वनाय प्रभोः सोऽपि तत्कृत्वाह्वयदत्र तम्[2] ॥ १८० ॥
प्रभुर्**विजयसेना**ख्यं प्रैषीत् तत्र मनीषिणम् । नोचितं गमनं तत्र सचिवानागतो[3] स्वयम् ॥ १८१ ॥
दिगम्बरो विजीयेत चेत् तच्चत्कारपूर्वकम् । निर्वास्योऽतः पुराद् [4]धृत्वा परिस्पन्दं स चौरवत् ॥ १८२ ॥
अथ श्वेताम्बरो हारयेत् तत्तस्य शासनम् । उच्छिद्याशाम्बरत्वेनावस्थाप्यं तैः स्थितैः किमु ॥ १८३ ॥
इत्येवं लेखयित्वाऽत्र तद्[5] राजकरणेऽमुचत् । कृतपक्षोऽपि सम्बन्धोऽनुमतस्तैर्बलोन्नतैः[6] ॥ १८४ ॥
प्रेषितः **सिद्धराजेन** श्री**श्रीपालः** कवीश्वरः । शिक्षां दत्वातिवात्सल्याद् **देवसूरि**प्रभोरथ ॥ १८५ ॥
स प्रणम्य नृपस्याह वाचिकं तत्पुरः स्फुरन् । स्वदेश-परदेशस्था अपि विज्ञा ममार्हिताः ॥ १८६ ॥
परं तथा त्वया बन्धो ! वक्तव्यं वादलीलया । यथा देशान्तरी जेयः स्थेयः श्रेयःकृते [7]मम ॥ १८७ ॥
त्वय्येव मम [8]चित्तस्य दृढावस्थितिरीदृशी । यथा व्रीडयसे नो नः सभां कार्यस्तथा ध्रुवम् ॥ १८८ ॥
अथ श्री**देवसूरि**श्च प्रददे प्रतिवाचिकम् । प्रतापस्ते महाराज ! विदेशिबुधजित्वरः ॥ १८९ ॥
वयं सहकृतस्तत्र परं मा दोल्यतां मनः । गुरूपदिष्टपक्षौघैर्विजेष्ये तं विवादिनम् ॥ १९० ॥
क ईदृग् विदुषां शास्ता तद्वचःकौतुकी च कः । भवानिव भवानिच्छुरप्यहं येन वादकृत् ॥ १९१ ॥
इति तद्वच आख्याच **श्रीपालः** कविवासवः । भूपालोऽपि मुदं प्राप **देवसूरि**वचोमृतैः ॥ १९२ ॥

§ १०. चन्द्राष्टशिववर्षेऽत्र ( ११८१ ) वैशाखे पूर्णिमादिने ।
आहूतौ वादशालायां तौ वादिप्रतिवादिनौ ॥ १९३ ॥

वादी **कुमुदचन्द्र**श्चाययावाडम्बरस्थितः । सुखासनसमासीनश्छत्रचामरशोभितः ॥ १९४ ॥
प्रतीहारेण मुक्तेऽत्र पट्टे चासावुपाविशत् । आहाय्यापि न चायाति श्वेतभिक्षुः कथं भिया ? ॥ १९५ ॥
अथ श्री**देवसूरि**श्चाययौ भूपालसंसदम् । ऊचे **कुमुदचन्द्र**श्च स्वप्रज्ञाबलगर्वितः ॥ १९६ ॥

तथा हि–

**श्वेताम्बरोऽयं किं ब्रूयान्मम वादरणाङ्गणे ।**
**सांप्रतं सांप्रतं तस्माच्छीघ्रमस्य पलायनम् ॥ १९७ ॥**

सूरिः प्रोवाच बन्धुर्मे किमसत्यं वदत्यसौ । श्वेताम्बरो [9]यतः श्वायमसद्वादरणाङ्गणे ॥ १९८ ॥
भषणे तस्य पर्याप्तं रणे नाधिकृतिः पुनः । परं पलायनं शीघ्रं युक्तं युक्तं वदत्यदः ॥ १९९ ॥
श्रुत्वेति पार्षदा वाचं शब्दखण्डनयानया । विस्मिताः स्मितमाधाय दध्युरस्य जयो ध्रुवम् ॥ २०० ॥
एकाग्रमानसौ तत्र शासने पक्षपातिनौ । **थाहडो नागदेव**श्च सह चाजग्मतुर्मुदा ॥ २०१ ॥
**थाहडः** स्वगुरुं व्यज्ञपयद् द्रव्येण भेदिताः[10] । सभ्याः श्रुता मया द्रव्यं तद्दास्ये द्विगुणं ध्रुवम् ॥ २०२ ॥
प्रभावनाकृते स्वीयशासने तत्[11] समादिश । अथावदद् गुरुर्द्रव्यव्ययः कार्यो न हि त्वया ॥ २०३ ॥
अथ प्रभुभिरादिष्टः श्री**मुनिचन्द्र**सूरिभिः । स्वप्ने यद् वत्स ! वक्तव्यः प्रयोगः स्त्रीषु मुक्तिकृत् ॥ २०४ ॥
उत्तराध्ययनग्रन्थटीका श्री**शान्तिसूरि**भिः । कृता तदनुसारेण वक्तव्यं जेष्यते रिपुः ॥ २०५ ॥
इत्युक्त्वा नृपतेराशीर्वादं दर्शनसङ्गतम् । अभ्यधात् सूरिरानन्दहेतुं केतुं विवादिनाम् ॥ २०६ ॥

---

1 N कृतोऽपि सन् । 2 N ते । 3 सचिवानां मतौ । 4 A B पुराकृत्वा । 5 N तं । 6 B बलोन्नते; D बलोन्नतेः । 7 A N कृतेर्मम । 8 N वित्तस्य । 9 A यतश्चायं । 10 N भेदिना । 11 N वत्स° ।

नारीणां विदधाति निर्वृतिपदं श्वेताम्बरप्रोल्लसत्-
कीर्तिस्फीतिमनोहरं नयपथप्रस्तारभङ्गीगृहम् ।
यस्मिन् केवलिनो विनिर्जितपरोत्सेकाः सदा दन्तिनो
राज्यं तज्जिनशासनं च भवतश्चौलुक्य! जीयाच्चिरम् ॥ २०७ ॥

ऊचे कुमुदचन्द्रेण वादिना सिद्धभूपतेः । आशीरासीमभूमीशविद्वद्विजयशोभिनः ॥ २०८ ॥

सा चेयं–

खद्योतद्युतिमातनोति सविता जीर्णोर्णनाभालय-
च्छायामाश्रयते शशी मशकतामायान्ति यत्राद्रयः ।
इत्थं वर्णयतो नभस्तव यशो जातं स्मृतेर्गोचरं
तद्यत्र भ्रमरायते नरपते! वाचस्ततो मुद्रिताः ॥ २०९ ॥

तस्मिन् महर्षिरुत्साहः सागरश्च कलानिधिः । प्रज्ञाभिरामो रामश्च नृपस्यैते सभासदः ॥ २१० ॥
ते प्रोचुर्मुद्रिता वाच इति दिग्वाससः क्षतिः । नारीमुक्तिर्ज्ञानिभुक्ति[1]र्यत्र तत्र जयो ध्रुवः ॥ २११ ॥
देवाचार्यश्च भाभूश्च[2] श्रीपालश्च महाकविः । पक्षे दैगंबरे तत्र केशवत्रितयं मतम् ॥ २१२ ॥
तत्रोत्साहो महोत्साह उवाच प्रकटाक्षरम् । किंचिदुत्प्रासनागर्भं दृष्ट्वा दिग्वसनपार्षदान् ॥ २१३ ॥

तथा हि–

संवृतावयवमस्तदूषणं साधनं सदसि दर्शयिष्यतः ।
अस्य लुञ्चितकचस्य केवलं केशवत्रितयमेति सभ्यताम् ॥ २१४ ॥

महर्षिणा च विज्ञप्ते उपलक्ष्य प्रभुस्ततः । प्रयोग उच्यतां सम्यगादिदेशेति कौतुकात् ॥ २१५ ॥
ततोऽसौ नास्ति निर्वाणं स्त्रीभवस्थस्य देहिनः । तुच्छसत्त्वतया तस्य, यस्तुच्छो मुक्तिरस्य न ॥ २१६ ॥
अत्रोदाहरणं बालः पुमान् तुच्छोऽबलाभवः । अतो न निर्वृतिस्तत्र प्रयोगममुमाह सः ॥ २१७ ॥
देवसूरिरथाह स्मासिद्धं धर्म्मिविशेषणम् । स्त्रीभवे निर्वृतिं प्राप मरुदेवाऽऽगमे मतम् ॥ २१८ ॥
तवाप्रसिद्धमेतच्चेदनेकान्तं ततः पठ । तस्य मार्गमतिक्रम्य दुर्नयो ह्यवधारणम् ॥ २१९ ॥
तथा हेतुश्च ते दूष्योऽनैकान्तिकतया मतः[3] । स्त्रियोऽपि यन्महासत्त्वाः प्रत्यक्षागमवीक्षिताः ॥ २२० ॥
सीताद्या आगमेऽध्यक्षं पुनः साक्षान्महीपतेः । माता श्रीमयणल्लाख्या सत्त्वधर्मैकशेवधिः ॥ २२१ ॥
तथा व्याप्तिरलीकेयं प्रतिव्याप्ते प्रढौकनात् । याः स्त्रियस्ता[4] ध्रुवं तुच्छा नैतत् तत्सत्त्वदर्शनात् ॥ २२२ ॥
तथा तद्दर्शनात् तत्रोदाहृतिश्चापि दूषिता । बालं पुंसामभिज्ञानादतिमुक्तकसाधुवत् ॥ २२३ ॥
तथास्योपनयोऽसिद्धः प्राक् सिद्धान्तात् सदूषणात् । ततो निगमनं दूष्यं प्रत्यनुमानसम्भवात् ॥ २२४ ॥
अनूद्य दूषयित्वैवं परपक्षमथ स्वकम् । पक्षं देवगुरुः प्राह स्त्रीभवेष्वथ निर्वृतिः ॥ २२५ ॥
प्राणिनः सत्त्ववैशिष्ट्यात् स्त्रियः सत्त्वाधिका मया । दृष्टाः कुन्ती-सुभद्राद्या अथोदाहृतिरागमे ॥ २२६ ॥
महासत्त्वाः स्त्रियः सन्ति मोक्षं गच्छन्ति निश्चितम् । इत्युक्त्वा विरते देवगुरावाशाम्बरोऽवदत् ॥ २२७ ॥
पुनः पठ ततोऽवाचि तत्राप्यनवधारिते । त्रिरप्याह कृते नैवमबुद्धा तमदूषयत् ॥ २२८ ॥
प्रतिवाद्याह वाच्यस्यामबोधः प्रकटोत्तरम् । दिग्वासाः प्राह जल्पोऽयं कटित्रे लिख्यतामिह ॥ २२९ ॥
महर्षिः प्राह संपूर्णा वादमुद्राऽत्र[5] दृश्यते । दिगम्बरो जितः श्वेताम्बरो विजयमाप च ॥ २३० ॥

1 N ज्ञानिमुक्ति° । 2 N भानुश्च; A लभूश्च । 3 N सतः । 4 N स्त्रियाज्ञा । 5 N °मुद्रा च ।

एवं चानुमते राज्ञा प्रयोगं **केशवो**ऽलिखत् । बुद्ध्वा च दूषिते तत्र **देवसूरि**स्तथाऽ[1]वदत् ॥ २३१ ॥
अनूद्य दूषणं भित्त्वा स्वपक्षं स्थापयन्निह । कोटाकोटीति शब्दं स प्रयुयोज विदूषणम् ॥ २३२ ॥
अपशब्दोऽयमित्युक्ते वादिना पार्थदेश्वरः । **उत्साहः** प्राह शुद्धोऽयं शब्दः **पाणिनि**सूचितः ॥ २३३ ॥

उक्तं च–

**कोटाकोटिः कोटिकोटिः कोटीकोटिरिति त्रयः ।**
**शब्दाः साधुतया हन्त संमताः पाणिनेरमी ॥ २३४ ॥**

इत्थं निरनुयोज्यानुयोगो निग्रहभूमिका । तवैवैषा समायाता व्यावर्त्तस्व ततो महात् ॥ २३५ ॥
अशक्नुवन्निति प्रत्युत्तरे **देवगुरो**स्ततः । सवैलक्ष्यमथाहस्मानुत्तरः स दिगंबरः ॥ २३६ ॥
महाराज ! महान् वादी **देवाचार्यः** किमुच्यते । राजाह वद निस्तन्द्रः कथयिष्यामि विस्मृतम् ॥२३७॥
अवदत्यन्यसभ्यैश्च [2]हारिताला प्रपातिता । सम्बन्धकविधिं भूप आदिशन्निजपूरुषैः ॥ २३८ ॥
जयपत्रं प्रसादेन **देवसूरे**र्ददौ नृपः । ततोऽवादीद् गुरुस्तं च किमप्याचक्ष्महे वचः ॥ २३९ ॥
शास्त्रीयवादमुद्रायां निग्रहो यत्पराजयः । तद्वादिनस्तिरस्कारः कोऽपि नैव विरच्यताम् ॥ २४० ॥
राजाह भवतां वाग्भिरिदमप्यस्तु किं पुनः । आडम्बरापहारेण दर्शनित्वमवाप्यताम् ॥ २४१ ॥
एवं कृते तदा **वज्रार्गला**ख्या सिद्धयोगिनी । श्रीमत्**कामाख्य**या देव्या प्रहिता साययौ रवात्[3] ॥२४२॥
भूयास्त्वमक्षयस्कन्धः **सिद्धाधीश !** तथा सुहृत् । तथा श्री**देवसूरि**श्चाशिषेत्यभिननन्द तौ ॥ २४३ ॥
मषीकूर्चकमालीय भाले न्यस्तो दिगम्बरः । ततः सा पश्यतामेव निश्चक्राम नभोध्वना ॥ २४४ ॥
तुष्टिदाने ततो लक्षं द्रव्यस्य मनुजाधिपः । ददच्चयपेधि निर्ग्रन्थेश्वरेणास्पृहताजुषा ॥ २४५ ॥
गणगन्धर्वसिद्धादिदेवैः पूर्वमनीक्षितः[4] । राजादेशात् प्रवेशस्य सोऽवर्त्त्यत महोत्सवः ॥ २४६ ॥
समस्ततूर्यनिर्घोषपूर्वं संगीतमङ्गलैः । कुलाङ्गनाकृतैः सूरिर्वसतौ प्रविवेश सः ॥ २४७ ॥
राजवैतालिकस्तत्र तारस्वरत आशिषम् । ददौ सदौचितीकृत्यविदं **देवगुरुं** प्रति ॥ २४८ ॥

**सन्तोषं स्फारनिःकिञ्चनजनवचनैराहृतं प्रेक्ष्य नव्यं**
**कामो हिंसादिकेभ्योऽप्यवगणिततमःशत्रुपक्षे शमादौ ।**
**आदिष्टो यस्य चेतो नृपतिपरिभवात् पुण्यपण्यं प्रवेश्य**
**प्रायासीद् वालयित्वा शुचिमतिवहिकां देवसूरिः स नन्द्यात् ॥ २४९ ॥**

श्री सि द्ध हे म चं द्रा भि धा न शब्दानुशासने । सूत्रधारः प्रभुः श्रीमान् **हेमचन्द्र**प्रभुर्जगौ ॥ २५० ॥

तथा हि–

**यदि नाम कुमुदचन्द्रं नाजेष्यद् देवसूरिरहिमरुचिः ।**
**कटिपरिधानमधास्यत कतमः श्वेताम्बरो जगति ॥ २५१ ॥**

**श्रीचन्द्रसूर**यस्तत्र सिद्धान्तस्येव मूर्त्तयः । शासनोद्धारकूर्मायाशासन् श्री**देवसूर**ये ॥ २५२ ॥

§ ११. श्रीमद्**देवगुरौ** सिंहासनस्थे सति भास्वति । प्रतिष्ठायां न लग्नानि वृत्तानि महतामपि ॥ २५३ ॥
तदा गच्छस्य[5] संघस्य समस्तस्य विभावरी । विभावरीयसी चैषा विनिद्रत्वात् क्षणादगात् ॥ २५४ ॥
प्रातश्च प्रत्युपेक्षायामुपधिं साधवस्तदा । अपश्यन् खण्डशश्चूर्णीकृतामाखुभिरुद्धटैः[6] ॥ २५५ ॥
प्रवर्त्तकेन विज्ञप्ते गुरूणां ते [7]व्यचिन्तयन् । दिग्वासाः स्वसमं वेषं ममापि हि चिकीर्षति ॥ २५६ ॥

---

1 N °तदा° । 2 N हरिताला । 3 N साध्वगौरवात् । 4 N पूर्वमपीक्षितः । 5 N गच्छस्य° । 6 N °रुद्धवैः । 7 N व्यजिज्ञपन् ।

तत्र प्रतिविधौ शक्तिर्मम पूज्यप्रसादतः। सौवीरपूर्ण आनायि कुम्भो यतिना एकतः॥ २५७॥ गलपिण्डनतः कण्ठं तस्य बद्धाऽन्तराऽमुचन्। अभिमन्त्र्य ततः साधूनाह सर्वत्र साहसी॥ २५८॥ खेदं कमपि मा कार्षुर्भवन्तः कौतुकं महत्। समीक्षत यदेतेषां [1]भावि दुर्विनये फलम्॥ २५९॥ पादोनप्रहरे श्राद्धा नम्रस्याजग्मुरानताः। प्रसादाद् गुरुमस्माकं मुञ्चैनमिति भाषिणः॥ २६०॥ मद्बन्धोः का भवेद् बाधा न जानीमो वयं ननु[2]। अज्ञानदम्भतः सर्वप्रकारैस्ते निषेधिताः॥ २६१॥ सार्द्धयामे च संपूर्णे नम्राचार्यस्तदागमत्। नम्राचार्य इवाहार्यः प्रशंसां प्रकटं दधत्॥ २६२॥ आश्लिष्याद्धासने सूरिरुपावेशयदत्र तम्। भ्रातः! का तव[3] पीडाऽस्ति ममाज्ञातमिदं ध्रुवम्॥ २६३॥ स प्राह छिन्धि मा त्वं मां भव मा दीर्घरोषभूः। विमोचय निरोधं मे तन्निरोधे मृतिर्ध्रुवम्॥ २६४॥ तस्यैतद् वचनं दीनं श्रुत्वाऽवददसौ प्रभुः। भवान् सपरिवारोऽपि यातु मे वसतेर्बहिः॥ २६५॥ तदादेशेन ते द्वारे स्थिता [4]आध्माततुन्दकाः। लुलाया इव संपूर्णतिम्यदङ्गास्तदा[5] बभुः॥ २६६॥ साधोः पार्श्वात् समानाय्य कुम्भं सौवीरपूरितम्। आच्छोटयन्मुखं तेषां सञ्जज्ञे मुत्कलः श्रवः॥ २६७॥ अनिरोधे निरोधे सत्यसपत्राकृताश्च* ते। नृजलस्य प्रवाहेण जनः सर्वोऽपि विस्मितः॥ २६८॥ आर्हतोऽपि भृशं शोकतप्तस्तस्मात् पराभवात्। ययौ **कुमुदचन्द्रो**ऽयमदृश्यत्वममास्विव[6]॥ २६९॥ तुष्टिदानं ददानस्य राज्ञः सूरेरगृह्णतः। **आशुको**ऽब्दे[7] गते मन्त्री राज्यारामशुकोऽब्रवीत्॥ २७०॥ देवैषां निःस्पृहाणां न धनेच्छा तज्जिनालयः। विधाप्यते यथामीषां पुण्यं तव च वर्धते॥ २७१॥ भवत्वेवं नृपप्रोक्ते मन्त्री चैत्यमकारयत्। स्वेन तेनेतरेणापि स्वामिनाऽनुमतेन सः॥ २७२॥ दिनस्तोकं च संपूर्णः प्रासादोऽभ्रंलिहो महान्। मेरुचूलोपमः स्वर्णरत्नकुम्भध्वजालिभिः॥ २७३॥ श्रीनाभेयविभोर्बिम्बं पित्तलामयमद्भुतम्। दृशामगोचरं रोचिःपूरतः सूर्यबिम्बवत्॥ २७४॥

अनलाष्टशिवे वर्षे (११८३) वैशाखद्वादशीनिशि[8]।
प्रतिष्ठा विदधे तत्र चतुर्भिः सूरिभिस्तदा॥ २७५॥

एवं प्रभावनापूरप्लाविते धर्मिणां हृदि। क्षेत्रे वपन् बोधिबीजं चिरं च व्यहरत् प्रभुः॥ २७६॥

§ १२. अन्यदा व्रजतोऽरण्ये नाम्ना **पिप्पलवाटके**। शार्दूलं गुरुशार्दूलो रेखया स[9] न्यषेधयत्॥ २७७॥ बालवृद्धाकुलो गच्छो विहारे प्रान्तरावनौ। क्षुधादिबाधया तत्र क्लिष्टो दुःप्रतिकारया॥ २७८॥ तदीयचिन्तामात्रेण सार्थेऽकस्मादुपागते। प्रासुकैर्भक्तपानैस्तद्भव्यास्तं प्रत्यलाभयन्॥ २७९॥–युग्मम्। **स्याद्वाद** पूर्वकं **रत्नाकरं** स्वादुवचोऽमृतम्। प्रमेयशतरत्नाढ्यममुक्तं स किल श्रिया॥ २८०॥ पीतान् दृष्ट्वा पुरा कुम्भोद्भवेनाम्भोनिधीनिह। परवादिघटोद्भूतशतागम्यं व्यधान्नवम्॥ २८१॥–युग्मम्। इति श्री**देवसूरीणा**मसंख्यातिशयस्पृशाम्। वर्षाणां त्र्यधिकाशीतिरत्यक्रामदतन्द्रिणाम्॥ २८२॥ श्री**भद्रेश्वरसूरी**णां गच्छभारं समर्प्य ते। जैनप्रभावनास्थेमनिस्तुषश्रेयसि स्थिताः॥ २८३॥

रसयुग्मरवौ वर्षे (१२२६) श्रावणे मासि संगते।
कृष्णपक्षस्य सप्तम्यामपराह्णे गुरोर्दिने॥ २८४॥
मर्त्यलोकस्थितं लोकं प्रतिबोध्य पुरंदरम्।
बोधका इव ते जग्मुर्दिवं श्रीदेवसूरयः॥ २८५॥–त्रिभिर्विशेषकम्।

---

1 N भावि°। 2 D न तु। 3 N बत। 4 D आध्मान°। 5 N संपूर्णेतिम्पदंगा°। * 'सपत्राकृतिनिःपत्राकृती लक्ष्यं-तपीडने।' इति D टिप्पणी। 6 N °ममास्थि च। 7 N आशुकोष्ठे। 8 N तिथौ। 9 N रेखायातं।

शिखिवेदशिवे (११४३) जन्म दीक्षा युग्मशरेश्वरे (११५२)।
वेदाश्वशंकरे वर्षे (११७४) सूरित्वमभवत् प्रभोः ॥ २८६ ॥
नवमे वत्सरे दीक्षा एकविंशत्तमे तथा। सूरित्वं सकलायुश्च त्र्यशीतिवत्सरा अभूत् ॥ २८७ ॥

इत्थं श्रीदेवसूरेश्चरितमधरितक्षुद्रवादिप्रवादं
नादं वर्द्धिष्णु जैनप्रवचनभविनां सत्त्वमुच्चैरसेव्यम्।
श्रेष्ठश्रेयःप्रदं तद् भवतु भवभृतामद्य काले भवानां
नन्द्यादाचन्द्रकालं विबुधजनशतैर्नित्यमभ्यस्यमानम् ॥ २८८ ॥

श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीदेवसूरेः कथा
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गः कुयुग्मक्रमः ॥ २८९ ॥

ॐ

अर्थं यच्छति संसृतिस्थितिमतां दुःखापनोदक्षमं
कल्पद्रुव्रजचिन्तिताश्मनिवहादप्यद्भुतं यः प्रभुः।
स श्रीमान् कनकप्रभः कथमयं शक्यो मया वर्णितुं
प्रद्युम्नो यतिनायकश्च समभूद् यन्नाममन्त्रस्मृतेः ॥ २९० ॥

## ॥ इति श्रीदेवसूरिप्रबन्धः ॥

॥ ग्रं० ३२५; उभयं ४८७९ ॥

# २२. श्रीहेमचन्द्रसूरिचरितम् ।

श्रीहेमचन्द्रसूरीणामपूर्वं वचनामृतम् । जीवातुर्विश्वजीवानां राजचित्तावनिस्थितम् ॥ १ ॥
पातकान्तकमातङ्गस्पर्शदूषणपूषणः[1] । श्रीहेमचन्द्रसूरीणां वाचः स्वर्णोदकश्रुतः ॥ २ ॥
अनन्तागमविद्याभृन्मृतस्रोजीवनस्थितिः । श्रीहेमसूरिरव्याद् वः प्रतिश्रीपादलिप्तकः ॥ ३ ॥
कृतिसद्वृत्तमुक्तास्रग्नायकश्चरितं प्रभोः । स्थाप्यतेऽन्तः प्रकाशाय सतां हृदयवेश्मसु ॥ ४ ॥

§ १. अस्ति श्री**गूर्जरो** देशः क्लेशावेशवियुक्तभूः । पुरुषार्थत्रयश्रीषु स्वर्गोऽपीच्छति यत्तुलाम् ॥ ५ ॥
**अणहिल्लपुरं** नाम कामधुक् प्रणयिव्रजे । अस्ति प्रासादराजीभिर्नगरं नगरंगभूः ॥ ६ ॥
संक्रन्दनसुपर्वारिद्विजिह्वा यस्य नोपमाम् । सुरासुरोरगाधीशाः प्रापुर्लोकेश्वरा अपि ॥ ७ ॥
स तत्र वाक्सुधासारसंप्रीणितचकोरकः । राजा **सिद्धाधिपः** सिद्धाधिपगीतयशा अभूत् ॥८॥–युग्मम् ।
सत्पूजाभोगशृङ्गारप्रभावद्दढरङ्गभूः । बन्धूकमिव **धन्धूकं** देशे तत्रास्ति सत्पुरम् ॥ ९ ॥
व्यूढ**मोढान्वय**प्रौढ उदूढमहिमा दृढः । बाढमाढौकयद् दार्ढ्यं प्रौढिषु प्रौढचेतसाम् ॥ १० ॥
उत्कोचकृतसंकोच उल्लोचः सत्त्वमण्डपे । श्रेष्ठी तत्राभव**च्चाचः** प्रवाचः पूजयन् सदा ॥ ११ ॥–युग्मम् ।
गेहिनी **पाहिनी** तस्य देहिनी मन्दिरेन्दिरा । यस्याः सीता-सुभद्राद्याः सत्यः सत्याः सतीत्वतः ॥ १२ ॥
सा [2]स्त्रीचूडामणिश्चिन्तामणिं स्वप्नेऽन्यदैक्षत । दत्तं निजगुरूणां च भक्त्यावेशनिवेशतः ॥ १३ ॥
**चान्द्रगच्छ**सरःपद्मं तत्रास्ते मण्डितो गुणैः । **प्रद्युम्नसूरि**शिष्यः श्री**देवचन्द्र**मुनीश्वरः ॥ १४ ॥
आचख्यौ **पाहिनी** प्रातः स्वप्नमस्वप्नसूचितम् । तत्पुरः स तदर्थं च शास्त्रदृष्टं जगौ गुरुः ॥ १५ ॥
जैनशासनपाथोधिकौस्तुभः संभवी सुतः । तव स्तवकृतो यस्य देवा अपि सुवृत्ततः ॥ १६ ॥
श्रीवीतरागबिम्बानां प्रतिष्ठादोहदं दधौ । अन्यदा सा स चापूरि सत्पत्या भूरिपुण्यतः ॥ १७ ॥
असूत सा च पुण्येऽह्नि जितवह्निप्रभं रुचा । मलयाचलचूलेव चन्दनं नन्दनं मुदा ॥ १८ ॥
नानाविधध्वनत्तूर्यभरडम्बरिताम्बरैः । वर्द्धापने व्यतीते च द्वादशाहे मुदा तदा ॥ १९ ॥
अभिधाविधिमाधित्सुः सनाभीन् भक्तितो निजान् । आहूय व्याहर**च्चाचः** सदाचरणबन्धुरः ॥ २० ॥
अस्मद्गृहेऽवतीर्णेऽत्र प्रतिष्ठादोहदोऽजनि । एतन्मातुस्तया रम्याः पूजाभिः स्युः सुरा अपि ॥ २१ ॥
त**चंगदेव** इत्यस्य स्थानभृन्नाम सान्वयम् । विदधे विश्ववस्तूनां यतः सत्यं शुभायतिः ॥ २२ ॥
–चतुर्भिः कलापकम् ।
क्रमुकैः क्रोडकर्पूरैः पत्रैः सौरभनिर्भरैः । दत्त्वा नागरखण्डैश्च ताम्बूलं तान् व्यसर्जयत् ॥ २३ ॥
वर्द्धमानो वर्द्धमान इवासौ मङ्गलाश्रयः । शिशुत्वेऽप्यशिशुप्रज्ञः सोऽभूदक्षतदक्षतः ॥ २४ ॥
तस्याथ पंचमे वर्षे वर्षीयस इवाभवत् । मतिः सद्गुरुशुश्रूषाविधौ विधुरितैनसः ॥ २५ ॥

§ २. अन्यदा **मोढचैत्या**न्तः प्रभूणां चैत्यवन्दनम् । कुर्वतां **पाहिनी** प्रायात् सपुत्रा तत्र पुण्यभूः ॥२६॥
सा च प्रदक्षिणां दत्त्वा यावत् कुर्युः स्तुतिं जिने । **चंगदेवो** निषद्यायां तावन्निविविशे द्रुतम् ॥ २७ ॥
स्मरसि त्वं महास्वप्नं सकृदालोकयिष्यसि । तस्याभिज्ञानमीक्षस्व स्वयं पुत्रेण यत्कृतम् ॥ २८ ॥
इत्युक्त्वा गुरुभिः पुत्रः सङ्घनन्दननन्दनः । कल्पवृक्ष इवाप्रार्थि स जनन्याः[3] समीपतः ॥ २९ ॥
सा प्राह प्रार्थ्यतामस्य पिता युक्तमिदं ननु । ते तदीयानुज्ञाया भीताः किमपि नाभ्यधुः ॥ ३० ॥

---

1 N °भूषणाः. B °लूषणा । 2 N स्त्री चिंतामणि° । 3 N जनन्या ।

अलंघ्यत्वाद् गुरोर्वाचामाचारस्थितया तया । दूनयापि सुतः स्नेहादार्प्यत स्वप्रसंस्मृतेः ॥ ३१ ॥
तमादाय **स्तम्भतीर्थे** जग्मुः श्रीपार्श्वमन्दिरे । माघे सितचतुर्दश्यां ब्राह्मे धिष्ण्ये शनेर्दिने ॥ ३२ ॥
धिष्ण्ये तथाष्टमे धर्म्मस्थिते चन्द्रे वृषोपगे । लग्ने बृहस्पतौ शत्रुस्थितयोः सूर्यभौमयोः ॥ ३३ ॥
श्रीमानु**दयन**स्तस्य दीक्षोत्सवमकारयत् । **सोमचंद्र** इति ख्यातं नामास्य गुरवो दधुः ॥ ३४ ॥
संचस्करुः परिस्कारान् प्रजाप्य परमाक्षरैः । आर्हतैस्तेऽर्हमर्हाणां तमेकप्रणिधानतः ॥ ३५ ॥
अथैत्य[1] मिलिते कोपकलिते कटुभाषिणि । **वाचे**[2] प्राचेतसाभस्तमयं प्राशमयत् स्वयम् ॥ ३६ ॥
**सोमचन्द्र**स्ततश्चन्द्रोज्ज्वलप्रज्ञाबलादसौ । तर्क-लक्षण-साहित्यविद्याः पर्यच्छिनद् द्रुतम् ॥ ३७ ॥
§ ३. अन्यदाऽचिन्तयत् पूर्वं परो लक्षपदानुगः । आसीदेकपदात् तस्माद्धिगस्मानल्पमेधसः ॥ ३८ ॥
तत आराधयिष्यामि देवीं **काश्मीर**वासिनीम् । चकोरद्विजरोचिष्णुं ज्योत्स्नामिव कलावतः ॥ ३९ ॥
इति व्यज्ञपयत् प्रातः प्रभुं विनयनम्रवाक् । संमुखीनागमं देव्या ध्यात्वा सोऽप्यन्वमन्यत ॥ ४० ॥
गीतार्थः साधुभिः सार्धं धाम विद्याव्रजस्य च । प्रस्थानं **ताम्रलिप्त्याः** स **ब्राह्मीदेशो**परि व्यधात् ॥४१॥
श्री**रैवतावतारे*** च तीर्थे श्रीनेमिनामतः । सार्थे [3]साधुमते† तत्रावात्सीदवहितस्थितिः ॥ ४२ ॥
निशीथेऽस्य विनिद्रस्य नासाग्रन्यस्तचक्षुषः । आराधनात् समक्षाऽभूद् ब्राह्मी ब्रह्ममहोनिधेः ॥ ४३ ॥
वत्स स्वच्छमते ! यासीन् मा स्म देशान्तरं भवान् । तुष्टा त्वद्भक्तिपुष्ट्याऽहं सेत्स्यतीहितमत्र ते ॥ ४४ ॥
इत्युक्त्वा सा तिरोधत्त देवी वाचामधीश्वरी । स्तुत्या तस्या निशां नीत्वा पश्चादागादुपाश्रयम् ॥–युग्मम् ।
सिद्धसारस्वतोऽङ्केशात् **सोमः** सीमा विपश्चिताम् । अभूदभूमिरुन्निद्रान्तरवैरिकृतद्रुहः ॥ ४६ ॥
प्रभावकधुराधुर्यममुं सूरिपदोचितम् । विज्ञाय सङ्घमामन्त्र्य गुरवोऽमन्त्रयन्निति ॥ ४७ ॥
योग्यं शिष्यं पदे न्यस्य स्वकार्यं कर्तुमौचिती । अस्मत्पूर्वेऽमुमाचारं सदा विहितपूर्विणः ॥ ४८ ॥
तदैव विज्ञदैवज्ञव्रजाल्लग्नं व्यचारयत् । विमृश्य तेऽथ व्याचकुः[4] सर्वोत्तमगुणं क्षणम् ॥ ४९ ॥
जीवः कर्के तनौ सूर्यो मेषे व्योम्नि बुधान्वितः । चन्द्रो वृषे च लाभस्थो भौमो धनुषि षष्ठगः[5] ॥ ५० ॥
धर्मस्थाने झषे शुक्रः शनिरेकादशो वृषे । राहुस्तृतीयः कन्यायां विश्वविघ्नविनाशकः[6] ॥ ५१ ॥
इति सर्वग्रहबलोपेतं लग्नं समृद्धिकृत् । होरा चान्द्री ततः पूर्वो द्रेष्काणः प्रथमस्तथा[7] ॥ ५२ ॥
वर्गोत्तमः शशांकांशो नवमो द्वादशस्तथा । त्रिंशांशो वाक्पतेः षष्ठो लग्नेऽस्मिन् गुणमण्डिते ॥ ५३ ॥
प्रतिष्ठा यस्य जायेत पुरुषस्य सुरस्य च । राज्ञां ज्ञातो जगत्पूज्यः स भवेद् विश्वशेखरः ॥ ५४ ॥
–पंचभिः कुलकम् ।
अथ वैशाखमासस्य तृतीयामध्यमेऽहनि । श्रीसङ्घनगराधीशविहितोत्सवपूर्वकम् ॥ ५५ ॥
मुहूर्ते पूर्वनिर्णीते कृतनन्दीविधिक्रमाः । ध्वनत्तूर्यरवोन्मुद्रमङ्गलाचारबन्धुरम् ॥ ५६ ॥
शब्दाद्वैतेऽथ विश्रान्ते समये घोषिते सति । पूरकापूरितश्वासकुम्भकोद्भेदमेदुराः ॥ ५७ ॥
श्रवणेऽगरुकर्पूरचन्दनद्रवचर्चिते । कृतिनः **सोमचन्द्र**स्य निष्ठानिष्ठान्तरात्मनः ॥ ५८ ॥
श्री**गौतमा**दिसूरीशैराराधितमबाधितम् । श्री**देवचन्द्र**गुरवः सूरिमन्त्रमचीकथन् ॥ ५९ ॥
–पंचभिः कुलकम् ।
तिरस्कृतकलाकेलिः कलाकेलिकुलाश्रयः । **हेमचन्द्र**प्रभुः श्रीमान्नाम्ना विख्यातिमाप सः ॥ ६० ॥
तदा च **पाहिनी** स्नेहवाहिनी सुत उत्तमे । तत्र चारित्रमादत्ताविहस्ता गुरुहस्ततः ॥ ६१ ॥

---

1 N अथेत्य । 2 N प्रोचे । 3 N साधुमते । * 'उज्जयंततीर्थे' इति D टिप्पणी । † 'सारस्वते' इति D टि० । 4 N व्याचख्युः; A B व्याचक्षुः । 5 N षष्ठमः । 6 N वैश्वविघ्नविनाशनः । 7 N °मस्ततः ।

प्रवर्त्तिनीप्रतिष्ठां च दापयामास नम्रगीः । तदैवामिनवाचार्यो गुरुभ्यः सभ्यसाक्षिकम् ॥ ६२ ॥
सिंहासनासनं तस्या अन्वमानयदेप च । कटरे जननीभक्तिरुत्तमानां कषोपलः ॥ ६३ ॥
§ ४. श्री**हेमचन्द्र**सूरिः श्रीसङ्घसागरकौस्तुभः । विजहारान्यदा श्रीम**दणहिल्लपुरं** पुरम् ॥ ६४ ॥
श्री**सिद्धभूभृ**दन्येद्यु राजपाटिकया चरन् । **हेमचन्द्रं** प्रभुं वीक्ष्य तटस्थविपणौ स्थितम् ॥ ६५ ॥
निरुध्य टिंबकासन्ने गजप्रसरमङ्कुशात् । किंचिद् भणिष्यतेत्याह प्रोवाच प्रभुरप्यथ ॥ ६६ ॥

**कारय प्रसरं सिद्ध ! हस्तिराजमशङ्कितम् ।**
**त्रस्यन्तु दिग्गजाः किं तैर्भूस्त्वयैवोद्धृता यतः** ॥ ६७ ॥

श्रुत्वेति भूपतिः प्राह तुष्टिपुष्टः सुधीश्वरः । मध्याह्ने मे प्रमोदायागन्तव्यं भवता सदा ॥ ६८ ॥
तत्पूर्वं दर्शनं तस्य जज्ञे कुत्रापि सत्क्षणे । आनन्दमन्दिरे राज्ञा यत्राजर्यमभूत् प्रभोः ॥ ६९ ॥
अन्यदा **सिद्धराजो**ऽपि जित्वा **मालवमण्डलम्** । समाजगाम तस्मै चाशिषं दर्शनिनो ददुः ॥ ७० ॥
तत्र श्री**हेमचन्द्रो**ऽपि सूरिर्भूरिकलानिधिः । उवाच काव्यमव्यग्रमतिश्रव्यनिदर्शनम् ॥ ७१ ॥

तथा हि—

**भूमिं कामगवि ! स्वगोमयरसैरासिञ्च रत्नाकरा !**
**मुक्तास्वस्तिकमातनुध्वमुडुप ! त्वं पूर्णकुम्भो भव ।**
**धृत्वा कल्पतरोर्दलानि सरलैर्दिग्वारणास्तोरणा-**
**न्याधत्त स्वकरैर्विजित्य जगतीं नन्वेति सिद्धाधिपः** ॥ ७२ ॥

व्याख्याविभूषिते वृत्ते वृत्ते इव विभोस्ततः । आजुहावावनीपालः सूरिं सौधे पुनः पुनः ॥ ७३ ॥
§ ५. अन्यदाऽ**वन्ति**कोशीयपुस्तकेपु नियुक्तकैः । दर्श्यमानेपु भूपेन प्रैक्षि लक्षणपुस्तकम् ॥ ७४ ॥
किमेतदिति पप्रच्छ स्वामी [1]तेऽपि व्यजिज्ञपन् । भो ज व्या क र णं ह्येतच्छब्दशास्त्रं प्रवर्त्तते ॥ ७५ ॥
असौ हि **मालवा**धीशो विद्वच्चक्रशिरोमणिः । शब्दालङ्कारदैवज्ञतर्कशास्त्राणि निर्ममे ॥ ७६ ॥
चिकित्सा-राजसिद्धान्त-रस[2]-वास्तूदयानि च । अङ्क-शाकुनकाध्यात्म-स्वप्न-सामुद्रिकान्यपि ॥ ७७ ॥
ग्रन्थान् निमित्तव्याख्यान-प्रश्नचूडामणीनिह । विवृतिं चायसद्भावेऽर्घकाण्डं[3] मेघमालया ॥ ७८ ॥
भूपालोऽप्यवदत् किं नास्मत्कोशे शास्त्रपद्धतिः । विद्वान् कोऽपि कथं नास्ति देशे विश्वेऽपि **गूर्जरे** ॥ ७९ ॥
सर्वे सम्भूय विद्वांसो **हेमचन्द्रं** व्यलोकयन् । महाभक्त्या च राज्ञाऽसावभ्यर्च्य प्रार्थितः प्रभुः ॥ ८० ॥
शब्दव्युत्पत्तिकृच्छास्त्रं निर्मायास्मन्मनोरथम् । पूरयस्व महर्षे ! त्वं विना त्वामत्र कः प्रभुः ॥ ८१ ॥
संक्षिप्तश्च प्रवृत्तोऽयं समयेऽस्मिन् क ला प कः । लक्षणं तत्र निष्पत्तिः शब्दानां नास्ति तादृशी ॥ ८२ ॥
**पाणिनि**र्लक्षणं वेदस्याङ्गमित्यत्र च द्विजाः । अवलेपादसूयन्ति कोऽर्थस्तैरुन्मनायितैः ॥ ८३ ॥
यशो मम तव ख्यातिः पुण्यं च मुनिनायक[4] ! । विश्वलोकोपकाराय कुरु व्याकरणं नवम् ॥ ८४ ॥
इत्याकर्ण्याभ्यधात् सूरि**र्हेमचन्द्रः** सुधीनिधिः । कार्य्येषु नः किलोक्तिर्वः स्मारणायैव केवलम् ॥ ८५ ॥
परं व्याकरणान्यष्टौ वर्त्तन्ते पुस्तकानि च । तेपां श्रीभारतीदेवीकोश एवास्तिता[5] ध्रुवम् ॥ ८६ ॥
आनाययतु **काश्मीरदेशात्** तानि स्वमानुषैः । महाराजो यथा सम्यक् शब्दशास्त्रं प्रतन्यते ॥ ८७ ॥
इति तस्योक्तिमाकर्ण्य तत्क्षणादेव भूपतिः । प्रधानपुरुषान् प्रैषीद् वाग्देवीदेशमध्यतः ॥ ८८ ॥
**प्रवराख्यपुरे** तत्र प्राप्तास्ते देवतां गिरम् । वन्दनादिभिरभ्यर्च्य तुष्टुवुः पाठनस्तवैः ॥ ८९ ॥

1 N स्वाम्यपीति । 2 N °तरुवास्तू° । 3 N ऽर्थशास्त्रं; B ऽर्घशास्त्रं । 4 B D °नायकः । 5 N °वास्ति वे ध्रुवम् ।

समादिक्षत् ततस्तुष्टा निजाधिष्ठायकान् गिरा । मम प्रसादवित्तः श्री**हेमचन्द्रः** सिताम्बरः ॥ ९० ॥
ततो मूर्त्यन्तरस्येव मदीयस्यास्य हेतवे । समर्प्य प्रेष्यतां प्रेष्यवर्गः पुस्तकसञ्चयम् ॥ ९१ ॥
ततः सत्कृत्य तान् सम्यग् भारतीसचिवा नरान् । पुस्तकान्यर्पयामासुः प्रैषुश्चोत्**साहपण्डितम्** ॥ ९२ ॥
अचिरान्नगरं स्वीयं प्रापुर्देवीप्रसादिताः । हर्षप्रकर्षसम्पन्नपुलकाङ्कुरपूरिताः ॥ ९३ ॥
सर्वं विज्ञपयामासुर्भूपालाय गिरोदिताः । निष्ठानिष्ठे प्रभौ **हेमचन्द्रे** तोषमहादरम् ॥ ९४ ॥
इत्याकर्ण्य चमत्कारं धारयन् वसुधाधिपः । उवाच धन्यो महेशोऽहं च यत्रेदृशः कृती ॥ ९५ ॥
श्री**हेमसूरयो**ऽप्यत्रालोक्य व्याकरणव्रजम् । शास्त्रं चक्रुर्नवं श्रीमत् सिद्धहैमाख्य मद्भुतम् ॥ ९६ ॥
द्वात्रिंशत्पादसंपूर्णमष्टाध्यायमुणादिमत् । धातुपारायणोपेतं रङ्गल्लिङ्गानुशासनम् ॥ ९७ ॥
सूत्रसद्वृत्तिमन्नाममालानेकार्थसुन्दरम् । मौलिं लक्षणशास्त्रेषु विश्वविद्वद्भिरादृतम् ॥ ९८ ॥–त्रिभिर्विशेषकम् ।
आदौ विस्तीर्णशास्त्राणि नहि पाठ्यानि सर्वतः । आयुषा सकलेनापि पुमर्थस्खलनानि तत् ॥ ९९ ॥
संकीर्णानि च दुर्बोधदोषस्थानानि कानिचित् । एतत् प्रमाणितं तस्माद् विद्वद्भिरधुनातनैः ॥ १०० ॥
श्री**मूलराज**प्रभृति[1]राजपूर्वजभूभृताम् । वर्णवर्णनसम्बद्धं पादान्ते श्लोकमेककम् ॥ १०१ ॥
तच्चतुष्कं च सर्वान्ते श्लोकैस्त्रिंशद्भिरद्भुता । पञ्चाधिकैः प्रशस्तिश्च [2]विहिताऽवहितैस्तदा ॥ १०२ ॥–युग्मम् ।
राज्ञः पुरः पुरोगैश्च विद्वद्भिर्वाचितं ततः । चक्रे लक्षत्रयं[3] वर्षे राज्ञा पुस्तकलेखने ॥ १०३ ॥
राजादेशान्नियुक्तैश्च सर्वस्थानेभ्य उद्यतैः । तदा चाहूय सच्चक्रे लेखकानां शतत्रयम् ॥ १०४ ॥
पुस्तकाः समलेख्यन्त सर्वदर्शनिनां ततः । प्रत्येकमेवादीयन्ताध्येतॄणामुद्यमस्पृशाम् ॥ १०५ ॥–विशेषकम् ।

अंग-वंग-कलिंगेषु लाट-कर्णाट-कुंकणे ।
महाराष्ट्र-सुराष्ट्रासु वत्से कच्छे च मालवे ॥ १०६ ॥
सिंधु-सौवीर-नेपाले पारसीक-मुरंडयोः[4] ।
गंगापारे हरिद्वारे काशि-चेदि-गयासु च ॥ १०७ ॥
कुरुक्षेत्रे कन्यकुब्जे गौड-श्रीकामरूपयोः ।
सपादलक्षवज्जालंधरे च खसमध्यतः ॥ १०८ ॥
सिंहलेऽथ महाबोधे चौडे मालव-कैशिके ।
इत्यादिविश्वदेशेषु शास्त्रं व्यस्तार्यत स्फुटम् ॥ १०९ ॥–चतुर्भिः कलापकम् ।

अस्य सोपनिबन्धानां पुस्तकानां च विंशतिः । प्राहीयत नृपेन्द्रेण **काश्मीरेषु**[5] महादरात् ॥ ११० ॥
एतत्तत्र गतं शास्त्रं स्वीयकोशे निवेशितम् । सर्वो[6] निर्वाहयेत्[7] स्वेनादृतं देव्यास्तु का कथा ॥ १११ ॥
**काकलो** नाम कायस्थकुलकल्याणशेखरः । अष्टव्याकरणाध्येता प्रज्ञाविजितभोगिराट् ॥ ११२ ॥
प्रभुस्तं दृष्टमात्रेण ज्ञाततत्त्वार्थमस्य च । शास्त्रस्य ज्ञापकं चाशु विदधेऽध्यापकं तदा ॥ ११३ ॥
प्रतिमासं स च ज्ञानपञ्चम्यां पृच्छनां दधौ । राजा च तत्र निर्व्यूढान् कङ्कणैः समभूषयत् ॥ ११४ ॥
निष्पन्ना अत्र शास्त्रे च दुकूलस्वर्णभूषणैः । सुखासनातपत्रैश्च ते भूपालेन योजिताः[8] ॥ ११५ ॥

§ ६. अन्यदा सत्प्रभोस्तस्य सभायां स्वःपतेरिव । विबुधव्रात[9]रोचिन्यामेकश्चारण आययौ ॥ ११६ ॥
अवज्ञया न कोऽप्यत्र संमुखं तस्य वीक्षते । रत्नेषु वीक्ष्यमाणेषु जरत्तृणमणेरिव ॥ ११७ ॥
अथ चासावपभ्रंशादपाठीद् दोहकं वरम् । तत्पुण्यदोहदं ब्राह्मीप्रसादं प्रकटं ननु ॥ ११८ ॥

---

1 N मूलराजप्रभृतिमीराज° । 2 N विहिताविहितै° । 3 N वर्षत्रयं । 4 N °मुरंडके । 5 D कस्मीरेषु । 6 A सर्वा । 7 N निर्वाहयेत्तेना° । 8 N नियोजिताः । 9 N विबुद्धव्रात° ।

§ २०. किञ्चिच्च स्वामिने विज्ञपये तदवधार्यताम् । श्रीकीर्तिपालतः पित्रा सन्दिष्टं मम यद्वचः ॥ ६११ ॥
श्रीशत्रुञ्जयतीर्थस्य प्रासादः श्रेयसे मम । जीर्णशीर्णस्त्वयोद्धार्य इति मे कृत्यमस्त्यदः ॥ ६१२ ॥
प्रभुपादैस्तथादिष्टं यात्रायाः प्रक्रमे तदा । देवतास्मृतिवेलायां कीर्तिपालप्रतिश्रुतात् ॥ ६१३ ॥
अस्मत्कोशधनं लात्वा कार्या चैत्योद्धृतिस्त्वया । स आदेशो ममास्तु स्वैः पितुरानृण्यहेतवे ॥ ६१४ ॥
श्रुत्वेत्याह नृपोऽस्माकं कार्येऽस्मिन् सोदरादरात् । एवमप्यस्त्वनुलंघ्यवचनस्त्वं हि नः सखे ॥ ६१५ ॥
स्वामिन्! महाप्रसादोऽयमित्युक्त्वा तत्र धीसखः । विमलाद्रौ ययौ श्रेष्ठिव्यापारिपरिवारितः ॥ ६१६ ॥
तत्र तीर्थे प्रभुं नत्वा नाभेयं भक्तिनिर्भरः । गुरूदरान् प्रदाप्यास्थात् प्रतिसीराश्च सर्वतः ॥ ६१७ ॥
विमानकानि [1]मंचांश्च प्रादात् करभिकास्तथा । वाटिकानि चतुष्पाटीः पट्टशाटकमण्डिताः ॥ ६१८ ॥
चञ्चच्चतुरकांश्चापि स्वर्विमानोपमद्युतीन् । अनेकभटसङ्घातसङ्कीर्णीकृतपर्वतान् ॥ ६१९ ॥–विशेषकम् ।
तत्र चैको वणिक् प्रत्यासन्नग्रामात् समागतः । निधिर्दौस्थ्यस्य [2]घृष्टातिपटच्चरयुगं दधत् ॥ ६२० ॥
षट्द्रम्मनीविकस्तैश्च क्रीताज्यकुतपं वहन् । कटके ग्राहकव्यूहबाहुल्याद् रूपकाधिकम् ॥ ६२१ ॥
द्रम्मं स चार्जयित्वाऽतितुष्टः श्रीवृषभप्रभुम् । कुसुमै रूपकक्रीतैः पूजयामास भक्तितः ॥ ६२२ ॥
सप्त द्रम्मान् सप्त लक्षानिव ग्रन्थौ वहन् मुदा । वीक्षकः सचिवाधीशं तत्कंटीद्वारमागमत् ॥ ६२३ ॥
ददृशे तेन मन्त्रीन्दुरीषज्जवनिकान्तरात् । कूर्मेनेव ह्रदे बद्धजालशैवालरन्ध्रतः ॥ ६२४ ॥
स व्यमृक्षत् प्राच्यपुण्य-पापयोरेतदन्तरम् । पुरुषत्वे समेऽमुष्य मम चानीदृगाकृतिः ॥ ६२५ ॥
स्वर्णमौक्तिकमाणिक्याभरणांशुदुरीक्ष्यरुक् । व्यापारि-व्यवहार्यन्नजीवि-व्रातपरिच्छदः ॥ ६२६ ॥
चक्रीव मुकुटाबद्धमण्डलाभ्यर्चितक्रमः । श्रीनाभेयमहातीर्थजीर्णोद्धारमनोरथः ॥ ६२७ ॥
अहं तु स्वगृहिण्याप्यभिभूतो निर्धनत्वतः । सन्ध्यावध्यपि सन्दिग्धाहारप्राप्तिर्मुधाश्रमः ॥ ६२८ ॥
कुतपोद्वहनक्लिष्टशिरा आशैशवादपि । एकरूपकलाभेन धन्यंमन्यो दिनं प्रति ॥ ६२९ ॥
एवं विचिन्तयन् द्वारपालेन परतः कृतः । श्रीमद्वाग्भटदेवेन मन्त्रिणादर्शि दैवतः ॥ ६३० ॥
वणिगाहूयतामेषेत्युक्ते स द्वारपालकः । दूरप्रयातमपि तमाह्वास्तादेशतः प्रभोः ॥ ६३१ ॥
तत्पुरः पर्षदन्तः स ऊर्द्ध्वोऽस्थात् स्थाणुवत् स्थिरः । अनभिज्ञः प्रणामादौ ग्रामणीत्वाद् ऋजुस्थितिः ॥६३२॥
कस्त्वमित्युक्तिभाजि श्रीमन्त्रिणि प्रकटाक्षरम् । प्रागुक्तनिजवृत्तं स आख्यदक्षामदुःखभृत् ॥ ६३३ ॥
मन्त्रीश्वरः [3]पुनः प्राह धन्यस्त्वं क्लेशतोऽर्जितम् । यद्रूपकं व्ययित्वार्चां श्रीजिनस्य समाचरः ॥ ६३४ ॥
इत्युक्त्वा स करे धृत्वा स्वार्द्धासनि निवेशितः । धर्म्मबन्धुर्भवान् मे तत् कार्य्यं किंचिद् ब्रवीहि भोः! ॥६३५॥
सोऽस्य प्रभोः प्रियैर्वाक्यैः प्रीणितोऽचिन्तयन्मुदा । संप्रापितः परां कोटिमनेनाकिञ्चनोऽप्यहम् ॥ ६३६ ॥
तदा साधर्मिकास्तत्र व्यवहारिनियोगिनः । इष्टे तीर्थसमुद्धारेऽनन्त[4]पुण्यभरार्थिनः ॥ ६३७ ॥
वहिकां मण्डयामासुर्द्रव्यमीलनिकाकृते । प्राग्मन्त्रिणस्ततो ज्येष्ठानुक्रमादभिधा व्यधुः ॥ ६३८ ॥
दृष्ट्वा नामान्यसौ दध्यौ चेद् द्रम्माः सप्त मामकाः । कार्य्येऽस्मिन्नुपकुर्वन्ति तत्र धन्यो मया समः ॥६३९॥
वक्तुकामोऽसि किञ्चित् किमित्युक्ते[5] मन्त्रिणा स च । प्राह सप्त गृहीत्वाऽमून् द्रम्मान् प्रीणय मां प्रभो! ॥६४०॥
तदाचारात् परानन्दमेदुरः सचिवोऽवदत् । त्वं मे धर्मसुहृद् भ्रातस्तत्तानर्पय सत्वरम् ॥ ६४१ ॥
श्रीतीर्थजीर्णोद्धारस्य निष्पत्त्याशाऽद्य मेऽभवत् । नीवीं जीवितवत्स्वीयां यदक्लेशत्वमव्ययः ॥ ६४२ ॥
वहिकादौ च तन्नाम लिखित्वाऽथ निजाभिधाम् । अधस्तस्य ततो नामान्यन्येषां धनशालिनाम् ॥ ६४३ ॥

---

1 A D बिमानकामिमं चा । 2 A घृष्टाति° । 3 N मंत्रीश्वरं प्रति । 4 N संतपुण्य° । 5 N °मित्युक्तो ।

वयं तु कोटिसंख्यस्य द्रव्यस्य खरकर्मभिः । उपात्तस्य व्यये [1]तन्द्राभृतोऽन्यधनमिच्छवः ॥ ६४४ ॥
स्वकीयकोशादाहार्षीत् ततः पट्टांशुकत्रयम् । द्रम्मपञ्चशतीं चैवं प्राहैतद्धि गृहाण भोः ! ॥ ६४५ ॥
मन्त्रीशेन स चेत्युक्तः स्मित्वाऽवादीदसौ वणिक् । न विकीर्णे ध्रुवं पुण्यमस्थिरद्रव्यलेशतः ॥ ६४६ ॥
भवन्तः स्वामिनः प्राच्यपुण्यसम्पन्नवैभवाः । कुर्वन्तः किं न लज्जन्ते मादृशां विप्रलम्भनम् ॥ ६४७ ॥
इत्याकर्ण्योद्धुषद्रोमा मन्त्रीन्दुः प्राह वाणिजम् । मत्तो धन्यस्त्वमेवासि यस्येदृग् निःस्पृहं मनः ॥ ६४८ ॥
ततः केलिमपूगैः सपत्रैर्नागरखण्डकैः । बीटकं प्रददावस्य कर्पूरपरिपूरितम् ॥ ६४९ ॥
तद् गृहीत्वा स सम्मानपूरितः स्वं गृहं ययौ । गेहिन्या बिभ्यदभ्यस्तदुर्वाक्यालीकुलक्षितेः ॥ ६५० ॥
अकस्मात् सा च तं स्वादुवचनैः पर्यतोषयत् । आजन्मादृष्टपूर्वं तद् दृष्ट्वा विस्मयमाप सः ॥ ६५१ ॥
तेनोक्ते च यथावृत्ते साऽवादीत् पारितोषिकम् । यन्न त्वया गृहीतं तन्निर्वृतिं[2] मे व्यधाद् घनम् ॥६५२॥
यदि त्वं मन्त्रिणः पार्श्वे लोहटंकार्धमप्यहो । अग्रहीष्यत् ततो नाहमस्थास्यं त्वद्गृहे ध्रुवम् ॥ ६५३ ॥
धेनुयोग्यं ततः स्थाणुं श्लथं[3] गाढं कुरुष्व तत् । तयेत्युक्तः कुशीं प्राप्य दरमत्राखनत् ततः ॥ ६५४ ॥
खाते चाल्पे खनित्रे च खटत्कृतमतः स तु । भार्यामाकार्य कथयामास सा च ततोऽवदत् ॥ ६५५ ॥
रात्रौ निर्व्यञ्जने किंचिद्विधेयं ननु सांप्रतम् । वेलां विलम्ब्य तत्तस्मात्तदाऽकृष्यत यत्नतः ॥ ६५६ ॥
चत्वारि हैमटंकानां सहस्राणि स चासदत् । अल्पाया अपि पूजायाः फलमेतज्जिनेशितुः ॥ ६५७ ॥
अर्पयिष्याम्यहं मन्त्रिवाग्भटस्य धनं ह्यदः । ईदृशि व्ययितं तीर्थे तद्धि कोटिगुणं भवेत् ॥ ६५८ ॥
पत्न्याप्यनुमतः प्रातर्गिरिमारुह्य मन्त्रिणम् । वीक्ष्य तद्दर्शयामास गृह्णीतेत्यवदच्च तम् ॥ ६५९ ॥
श्रुत्वेति धीसखस्वामी प्राह मद्वचनं शृणु । सत्त्वात्ते सप्तभिर्द्रम्मैः पूर्णो मम मनोरथः ॥ ६६० ॥
अतः परं भवद्द्रव्यं ग्रहीतुं नाहमीशिता । अनेन भविता यस्मात् सौवर्णः सकलो गिरिः ॥ ६६१ ॥
अभिसन्धिर्न मे सोऽस्ति तत् स्वं द्रव्यं यथारुचि । व्यय वर्धय भुंक्ष्वाथ धर्म्मे वाऽऽधेहि शीघ्रतः ॥६६२॥
स प्राह कुतपोद्ग्राहभाग्यस्य कनकं किमु । स्थाता मे निलये[4]तत्कः क्लेशोऽङ्गीक्रियतेऽस्य तु ॥ ६६३ ॥
भवान् यथातथाकर्तुमिमं शक्तः प्रभुत्वतः । तत्प्रसद्य गृहाणेदं तुष्टोऽस्तु कुतपो मम ॥ ६६४ ॥
प्राह मन्त्री ततो द्रव्यं न गृह्णामि निरर्थकम् । एनं भारं न वोढाऽस्मि वाहीक इव दुर्वहम् ॥ ६६५ ॥
एवं विवदतोर्मन्त्रि-वणिजोर्दिनमत्यगात् । रात्रौ च श्रीकपर्दीशः साक्षाद् वाणिजमभ्यधात् ॥ ६६६ ॥
श्रीयुगादिप्रभो रूपकार्चातुष्टो धनं ह्यदः । अहं प्रादर्शयं ते तत् त्वं व्ययस्व निजेच्छया ॥ ६६७ ॥
क्षयं यास्यति नैवैतद् दानभोगैर्घनैरपि । अन्यस्येदं हि नाधीनमत्रान्यन्मा विचार्यताम् ॥ ६६८ ॥
अत्र चैतदभिज्ञानं त्वत्पत्नी दुर्मुखाऽप्यलम् । अकस्मात् प्रियवाक्याऽभूद् भक्तिप्रह्वा च विद्धि तत् ॥६६९॥
इदं समीक्ष्य च प्रातः श्रीनाभेयप्रभुं स च । सुवर्णरत्नपुष्पाद्यैस्तद्ध्यानः समपूजयत् ॥ ६७० ॥
अभ्यर्च्य श्रीकपर्दीशं ततः स्वगृहमागमत् । स्वकृतैः सुकृतैर्जन्म पवित्रं व्यतनोत्तराम् ॥ ६७१ ॥
श्रीमद्वाग्भटदेवोऽपि जीर्णोद्धारमकारयत् । सदेवकुलिकस्यास्य प्रासादस्यातिभक्तितः ॥ ६७२ ॥
घनद्रव्यव्ययाचिन्तावशाद्वक्षेपतस्तदा । पर्यपूर्यन्त कुम्भश्चात्रारुरोह[5] मुदा सह ॥ ६७३ ॥

शिखीन्दुरविवर्षे च ( १२१३ ) ध्वजारोपे व्यधापयत् ।
[6]प्रतिष्ठां सप्रतिष्ठां स श्रीहेमचन्द्रसूरिभिः ॥ ६७४ ॥

*

1 N तं प्राभृतो° । 2 N निर्वृतं । 3 N श्लथ्यं । 4 N स्थातामेकनके । 5 N पर्यपूर्यंत कक्रुभाश्चारुरोह । 6 N प्रतिमां ।

§ २१. इतश्च स्वर्विमानश्रीस्ततः प्रभृति विश्रुतः । श्रीकुमारविहारोऽयं भव्यदृक्पुण्यलक्षणम् ॥ ६७५ ॥
षड्वैकटिकश्रेणिघटनाकोटिटंकितम् । बिम्बं श्रीपार्श्वनाथस्य निष्पन्नं रम्यतावधि ॥ ६७६ ॥
प्रातिष्ठिपत् शुभे लग्ने मन्त्री श्रीहेमसूरिभिः । अतिचिन्तामणिं[1] प्राणिवाञ्छितातीतवस्तुदम् ॥ ६७७ ॥
प्रासादशुकनासे[2] च भूपतिर्मोक्षकाभिधम् । छिद्रं विमोचयामास विश्वोपकृतितत्परः ॥ ६७८ ॥
पूर्णमासीनिशीथे च रोगिप्रार्थनया ततः । प्रकटीकृततच्छिद्रेऽमृतमस्रावि बिम्बतः ६७९ ॥
तच्चक्षुरादिरोगाणामपहारं जनेऽतनोत् । उपचक्रे क एवं हि नृपतिः सर्वतो मुखम् ॥ ६८० ॥
प्रासादैः सप्तहस्तैश्च यथावर्णैर्महीपतिः । द्वात्रिंशतं विहाराणां साराणां निरमापयत् ॥ ६८१ ॥
द्वौ शुभ्रौ श्यामलौ द्वौ च द्वौ रक्तोत्पलवर्णकौ । द्वौ नीलौ षोडशाथ स्युः प्रासादाः कनकप्रभाः ॥ ६८२ ॥
चतुर्विंशतिचैत्येषु श्रीमन्तो ऋषभादयः । [3]सीमंधराद्याश्चत्वारश्चतुर्षु निलयेषु च ॥ ६८३ ॥
श्रीरोहिणिश्च समवसरणं प्रभुपादुकाः । अशोकविटपी चैवं द्वात्रिंशत् स्थापितास्तदा ॥ ६८४ ॥
द्वात्रिंशतः पुरुषाणामनृणोऽस्मीति गर्भितम् । व्यजिज्ञपत् प्रभोर्भूपः[4] पूर्ववाक्यानुसारतः ॥ ६८५ ॥
सपञ्चविंशतिशताङ्गुलमानो जिनेश्वरः । श्रीमत्तिहुणपालाख्ये पंचविंशतिहस्तके ॥ ६८६ ॥
विहारेऽस्थाप्यत श्रीमान्नेमिनाथोऽपरैरपि । समस्तदेशस्थानेषु जैनचैत्यानचीकरत् ॥ ६८७ ॥–युग्मम् ।

§ २२. क्षणे धर्मोपदेशस्य सप्तव्यसनवर्णनम् । घनदौर्गत्यदुर्योनिभवभ्रमणकारणम् ॥ ६८८ ॥
उपादिक्षत् प्रभू राज्ञे स्वदेशेऽसौ न्यषेधयत् । अचीकरदमारिं च पटहोद्घोषपूर्वकम् ॥ ६८९ ॥
पुरा देशभ्रमिस्थेन राज्ञा मृतवणिक्प्रिया । सपादलक्ष ऐक्षिष्ट खेदिता राजपूरुषैः ॥ ६९० ॥
तदा निषेधं जग्राह तस्या एवानुकम्पया । निर्वीरास्वेन[5] नो कार्यं राज्यं चेन्मे भविष्यति ॥ ६९१ ॥
अधुनाऽत्र मृते कापि व्यवहारिणि विश्रुते । अपुत्रे तद्धनं कान्तानीयतास्याधिकारिभिः ॥ ६९२ ॥
स्वामी पप्रच्छ तान् कस्य विपुत्रश्रीर्भवेदियम् । तेऽवदन् रूढिरेषाऽस्ति तत्पुत्रस्य नृपस्य वा ॥ ६९३ ॥
स्मित्वाऽह भूपः पूर्वेषां राज्ञामेषाऽविवेकधीः । यत्कौटिल्यं विना वाच्या दोषा निजगुरोरपि ॥ ६९४ ॥
अशाश्वतश्रियः सर्वाधीनाया हेतवे नृपाः । उत्तमाधममध्यानां पुत्रतामनुयान्ति यत् ॥ ६९५ ॥
तस्मान्नाहं भविष्यामि विश्वलोकस्य नन्दनः । विश्वस्यानन्दनो भावी निर्वीराधन उज्झिते ॥ ६९६ ॥
मृतभर्तृसुताद्रव्यमित्यौज्झद् भूपतिः सुधीः । अमुक्तं[6] नल-रामाद्यैरपि प्राक्कालराजभिः ॥ ६९७ ॥
प्रभुर्निजोपदेशानां सत्यत्वात् परितोषवान् । भूपवृत्तलसद्वृत्तिश्चेष्ठे वृत्तमुदाहरन् ॥ ६९८ ॥

तद्यथा–

नयन्मुक्तं पूर्वैरघुनघुषनाभागभरत-
प्रभृत्युर्वीनाथैः कृतयुगकृतोत्पत्तिभिरपि ।
विमुञ्चन् सन्तोषात् तदपि रुदतीवित्तमधुना
कुमारक्ष्मापाल! त्वमसि महतां मस्तकमणिः ॥ ६९९ ॥

एवं सान्तःपुरो राजा प्रत्याख्यानी[7] निरन्तरम् । राज्यं बभार देवेन्द्र इव स्फीतं विकण्टकम् ॥ ७०० ॥

§ २३. अन्येद्युर्जैनधर्मस्थं भूपालं प्रणिधिव्रजैः । बलहीनं द्विधा ज्ञात्वा कल्याणकटकाधिपः ॥ ७०१ ॥
भूपोऽभ्यमित्रयन्नाधात्[8] प्रयाणं बलकोटिभिः । कुमारपालस्तज्ज्ञात्वा चारैश्चिन्तामवाप च ॥ ७०२ ॥
विज्ञप्तं च प्रभूणां तत् प्रभोर्जैनस्य मे किमु । अस्मात् पराभवो भावी प्राप्तशासनलाघवः ॥ ७०३ ॥
प्रभुराह महाराज ! त्वां श्रीशासनदेवताः । पान्ति जानाति लग्नस्तत् सप्तमे वासरे भवान् ॥ ७०४ ॥

---

1 N अतिचिन्तामणिं वाञ्छिता° । 2 N शुकनासेव । 3 A D सामन्ताद्याश्च चत्वार° । 4 N भूपं । 5 N निर्वीरासेन । 6 N अभुक्तं । 7 N °ख्याननिरं° । 8 N °ायात् ।

श्रुत्वेति सचमत्कारं ययौ भूपः स्वमन्दिरम् । अध्यायद् रजनौ सूरिर्विधिना परमाक्षरम् ॥ ७०५ ॥
तदधिष्ठायकस्तस्यादेशं साक्षाद् ददौ तदा । भाग्यात् **कुमारपाल**स्य शत्रुरस्तंगतोऽद्य[1] सः ॥ ७०६ ॥
सप्तमे वासरे चारैररिमृत्योः स वर्द्धितः । नृपोऽवददहो ज्ञानं मद्गुरोर्नापरत्र तत् ॥ ७०७ ॥
§ २४. अन्यदाऽलिख्यमाने च स्वगुरुग्रन्थसञ्चये । प्राप्रीत्या शास्त्रविस्तारविधये निधये धियाम् ॥ ७०८ ॥
ताडपत्रत्रुटिर्जज्ञे [2]शालभेभ्यो दवेन च । देशान्तरादनायातैस्तैश्चिन्ता भूपतेरभूत् ॥ ७०९ ॥
मद्गुरोः करणे शक्तिर्लेखनेऽपि न मे पुनः । शास्त्राणां व्रीडिता अद्य ततस्ते पूर्वजा मया ॥ ७१० ॥
गत्वारामे निजे तालजाले स्थित्वाऽस्य पूजनम् । गन्धद्रव्यैर्व्यधाद् भूपः सुगन्धकुसुमैस्तथा ॥ ७११ ॥
उवाच [3]'तृणराज ! त्वं पूज्यो ज्ञानोपकारतः । सर्वदर्शनिशास्त्राणामाधारस्त्वं दलैः कलैः ॥ ७१२ ॥
पुस्तकावस्थितौ चेन्मे भाग्यं जागर्ति निर्भरम् । तदा भवन्तु श्रीतालाः सर्वेऽमी तालभूरुहः ॥ ७१३ ॥
इत्युक्त्वा[4] ग्रथितं [5]मुक्तामाणिक्यैः स्वर्णनिर्मितम् । ग्रैवेयकं तरोः स्कन्धे न्यवेशयदशङ्कधीः ॥ ७१४ ॥
व्यावृत्य सौधमूर्द्धानमधितस्थौ नराधिपः । प्रातः प्रावर्द्धयंस्ते चारामपालाः प्रभुं मुदा ॥ ७१५ ॥
सर्वे श्रीताडतां जग्मुः स्वामिन्नत्र तरुद्रुमाः । यथेच्छं लेखकैः शास्त्रसमूहो लिख्यतां ततः ॥ ७१६ ॥
वस्त्राभरणभोज्यादि तेषां सत्पारितोषिकम् । ददावदैन्यदं दानमनादीनवचेतनः ॥ ७१७ ॥
ततः प्रववृते पुस्तकानां लेख्यविधिस्तदा । भूपालयशसां भाग्यसङ्घात इव सङ्गतः ॥ ७१८ ॥
राजा सान्तःपुरो गेहिव्रतं बिभ्रदनिन्दितम् । सम्यग्बभार साम्राज्यं स [6]चक्रीव त्रयोदशः ॥ ७१९ ॥
§ २५. अन्यदा भूपतिं श्रीमदजितस्वामिसंस्तवम् । कुर्वन्तं प्राग् रिपूच्छेदसंकल्पपरिपूरितः ॥ ७२० ॥
तत्प्रासादविधानेच्छुं प्रभुरादिक्षत स्फुटम् । गिरौ **तारङ्गनागा**ख्येऽनेकसिद्धोन्नतस्थितौ ॥ ७२१ ॥
विहार उचितः श्रीमन्नक्षय्यस्थानवैभवात् । **शत्रुञ्जया**परामूर्तिर्गिरिरेषोऽपि दृश्यताम् ॥ ७२२ ॥
चतुर्विंशतिहस्तोच्चप्रमाणं मन्दिरं ततः । बिम्बं चैकोत्तरशताङ्गुलं तस्य न्यधापयत् ॥ ७२३ ॥
अद्यापि त्रिदशव्रातनरेन्द्रस्तुतिशोभितः । आस्ते सज्जनैर्दृश्यः प्रासादो गिरिशेखरः ॥ ७२४ ॥

❀

§ २६. आसी**दुदयन**स्यापि द्वितीयो नन्दनाग्रणीः । **अंबड**ाभिधया श्रीमानमानवपराक्रमः ॥ ७२५ ॥
श्रीमत्**कुमारपाल**स्यादेशतो नृपतेरसौ । **कुंकणाधिपतेर्मल्लिकार्जुन**स्याच्छिनच्छिरः ॥ ७२६ ॥
**लाटमंडल-भंभेरी**सहस्रनवकं तथा । **कुंकणा-नंदपद्रं** च राष्ट्रं **पल्लीवनानि** च ॥ ७२७ ॥
भुंक्ते देशानिमान् स्वामिप्रसादान्निजविक्रमात् । 'राजसंहार' इत्युग्रं सान्वयं बिरुदं वहन् ॥–युग्मम् ।
अथ श्री**भृगुकच्छे**ऽसौ श्री**सुव्रतजिनालय**म् । चिरंतनं काष्ठमयं जर्जरं परिदृष्टवान् ॥ ७२९ ॥
घूणोत्कीर्णजरत्काष्ठपतच्चूर्णास्तृतावनिः ( नि ? ) । श्लथायःकीलकभ्रश्यत्पट्टकच्छादकावृतम् ॥ ७३० ॥
अतिवृष्टिगलत्तोयं पतद्भिस्त्रिजं तदा । गर्भागारेऽपि निश्च्योतदाशातितजिनेश्वरम् ॥–त्रिभिर्विशेषकम् ।
पूर्वप्रासादमुत्कील्य स्वस्थानस्थं प्रभुं ततः । प्रक्रान्तजीर्णोद्धारश्च गर्तापूरमचीखनत् ॥ ७३२ ॥
अत्रान्तरे छले[7] कस्मिंश्चिदस्मिन् योगिनीगणः । द्वात्रिंशल्लक्षणत्वेनाच्छलयन् श्रीमदम्बडम् ॥ ७३३ ॥
सर्वाङ्गीणव्यथाक्रान्तस्ततःप्रभृति रुग्णरुक् । अक्षुत्तृष्णो विलीनाङ्गः केवलं[8] क्षीयतेतराम् ॥ ७३४ ॥
**पद्मावती**ति तन्मात्राऽऽराद्धा पद्मावती सुरी । उपादिशदिदं स्वप्ने शृणु सत्यं वचः सुते ! ॥ ७३५ ॥
महापीठमिदं विश्वयोगिनीनां सङ्गतेः । तद्ग्रस्तं मोचयेन्नान्यो **हेमचन्द्रं** गुरुं विना ॥ ७३६ ॥

---

1 N °गतोद्यमः । 2 N शालभेभ्यो । 3 N प्रवणराज । 4 N इत्युक्त्वा । 5 N मुक्ता । 6 N चक्री च । 7 N स्थले । 8 N B कवलं ।

ततः प्रातः प्रभोरेषाऽऽकारणायाविशन्नरान् । वेगात् तेऽपि प्रभुं दृष्ट्वा यथादेशं व्यजिज्ञपन् ॥ ७३७ ॥
श्रुते नष्टे भानुरेव शरणं नापरस्ततः । जीवितव्यं सपुत्राया मम देहि प्रभो ! ततः ॥ ७३८ ॥
श्रुत्वेति गुरुराश्वेव[1] यशश्चन्द्रसमन्वितः । आययौ पादचारेण समीपेऽम्बडमन्त्रिणः ॥ ७३९ ॥
गणी गणितनिष्णातश्चेष्टामैक्षिष्ट तस्य च । चित्ते विचिन्त्य तन्मातुर्ददौ शिक्षामलक्ष्यधीः ॥ ७४० ॥
नरं निशीथे विश्वासपात्रं प्रेषय मेऽन्तिके[2] । चपलाम्नबलिव्यग्रकरं सौगन्धसङ्कुलम् ॥ ७४१ ॥
प्रातौलिकानामादेशे दापिते निशि सूरयः । दुर्गाद् बहिः प्रचेलुस्ते गणिना सह तेन च ॥ ७४२ ॥
उद्घाट्य गोपुरद्वारा तत्र निर्गत्य ते ततः । गच्छन्तो ददृशुर्मार्गे कलविङ्ककदम्बकम् ॥ ७४३ ॥
चगचगिति शब्दाढ्ये तन्मुखे बलिमक्षिपन् । यशश्चन्द्रस्ततो दृष्टनष्टं तत् तत्क्षणादभूत् ॥ ७४४ ॥
गच्छन्ति कियदध्वानं तावत्ते कपिपेटकम् । अद्राक्षुर्मङ्क्षु तत्रापि सपर्यक्षिपदक्षतान् ॥ ७४५ ॥
असत्तुलं तदाभूत्तत् ततोऽप्यग्रे च ते ययुः । श्रीसैन्धवीसूरीवेश्मपार्श्वं कातरभीषणम् ॥ ७४६ ॥
अग्रे व्यलोकयन् यावत् तावन्मार्जारमण्डलम् । अविच्छिन्नमहारौद्रशब्दभीषितबालकम् ॥ ७४७ ॥
पुष्पाणि तत्र रक्तानि चिक्षेपाथ ननाश तत् । तोरणाग्रे[3] महादेव्याः प्रभुरूर्द्धंदमः स्थितः ॥ ७४८ ॥
अनाकुलं गणी[4] प्रोचे हेमसूरिस्तवाङ्गणे । आयासीदतिदूरेण पादचारेण कष्टभूः ॥ ७४९ ॥
अभ्युत्थानादिका पूजा कर्तुं समुचिता तव । यषोऽर्चितो यतः सर्वैः पीठैर्जालन्धरादिभिः ॥ ७५० ॥
एवं वदत एवास्य चलच्चञ्चलकुण्डला । पुरः[5] श्रीसैन्धवीदेव्यस्थाद् योजितकरद्वया ॥ ७५१ ॥
आतिथ्यमतिथीनां नो विधेहि विबुधेश्वरि ! । अम्बडं मोचय स्वीयपरिवाराद् बलादपि ॥ ७५२ ॥
श्रुत्वेति सद्गुरोर्वाक्यं प्राह सा परमर्थ्यताम् । सहस्रधाविभक्तश्च स परं योगिनीगणैः ॥ ७५३ ॥
गण्यथाह महाक्षेपादित्थमप्यस्तु चेत्तव । व्यावृत्य निजके स्थाने उपवेष्टुं समर्थता ॥ ७५४ ॥
प्रभोः श्रीहेमचन्द्रस्य दीयतां मानमद्भुतम् । ततो यथोभयो रूपमवतिष्ठेत मण्डले ॥ ७५५ ॥
इत्याकर्ण्य भयोद्भ्रान्ता देवी शब्दं दधौ गुरुम् । यदाहूतः सुरीवर्गोऽमुञ्चदह्नाय मन्त्रिणम् ॥ ७५६ ॥
प्रदापयामि वाचो वः किं देव्येत्युदिते सति । ब्रह्मादिवाग्भिरास्था का परब्रह्मनिधेः प्रभोः ॥ ७५७ ॥
भवत्याः प्राभृतं किञ्चिद् विधास्यामः पुनः प्रगे । विसृज्येति सुरीं स्थानं[6] स्वं ययौ प्रभुरप्यतः ॥ ७५८ ॥
श्रीमदम्बडमन्त्रीन्दोर्निद्रा रात्रौ तदाययौ । प्रातः साहस्रिकं भोगं स श्रीदेव्या व्यधापयत् ॥ ७५९ ॥
इत्थं श्रीसैन्धवीदेव्याः[7] प्रभुभिर्मोचितोऽम्बडः । श्रीमत्सुव्रतचैत्यस्य जीर्णोद्धारमकारयत् ॥ ७६० ॥
हस्ताष्टादशकं चैत्यमप्रतिच्छन्दघाटभृत् । अनेकदेववेश्माढ्यं बभौ हेमाद्रिकूटवत् ॥ ७६१ ॥
ध्वजारोपोत्सवं तत्राकारयत् सचिवाग्रणीः । तं समीक्ष्याशिषं प्रादाद् गुरुस्तुष्टिभरैर्गुरुः ॥ ७६२ ॥

तथा हि–

**किं कृतेन न यत्र त्वं यत्र त्वं तत्र कः कलिः ।**
**कलौ चेद्भवतो जन्म कलिरस्तु कृतेन किम् ॥ ७६३ ॥**

तज्जयाचन्द्रसूर्यं त्वं निजवंश्यमनोरथान् । पूरयन् चूरयन्नन्तर्बहिःशात्रवमण्डलम् ॥ ७६४ ॥
तमापृच्छ्य समागत्य स्वस्थाने भूपतिं प्रभुः । प्रधानायुः[8]प्रदानेन विदधे मेदुरं मुदा ॥ ७६५ ॥
दुस्साध[9]साधिका यस्य गुरोरीदृगमानुषी । शक्तिस्तत्कृतपुण्यत्वं मन्येवेति नृपोऽवदत् ॥ ७६६ ॥

*

1 N गुरुराह स्वेवयश्चन्द्र° । 2 N प्रेषयदन्तिके । 3 B तोरणाग्रस्थितो देव्याः । 4 N गणीं । 5 N पुरं । 6 N सुरीस्थाने । 7 B सैन्धवा° । 8 D प्रधानायुप्रदा° । 9 D दुस्साधु° ।

§२७. अन्येद्युरुपदिष्टे च सम्यक्त्वे सङ्घसाक्षिकम्। राजा गृहीते गुरुभिर्गाथामेनां स जल्पितः॥ ७६७॥

तथा हि—

**तुम्हाण किंकरो हं तुम्हे नाहा भवोयहिगयस्स।**
**सयलधणाइसमेओ मइँ तुम्ह समप्पिओ अप्पा॥ ७६८॥**

व्याख्यातायामथैतस्यामर्थं सत्यापयन्नृपः। राज्यं समर्पयामास जगद्गुरवस्ततः॥ ७६९॥
निस्सङ्गानां निरीहाणां नार्थो राज्येन नो नृप!। आपिबामः कथं भोगान् वान्ताननुचितं ह्यदः॥ ७७०॥
एवं विवादसम्बाधे दानाग्रहणकारणे। गुरु-भूपालयोर्मन्त्री[1] वैशिष्ट्यमकरोदिदम्॥ ७७१॥
सर्वाणि राजकार्याणि कार्याण्यश्रावितानि न। अतः परं प्रभो राज्ये भूयादनुमतं ह्यदः॥ ७७२॥
प्रतिपन्ने ततः श्राद्धव्रतसज्ज्ञानहेतवे। भूपस्याध्यात्मतत्त्वार्थावगमाय च स प्रभुः॥ ७७३॥
**योगशास्त्रं** सुशास्त्राणां शिरोरत्नसमं व्यधात्। अध्याप्य तं स्वयं[2] व्यक्तं तत्पुरश्च व्यचारयत्॥—युग्मम्।

§२८. जग्राह नियमं राजा दर्शनी जिनदर्शने। यादृशस्तादृशो वा मे वन्द्यो[3] मुद्रेव भूपतेः॥ ७७५॥
चतुरङ्गचमूमध्ये राजा राजाध्वना व्रजन्। गजारूढोऽन्यदाऽद्राक्षीज्जैनर्षिं वेश्यया समम्॥ ७७६॥
क्षुरलूनशिरःकेशं सितवैकक्षकावृतम्। कस्तीरास्तीर्णसध्वानपन्नद्धारूढपादकम्॥ ७७७॥
अतुल्यफणभृद्वल्लीदलबीटकहस्तकम्। आलम्बितभुजादण्डमंसेऽस्या मन्दिराद् बहिः॥—त्रिभिर्विशेषकम्।
कुम्भयोन्येस्य मूर्द्धानं तं ननाम महीपतिः। पृष्ठासनस्थितश्चक्रे **नड्डूल**नृपतिः स्मितम्॥ ७७९॥
ददर्श **वाग्भटा**मात्यस्तत् प्रभोश्च न्यवेदयत्। ततो राज्ञः पुरः पूज्या इत्थं धर्मकथां व्यधुः॥ ७८०॥

तथा हि—

**पासत्थाइ वंदमाणस्स नेव कित्ती न निज्जरा होइ।**
**कायकिलेसं एमेव कुणइ तह कम्मबंधं वा॥ ७८१॥**

व्यमृशद् भूपतिः केनाप्यद्य वृत्तं निवेदितम्। व्यजिज्ञपच्च पूज्यानां शिक्षाभिर्निर्वृतो[4]ऽस्म्यहम्॥ ७८२॥
इतश्च पृथिवीशक्रनमस्कारमुदीक्ष्य सः। दध्यावध्यामचैतन्यं का मय्यस्ति नमस्यता॥ ७८३॥
विध्वस्तवीतरागाज्ञे[5] त्यक्तभोगपुनर्ग्रहे। अदृश्यास्ये प्रतिज्ञाया भ्रष्टे दुर्मोहनामनि॥ ७८४॥—युग्मम्।
अमुचद् भुजमस्याश्च चापतुल्यं मनोभुवः। कुधियां पेटकं वाथ बीटकं व्रतकण्टकम्॥ ७८५॥
नरकाध्वनि यानाभे मुमोचायमुपानहौ। विरागी स्वाश्रयेऽगच्छदतुच्छं स्वल्पभर्तृकः॥ ७८६॥
पुनर्व्रतं समुच्चार्य गुरूपान्ते महामनाः। सङ्घत्यागादनशनप्रत्याख्यानी बभूव सः॥ ७८७॥
निर्जरैनेकधाऽप्युक्तो दृढो नासौ निजाग्रहात्। पश्चाद् व्याजुघुटे द्रोणीमब्धौ लब्धां हि कस्त्यजेत्॥७८८॥
अनशन्याश्रयास्तत्र प्रावर्त्तन्त प्रभावनाः। वरिवस्यां तपस्यायाः श्रेयोर्थी कः करोति न॥ ७८९॥
विज्ञप्तेऽधिकृतैस्तत्र भूपो नन्तुं तपोनिधिम्। अभ्याययौ प्रमोदेन सान्तःपुरपरिच्छदः॥ ७९०॥
यावत् पश्यति तद्वक्त्रं तावद् दृष्टः स एव यः। पण्याङ्गनागृहद्वारे कुवेषोऽपि नतस्तदा॥ ७९१॥
तद्गुरून् मुनिवर्गं च नत्वा भूपालपुङ्गवः। तत्पादौ प्रणमंस्तेन निषिद्धो भुजधारणात्॥ ७९२॥
महाराज! गुरुस्त्वं मे भवाब्धेस्तारितस्त्वया। तव विश्वेऽपि वन्द्यस्य प्रणामो ह्यतिदुर्जरः॥ ७९३॥
मादृशा भ्रष्टचारित्रा विराधितजिनोक्तयः। आराधकाः कथं नु स्युः स्फुरन्नरकदोहदाः॥ ७९४॥

1 D मैत्री। 2 N स्वयं चक्रे। 3 N वेद्यो। 4 N शिष्याभिर्निवृतो। 5 N °रागांसे।

भवादृशः पृथिव्यां चेन्नाथोऽपूर्वपितृप्रभुः । न स्याल्लोकद्वयापायसंहर्ता प्राणभृद्गणे[1] ॥ ७९५ ॥–**युग्मम्** ।

अवन्द्यं वन्द्यमानेन मां निस्तारयितुं त्वया । पुपूरे समसंवेगवासना सङ्गमोचिनी[2] ॥ ७९६ ॥

निर्जैर्गृहस्थैर्यतिभिरभियुक्तोऽपि[3] जीवितुम् । क्लीबो व्रतस्य कष्टानि न सोढा प्रायमासदम् ॥ ७९७ ॥

उवाच भूपतिर्धीमन्! मुनीशः कस्त्वया समः । निमित्तादेकतस्त्यक्तसङ्गः प्रत्येकबुद्धवत् ॥ ७९८ ॥

तीर्थकृद्दर्शनाधारं प्रणामं मे स्वभावजम् । मानयन्नुपकाराय कृतज्ञमुकुटायसे ॥ ७९९ ॥

ममाथ वन्दनामात्रार्जितमप्यप्रतीच्छया । अदित्सन् सुकृतं संविभागार्हं मां न मन्यसे[4] ॥ ८०० ॥

उदरंभरिता युक्ता सतां नैतदिति ब्रुवन् । तद्वचोऽवसरादानात् प्रणनाम बलादपि ॥ ८०१ ॥

अथाह्वानशनी धन्यो देशः पुण्यश्रियः प्रजाः । क्षाल्यते यत्र पङ्कस्त्वद्दर्शनामृतवृष्टिभिः ॥ ८०२ ॥

श्रुत्वेत्यानन्दसम्भेदगद्गदाक्षः[5] क्ष्मापतिः । प्रभोः श्री**हेमचन्द्र**स्य गत्वा वृत्तमथावदत् ॥ ८०३ ॥

युष्माभिरुपदिष्टानां नियमानां प्रपालना । प्रभो! कामदुघेवेयं समस्तहृदभीष्टदा ॥ ८०४ ॥

अवोचन् गुरवः पुण्यदशेयं तव जाग्रती । प्रकाशयति वस्तूनि गुरुभक्त्यर्चिरर्चिता ॥ ८०५ ॥

एवं कृतार्थयन् जन्म सप्तक्षेत्र्यां धनं वपन् । चक्रे **संप्रति**वज्जैनभवनैर्मण्डितां महीम् ॥ ८०६ ॥

§ २९. श्री**शलाकानृणां वृत्तं** स्वोपज्ञं प्रभवोऽन्यदा । व्याचख्युर्नृपतेर्धर्मस्थिरीकरणहेतवे ॥ ८०७ ॥

श्रीमहावीरवृत्तं च व्याख्यान्तः सूरयोऽन्यदा । देवाधिदेवसम्बन्धं व्याचख्युर्भूपतेः पुरः ॥ ८०८ ॥

यथा **प्रभावती** देवी भूपालो**दयन**प्रिया । श्री**चेटका**वनीपालपुत्री तस्या यथा पुरा ॥ ८०९

वारिधौ व्यन्तरः कश्चिद् यानपात्रं महालयम् । स्तम्भयित्वाऽर्पयच्छ्राद्धस्यार्द्धं[6] संपुटं दृढम् (?)* ॥८१०॥

एनं देवाधिदेवं य उपलक्षयिता प्रभुम् । स प्रकाशयिता[7] नान्य[8] इत्युक्त्वाऽसौ तिरोदधे ॥ ८११ ॥

पुरे **वीतभये** यानपात्रे सङ्घटिते यथा । अन्यैर्नोद्घाटितं देव्या वीराख्यायाः प्रकाशितम् ॥ ८१२ ॥

यथा **प्रद्योतरा**जस्य हस्तं सा प्रतिमा गता । दास्या तत् प्रतिबिम्बं च मुक्तं पश्चात् पुरे यथा ॥ ८१३ ॥

ग्रन्थगौरवभीत्या च न तथा वर्णिता कथा । श्री**वीरचरिता**ज्ज्ञेया तस्यां श्रुतिसकौतुकैः ॥–**षड्भिः कुलकम्** ।

तां श्रुत्वा भूपतिः कल्पहस्तान्निपुणधीरसौ । प्रेष्य **वीतभये** शून्येऽचीखनत् तद्भुवं क्षणात् ॥ ८१५ ॥

राजमन्दिरमालोक्य भुवोऽन्तस्तेऽतिहर्षतः । देवतावसरस्थानं प्रापुर्बिम्बं तथार्हतः ॥ ८१६ ॥

आनीतं च विभो राजधानीमतिशयोत्सवैः । स प्रवेशं दधे तस्य सौधदैवतवेश्मनि ॥ ८१७ ॥

प्रासादः स्फाटिकस्तत्र तद्योग्यः पृथिवीभृता । प्रारेभेऽथ निषिद्धश्च[9] प्रभुभिर्भाविवेदिभिः[10] ॥ ८१८ ॥

राजप्रासादमध्ये च नहि देवगृहं भवेत् । इत्थमाज्ञामनुलंघ्य न्यवर्तत ततो नृपः ॥ ८१९ ॥

एकातपत्रतां जैनशासनस्य प्रकाशयन् । मिथ्यात्वशैलवज्रं श्री**हेमचन्द्र**प्रभुर्बभौ ॥ ८२० ॥

§ ३०. तथा **लोलार्कचैत्य**स्याग्रतः क्षेत्राधिपालये । अपश्यदामिषापूर्णं शरावं तण्डकाधिपः ॥ ८२१ ॥

तेन त्रिलोचनस्येव संहर्तुरनयस्पृशाम् । तत् **त्रिलोचन**नाम्नश्च तलारक्षस्य दर्शितम् ॥ ८२२ ॥

असंख्यजनसञ्चारानुपलब्धपदस्ततः । अन्वेषयन्नुपायं स लेभे मतिमतां वरः ॥ ८२३ ॥

कुलालवृन्दमाकार्य प्रत्येकं तदुदैक्षयत् । शरावं घटितं केन पप्रच्छेति कुशाग्रधीः ॥ ८२४ ॥

एकस्तेषामभिज्ञाय व्याहरद् घटितं मया । अचीकरच्च तं **लक्ष्मो नकुलेश**स्थगीधरः ॥ ८२५ ॥

---

1 A N प्राणिभृद्° । 2 A 'मोचिती । 3 N यतिभिरेभिर्युक्तोऽपि । 4 N सुकृतं संविभागार्हं न मन्यसे । 5 N गद्गदाक्षः सभापतिः । 6 B N श्राद्धतस्यार्द्धं । * सप्ताक्षरपादोऽयम् A D आदर्शद्वयेऽपि । 7 A प्रकाशयता । 8 B °न्यस्य । 9 N प्रतिषिद्धश्च । 10 A D °भाववेदिभिः ।

विसृज्य तान् महीशाय तलारक्षो व्यजिज्ञपत् । व्याजह्रे तत्क्षणान्नाथ[ः] केल्हणं मण्डलेश्वरम् ॥८२६॥
आज्ञाभङ्गापराधेन देशः श्रीकरणे त्वया । उद्गृण्यतां स चावादीन्न जाने किमिदं प्रभो ! ॥ ८२७ ॥
द्वारावलगकाख्याते स्थगीशचरिते ततः । लक्षं विलक्षं हृत्वा च तोपं चक्रे प्रभोरसौ ॥ ८२८ ॥
चैत्रमाघाश्वयुग्मासमहेष्वपि सुरीगणः । अहिंसया मुदं प्राप गुणे को मत्सरं वदेत् ॥ ८२९ ॥
कर्पूरप्रमुखैर्भोगैर्बलिभिर्मोदकादिभिः । तुष्टोऽसौ मद्य-मांसेषु पिच्छिलेषु श्लथादरः ॥ ८३० ॥
शैवाचार्या अपि तदा मिथ्याधर्मेष्वनादृताः । [1]जटान्तः स्थापनाचार्यमवहन् कृतिकर्मणे ॥ ८३१ ॥
श्रीवीतरागमभ्यर्च्य परमेष्ठिनमस्कृतीः । परावर्त्तन्त धर्मोऽपि राजार्च्यैः क्रियते जनैः ॥ ८३२ ॥

चराचरवपुर्भृतामभयदानदानेश्वरो
जडाखिलदृगापगाचरणरत्नराशिप्रदः ।
लसन्निज-परागमाप्रकटतत्त्वपारंगमः
शशाङ्ककुलशेखरो जयति हेमचन्द्रप्रभुः ॥ ८३३ ॥

व्याकरणं पञ्चाङ्गं प्रमाणशास्त्रं प्रमाणमीमांसा ।
छन्दोऽलङ्कृतिचूडामणी च शास्त्रे विभुर्व्यधित ॥ ८३४ ॥
एकार्थानेकार्था देश्या निर्घण्ट इति च चत्वारः ।
विहिताश्च नामकोशाः शुचि[2]कवितानद्युपाध्यायाः ॥ ८३५ ॥
त्र्युत्तरषष्टिशलाकानरेतिवृत्तं[3] गृहिव्रतविचारे ।
अध्यात्मयोगशास्त्रं विदधे जगदुपकृतिविधित्सुः ॥ ८३६ ॥
लक्षण-साहित्यगुणं विदधे च द्व्याश्रयं महाकाव्यम् ।
चक्रे विंशतिमुच्चैः सवीतरागस्तवानां च ॥ ८३७ ॥

इति तद्विहितग्रन्थसंख्यैव नहि विद्यते । नामापि न विदन्त्येषां मादृशा मन्दमेधसः ॥ ८३८ ॥

ॐ

§३१. व्याख्यायामन्यदा श्रीमच्छत्रुञ्जयगिरेः स्तवम् । श्रीमद्रैवतकस्यापि प्रभुराह नृपाग्रतः ॥ ८३९ ॥
उपदेशप्रदीपेन विध्वस्तान्तस्तमा नृपः । तीर्थयात्रां ततश्चक्रे [4]शक्रेभोज्ज्वलकीर्त्तिभृत् ॥ ८४० ॥
प्रयाणैः पञ्चगव्यूतैः पादचारेण सोऽन्यदा । अनुपानत्कगुरुणा प्रापोपवलभि द्रुतम् ॥ ८४१ ॥
तत्रास्ति स्थाप ईर्ष्यालुरिति भूमिधरद्वयम् । तदधो गुरवः प्रीताः प्रातरावश्यकं दधुः ॥ ८४२ ॥
भूपतिस्तत्र चागत्य वासनामोदमेदुरः । प्रभुत्वान्निर्जितात्मीयगुरुनिष्ठाविशिष्टधीः ॥ ८४३ ॥
प्रणनाम प्रभोः पादौ प्रक्रान्तेऽतः प्रयाणके । प्रासादौ कारयामास भूपोऽत्र गुरुभक्तितः ॥ ८४४ ॥
श्रीनाभेय-त्रयोविंशजिनबिम्बे विधाप्य च । प्रतिष्ठाप्य प्रभोः पार्श्वादस्थापयत चात्र सः ॥ ८४५ ॥
विमलाद्रौ जिनाधीशं नमश्चक्रेऽतिभक्तितः । निजानुमानतोऽभ्यर्च्य ययौ रैवतकाचलम् ॥ ८४६ ॥
दुरारोहं गुरुं पद्याभावाद् दृष्ट्वा स वाग्भटम् । मन्त्रिणं तद् विधानाय समादिक्षत् स तां दधौ ॥८४७॥
तत्र छत्रशिलाशङ्कावशाच्छैलाधिरोहणम् । राज्ञो विज्ञाय तदधोभूस्थः श्रीनेमिमार्चयत् ॥ ८४८ ॥
ततो व्यावृत्य स प्राप नगरं स्वं नराधिपः । जैनयात्रोत्सवं कृत्वा मेने स्वं पुण्यपूरितम् ॥ ८४९ ॥

ॐ

---

1 N जयंतस्थापना° । 2 N भुवि कविता° । 3 N °नरेशवृत्तं । 4 N शक्राभो° ।

शर-वेदेश्वरे ( ११४५ ) वर्षे कार्त्तिके पूर्णिमानिशि ।
जन्माभवत् प्रभोर्व्योम-बाण-शम्भौ ( ११५० ) व्रतं तथा ॥ ८५० ॥
रस-षड्केश्वरे ( ११६६ ) सूरिप्रतिष्ठा समजायत ।
नन्द-द्वय-रवौ वर्षे ( १२२९ ) ऽवसानमभवत् प्रभोः ॥ ८५१ ॥

इत्थं श्रीजिनशासनाम्रतरणेः श्रीहेमचन्द्रप्रभो-
रज्ञानान्धतमःप्रचारहरणं[1] मादृशां मादृशाम् ।
विद्यापङ्कजिनीविकाशि विदितं राज्ञोऽतिवृद्ध्यै स्फुरद्
वृत्तं विश्वविबोधनाय भवताद् दुष्कर्मभेदाय च ॥ ८५२ ॥
श्रीचन्द्रप्रभसूरिपट्टसरसीहंसप्रभः श्रीप्रभा-
चन्द्रः सूरिरनेन चेतसि कृते श्रीरामलक्ष्मीभुवा ।
श्रीपूर्वर्षिचरित्ररोहणगिरौ श्रीहेमचन्द्रप्रथा-
श्रीप्रद्युम्नमुनीन्दुना विशदितः शृङ्गो द्विकद्विप्रमः ॥ ८५३ ॥

## ॥ इति श्रीहेमचन्द्रसूरिप्रबन्धः ॥

॥ *ग्रंथा० ८७१ ॥ छ ॥ स्वस्ति ॥

---

1 N °प्रवाहहरणं । * B ग्रंथाग्रं ८५५ ॥ उभयं ग्रंथसंख्या ५७८४, अक्षर २३ ।

# ग्रन्थकारकृता स्वकीया प्रशस्तिः ।

भास्वत्पात्रं कविमुनिबुधभ्राजितो राजसेव्यः
सर्वेष्टार्थप्रदगुरुलसत्कल्पवृक्षावदातः[1] ।
श्रीजैनांह्रिश्रयशुचि[2]शिराः सिद्धिमद्भद्रशालो
गच्छश्चान्द्रः सुरगिरितुलामश्नुवानः समस्ति[3] ॥ १ ॥

प्रद्युम्नसूरिरिति तत्र पुरा बभूव मन्दारपादपतुलः[4] कलितोरुशाखः ।
यत्सङ्गमामृतरसैर्बहवः सुधर्माधीशा भवन्ति सुधियः सुमनोभिरामाः ॥ २ ॥

अल्लसभायां विजिते दिगम्बरे तदीयपक्षः किल कोशरक्षकः ।
दातुं प्रभोरेकपटं समानयत् तमेकपट्टं जगृहे सुधीषु यः ॥ ३ ॥

शिष्योऽस्याभयदेवसूरिरभवज्जाड्यान्धकारं हरन्
गोभिर्भास्करवत् परां विरचयन् भव्याम्बवर्गे मुदम्[5] ।
ग्रन्थो वादमहार्णवोऽस्य विदितः प्रौढप्रमेयोर्मिभृत्
दत्तेऽर्थं जिनशासनप्रवहणे[6] सांयात्रिकाणां ध्रुवम् ॥ ४ ॥

---

1 N °वृक्षा(क्ष)लदात्(ता) । 2 N °जैनाद्रिश्रियभुवि । 3 N °मश्नुवान (नो)सम(मो)स्तिः । 4 N °पादपतुला° । 5 N °वर्गेच्छदम् । 6 N प्रवहणे ।

त्रिभुवनगिरिस्वामी श्रीमान् स कर्दमभूपति-
स्तदुप समभूत् शिष्यः श्रीमद्धनेश्वरसञ्ज्ञया ।
अजनि सुगुरुस्तत्पट्टेऽस्मात् प्रभृत्यवनिस्तुतः
तदनु विदितो विश्वे गच्छः स 'राज'पदोत्तरः ॥ ५ ॥

सुगुरुरजितसिंहस्तत्पदाम्भोजभानुः समजनि जनितश्रीभव्यपङ्केरुहाणाम् ।
वचनकरवितानं यस्य देदीप्यमानं जडगतमपि सोढुं[1] दुर्दृशोर्न क्षमन्ते ॥ ६ ॥

श्रीवर्द्धमानसुगुरुः कर्कोन्नतधामसङ्गतस्तदनु ।
मतसङ्कचारिशरणः समजनि [2]जनलग्नदोषहरः ॥ ७ ॥

तत्पट्ट[3]भूमिरुहपोषतपात्ययश्रीः[4] श्रीशीलभद्र[5] इति सूरिपदं प्रपेदे ।
धर्म्मोपदेशजलवाहजलैर्यदीयः प्रापोन्नतिं [6]जगति कीर्तिलतावितानः ॥ ८ ॥

तदंह्रिसरसीहंसः सूरिः श्रीचन्द्र इत्यभूत् ।
विवेचकः शुचिः सद्गीस्तद्वाचानुपजीवनात्[7] ॥ ९ ॥

अर्थप्रकाशिका[8] शास्त्रचक्षुषाममृताञ्जनम् ।
घनसाररसाढ्या यन्मतिः पुन्नागरङ्गभृत्[9] ॥ १० ॥

सूरिः श्रीभरतेश्वरस्तदनु च प्रामाणिकग्रामणी-
र्यन्नामस्मृतितोऽप्यघं हरति च श्रीधर्म्मघोष[10]प्रभुः ।
कल्याणावलिकन्दलालिजलदः श्रीसर्वदेवो गुरु-
श्चत्वारः किल शीलभद्रसुगुरोः शिष्या नरेन्द्रार्चिताः ॥ ११ ॥

श्रीपात्रं स जिनेश्वरप्रभुरभूत् सङ्घाम्बुधौ चन्द्रमाः
सूरिः श्रीजिनदत्त इत्युदितधीरुन्निद्रविद्याद्युतिः ।
चारित्रामलशैलनन्दनवनं श्रीपद्मदेवप्रभुः
श्रीश्रीचन्द्रमुनीश्वरस्य जयिनः शिष्या अभूवन्नमी ॥ १२ ॥

श्रीसङ्घरोहणधराधरचारुरत्नं श्रीपूर्णभद्रगुरुरभ्युदितः पदेऽस्य ।
यत्सन्निधिस्थितिभृतो भुवि भव्यसार्था वस्तूनि विश्वविषयाणि विलोकयन्ति ॥१३॥

---

1 N °गतमपसोढुं । 2 N समजनलग्न° । 3 N तदाद(द्रि)° । 4 N °योषतपात्यपश्री; A °तपात्ययः श्रीः । 5 N °शालिभद्र° । 6 N प्राप्नोत्तति(तो) । 7 N °नुपजीविनाम् । 8 N अर्थप्रकाशकं । 9 N प्येतसा संसार साद्व्यायन्मतिः पुत्तोग° । 10 A °घोषः प्रभुः ।

तत्पट्टोदयपर्वतामृतरुचिः प्रीणंश्चकोरव्रजं
श्रीचन्द्रप्रभसूरिरद्भुतमतिज्योत्स्नानिधानं बभौ ।
आश्चर्यं न कलङ्कधाम तमसानुल्लंघ्यमूर्तिं भवं
पाथोधिं क्षणुते[1] विनम्रकमलोल्लासी न दोषाकरः ॥ १४ ॥

आचार्यः श्रीप्रभाचन्द्रस्तत्पादाम्भोजषट्पदः ।
चित्रं यः सुमनःस्थोऽपि सदानवगुरुक्रमः ॥ १५ ॥

श्री हेमचन्द्रसूरीणामनुध्यानप्रवृत्तितः ।
पर्वणः परिशिष्टस्य दृष्टेः[2] सम्पुटवासनः ॥ १६ ॥

श्रीवज्रानुप्रवृत्तप्रकट[3]मुनिपतिप्रष्ठवृत्तानि तत्तद्
ग्रन्थेभ्यः कानिचिच्च श्रुतधरमुखतः कानिचित् सङ्कलय्य ।
दुष्प्रापत्वादमीषां विशकलिततयैकत्र चित्रावदातं
जिज्ञासैकाग्रहाणामधिगतविधयेऽभ्युच्चयं स प्रतेने ॥ १७ ॥

—त्रिभिर्विशेषकम् ।

अत्र क्षूणं हि यत्किञ्चित् संप्रदायविभेदतः ।
मयि प्रसादमाधाय तच्छोधयत कोविदाः ॥ १८ ॥

यतः—

आराधितं[4] मया शून्यं यथा तुष्टं स्वतामदात्[5] ।
निजोक्तौ स्थापितं तत् प्राक् कथाकन्थी[6]कृतास्ततः ॥ १९ ॥

रोदोरन्ध्रगसिद्धकिन्नरगणानुल्लंघ्यशृङ्गस्थिति-
स्तुङ्गत्वोदितवृत्तशेवधिरतिप्रौढार्थसंपत्तिकृत् ।
पूतप्रभया तिरस्कृतपरज्योतिःप्रकाशोदयः
श्रीपूर्वर्षिचरित्ररोहणगिरौ स्यादारवीन्दुध्रुवः ॥ २० ॥

---

1 N क्षपुटे विलक्षकमलो° । 2 N °शिष्टस्याष्टे° । 3 N °वज्रानुप्रभप्रकट° । 4 N आराधितमया° । 5 N स्व(म)तमे(मे)-दात् । 6 A कथाकंठीकृताः ।

श्रीप्रद्युम्नगुरोर्हिमांशुविशदो बोधः शुचेः सङ्गतो
मिश्रो रक्तरुचा[1] मम प्रतिपदास्फूर्जद्यशःपूरुषः।
ज्ञानश्रीपुरतः पदार्थघटनाबिम्बद्वयोट्टङ्कनात्
जातो ग्रन्थमिषेण साक्षरशुचिर्द्रम्मश्चिरं नन्दतु ॥ २१ ॥

वेदानल-शिखि-शशधर (१३३४) वर्षे चैत्रस्य धवलसप्तम्याम्।
शुक्रे पुनर्वसुदिने सम्पूर्णं पूर्वऋषिचरितम्[2] ॥ २२ ॥

शिक्षाप्रसादवशतः स्वगुरोर्मयैनमायासमत्र दधता यदवापि पुण्यम्।
व्याख्यानसक्तमनसः श्रवणादराश्च श्रेयस्सुसङ्गममनुत्तरमवाप्नुवन्तु ॥ २३ ॥

ग्रन्थस्य मानमस्य प्रत्यक्षरगणनया सुनिर्णीतम्।
पञ्चसहस्राः सप्त च शतानि चतुरधिकसप्ततियुतानि* ॥ २४ ॥

। †प्रशस्ति श्लोक ४०, उभयं ५७७४, शिवमस्तु ।

---

1 D मिश्रोरुक्तरुचा; N मिश्रो(चारु)रुचा। 2 A पूर्वर्षिचरितम्। * B चतुरशीति अधिकमिह। † B आदर्शे नास्तीयं समस्ताऽपि ग्रन्थकारकृता स्वकीया प्रशस्तिः।

# १. परिशिष्टम् ।

## प्रभावकचरित्रान्तर्गतसमुद्धृतपद्यानां

# अकाराद्यनुक्रमणिका ।


अग्घायंति महुयरा ८७
अज्जवि सा परितप्पइ ८४
अज्जवि तं सुमरिज्जइ ८८
अणुहुल्लीय फुल्ल म ५७
अति अति अन्म अलं ८९
अत्र भीष्म शतं दग्धं १८८
अद्य मे सफला प्रीति० ८९
अनागतं परिज्ञाय १२५
अनुमन्ता विशसिता २०३
अपाणिपादो ह्यमनो १६२
अपूर्वेयं धनुर्विद्या ५८
अमी पानकारम्भाः ५९
अयसाभियोगसंदूमि० ३२
अर्काहितदलोच्छेदी १४२
अर्हन् सर्वार्थवेदी १०४
अवरहं देवहं सिरु पुज्जि० १४२
अशानीयन् सदा मांसं २०३
अङ्कैरुत्पुलकैः प्रमोद० ८९
अन्धयसुयाण कालो १५३
अंबं तंबच्छीए २९
आकरः सर्वशास्त्राणां ३९
आचार्यहरिभद्रो मे १२५
आचार्योऽहं कविरहमहं १४८
आसंसारं कइपुंगवेहिं १४९
आसंसारं सरियासएहि १०४
इय उज्जुयसीलालंकिया ८८
इयं व्योमाम्भोधेस्तट० १४९
इह निवसति मेरुः १८९
उज्जिंतसेलसिहरे १०८
उत्तिष्ठन्त्या रतान्ते भर० १०३
उद्धृत्य बाहू किल रारटीति १६८
उप्पहजायाए असोहरीइ १०१
एको गोत्रे स भवति पुमान् ९८
एको रागिषु राजते १९१
एक्केण कोत्थुहेणं ८८
एते मेकलकन्यका १४७
एयं लोइयकव्वं ७५
कः कण्ठीरवकण्ठकेसर० १७४
कतिपयपुरस्वामी १४१
करवत्तयजलबिंदुआ ८७
कवाडमासज्ज वरंगणाए १०६
कारय प्रसरं सिद्ध १८५
कालिन्दि ब्रूहि कुम्भो० १६९
किं कृतेन न यत्र त्वं २०८
किं नन्दी किं मुरारिः १४३
कुक्खी संबल चत्तधण १०४
कुलं पवित्रं जननी कृतार्था १०४
कूर्मः पादोऽत्र यष्टि० ९८
कोटाकोटिः कोटिकोटिः १८०
क्षितिप तव समक्षं १४८
खचरागमने खचरो १३३
खद्योतद्युतिमातनोति १७९
खंडं विणावि अखंड० ८८
गतप्राया रात्रिः कृशतनु० ११४
गयमाणसु चंदणु ८७
गयवर केरइ सत्थरइ ९४

| | |
|---|---|
| गलत्विदानिं चिरकाल० | १४८ |
| गुणचन्द वाणमन्तर | ७२ |
| गुणसेण अग्गिसम्म | ७३ |
| गुणैरुत्तुङ्गतां याति | १६९ |
| चक्किदुगं हरिपणगं | ६३ |
| चक्षुः संवृणु वक्रवीक्षण० | ९३ |
| चटत्त्रटिति चर्मणि | ९८ |
| चतुर्मुखमुखाम्भोज० | १५७ |
| चिखादिषति यो मांसं | २०३ |
| चिरं चित्तोद्याने चरसि च | १९० |
| छायह कारणि सिरि | ८७ |
| जइ सव्वत्थ अहवि य | ८८ |
| जय-विजया य सहोयर | ७३ |
| जह जह पएसिणिं | ३० |
| जीयं जलबिंदुसमं | १०१ |
| जीर्णे भोजनमात्रेयः | ३९ |
| जे केवि पहू महिमंडलंमि | ८८ |
| जे चारित्तिहिं निम्मला | १०० |
| तइया मह निग्गमणे | ८६ |
| तत्ती सीअली मेलावा केहा | ८९ |
| तुम्हाण किंकरो हं | २०९ |
| त्याज्या हिंसा नरकपद्वी | १४५ |
| त्रैकाल्यं द्रव्यषट्कं नव० | १०४ |
| त्वद्वाक्यतोऽपि केषांचित् | ५९ |
| दन्तानां मलमण्डली | १७७ |
| दर्प्पणार्प्पितमालोक्य | १०३ |
| दामोदरकराघात० | ११६ |
| दिगम्बरशिरोमणे | १७५ |
| दिग्वासा यदि तत् किमस्य | १४२ |
| दिदृक्षुर्भिक्षुरायातो | ५८ |
| दीहरफणिंदनाले | ३८ |
| दोवि गिहत्था धडहड | १०४ |
| धर्मलाभ इति प्रोक्ते | ५६ |
| न गङ्गां न गाङ्गेयं | ८७ |
| न यन्मुक्तं पूर्वै रघु० | २०६ |
| नवि मारिअइ नवि | ६० |
| नाकृत्वा प्राणिनां हिंसा | २०३ |
| नारीणां विदधाति निर्वृति० | १७९ |
| नाहं स्वर्गफलोपभोग० | १४२ |
| निद्रा जागरणादिकृत्य० | ८८ |
| निवपुच्छिएण भणिओ | ३१ |
| नो वाद्भुतमुलूकस्य | ५९ |
| पइं मुक्काहवि वरतरु | ८८ |
| पइं सग्गगए सामंतराय | १०५ |
| परिसेसिय हंसउलं | ८७ |
| पसु जेम पुलिंदउ पीअइ | ९१ |
| पसु वे रुडंवि विहसियउ | १४३ |
| पङ्के पङ्कजमुज्झितं | ११३ |
| पंच महव्वयजुत्त० | १०४ |
| प्रकाशितं त्वयैकेन | ५९ |
| पाणयकप्पे मुनिसुव्वओ | ४२ |
| पातु वो हेमगोपालः | १९४ |
| पालित्तय कहसु फुडं | ३१ |
| पासत्थाइ वंदमाणस्स | २०९ |
| पांशुमलिनांघ्रिजंघः | ८७ |
| पियसंभरण पलुट्टंत | ९४ |
| पृथुकार्तस्वरपात्रं | १४९ |
| पृथुरसि गुणैः कीर्त्या | ९८ |
| पौत्रः सोऽपि पितामहः | १९० |
| प्राइं मुणिहि वि भ्रंतडी | १०४ |
| बलं जगद्ध्वंसनरक्षणक्षमं | १४१ |
| बाला चंकमंती पए पए | ८५ |
| बृहस्पतिस्तिष्ठतु मन्द० | १४८ |
| बे धउला बे सामला | १३१ |
| ब्रह्माण्डोदरकोटरं कियदिदं | १५० |
| भयमेकमनेकेभ्यः | ५९ |
| भवन्तु ते दोषविदः | १०० |
| भिक्खयरो पिच्छइ नाहिं | १०६ |
| भुञ्जीमहि वयं भैक्ष्यं | १९४ |
| भूमिं कामगविं स्वगोमय० | १८५ |

| | |
|---|---|
| मातर्गामकुविन्दकन्दलयता | १९० |
| मइं नायं सिद्धेस | १९५ |
| मदेन मानेन मनोभवेन | १०४ |
| मह्नोः शृङ्गं शक्रयष्टि० | ५५ |
| मयनाहिकलुसिएण | १०५ |
| मर्दय मानमतङ्गजदर्पं | ८४ |
| मलओ सचंदणो चिय | ८७ |
| माणसरहिएहिं सुहाइं | ८७ |
| मातर्मा स्पृश मा स्पृश | १४७ |
| मात्रयाऽप्यधिकं किञ्चित् | १८७ |
| मानं मुञ्च स्वामिनि | ११३ |
| मा भूत् संवत्सरोऽसौ | १०९ |
| मायंगासत्तमणस्स | १०१ |
| मालविओसि किमन्नं | १४६ |
| यत्कङ्कणाभरणकोमल० | १५२ |
| यदमोघमपामन्तरुप्तं | १०४ |
| यदि नाम कुमुदचन्द्रं | १८० |
| यद्यपि हर्षोत्कर्षं | ११५ |
| यत्र तत्र समये यथा तथा | १०४ |
| यामः स्वस्ति तवास्तु | ८५ |
| यो वादिनो द्विजिह्वान् | १७३ |
| रसातलं यातु यदत्र पौरुषं | १४३ |
| राज्ये सारं वसुधा | ९२ |
| रामो नाम बभूव हुं | १०३ |
| रुधिरचरणारक्ताः सक्ताः | ८५ |
| लज्जिज्जइ जेणि जणे | १०१ |
| लिखन्नास्ते भूमिं | ११४ |
| वइविवरनिग्गयदलो | ९४ |
| वक्त्रं पूर्णशशी सुधा | १०१ |
| वपुरेव तवाचष्टे | ६३ |
| वपुः कुब्जीभूतं तनुरपि | ९१ |
| विधिनियमभङ्गवृत्ति० | ७७ |
| विद्धा विद्धा शिलेयं | १५७ |
| विद्योतयति वालोकं | ५९ |
| विमृश विमृशाम्भोभिः | १७७ |
| विश्वामित्रपराशरप्रभृतयो | १८८ |
| विषं विनिर्धूय कुवासना० | १२५ |
| विंझेण विणावि गया | ८७ |
| शस्त्रं शास्त्रं कृषिर्विद्या | ८६ |
| शम्भुर्गौडमहामहीप० | १४७ |
| शुक्रः कवित्वमापन्नः | १९० |
| शैत्यं नाम गुणस्तवैव | १०२ |
| श्रीछित्तपे कर्दमराजशिष्ये | १४९ |
| श्वेताम्बरोऽयं किं ब्रूयात् | १७८ |
| स एष भुवनत्रयप्रथित० | १४३ |
| सत्यं वप्रेषु शीतं | १४५ |
| सद्वृत्त सद्गुण महार्घ्य | १०१ |
| सव्वत्थ अत्थि धम्मो | १४० |
| सर्वदा सर्वदोऽसीति | ५९ |
| सहस्रशीर्षा पुरुषः | १९० |
| सन्तोषं स्फारनिःकिञ्चन० | १८० |
| सन्ध्यां यत् प्रणिपत्य | १०३ |
| संवृतावयवमस्तदूषणं | १७९ |
| सारीरं सयलं बलं | ९१ |
| सिद्धंततंतपारंगयाण | ९२ |
| सिवकेउ सोहम्मे | ४२ |
| सिंहो बली हरिणशूकर० | १८९ |
| सीसं कहवि न फुट्टं | ३९ |
| स्पर्शोऽमेध्यभुजां | १४२ |
| स्नाता तिष्ठति कुन्तलेश्वर० | १४४ |
| स्फुरन्ति वादिखद्योताः | ६१ |
| हरशिरसि शिरांसि | १४४ |
| हन्ता पलस्य विक्रेता | २०३ |
| हंसा जहिं गय तहिं गय | ८७ |
| हंहो श्वेतपटाः किमेष | १७४ |
| हुत्वा मंत्री विधाता | १५५ |
| हेमसूरि अत्थाणि जे ईसर | १८७ |
| हेमाद्रेर्बलवत्प्रमाण० | १४८ |
| हेलानिद्दलियगइंद | १५२ |

# १. परिशिष्टम् ।

## प्रभावकचरित्रान्तर्गतविशेषनाम्नां

# अकाराद्यनुक्रमणिका ।


**अजयमेरु** [ दुर्ग ] १९७
**अजितयश** [ मुनि ] ७७,७८
**अजितसिंहसूरि** ( १ ) ११३
,, ,, ( २ ) २१४
**अणहिल्लपुर ( पत्तन )** १०७,१२८,१३०, १३३,१३५,१३६,१४०,१५०,१५२, १५७,१५९,१६८,१७२,१७५,१७६, १८३,१८५,१८९,१९५,१९८,२०२
**अतिमुक्तक** [ मुनि ] १७९
**अध्यात्म-योगशास्त्र** [ ग्रन्थ ] २११
**अनेकार्थकोश** ,, २११
**अभयकुमार** [ श्रेष्ठिपुत्र ] १६४
**अभयदेव सूरि** २,१६१,१६४,१६६,२१३
**अम्बड** [ मन्त्री ] ४६,२०७,२०८
**अम्बप्रसाद** ,, १७२,१७३
**अम्बादेवी** ४४,४५,४६,११९
**अम्बाशिखर** ११५
**अर्णोराज** [नृपति] १९७,१९८,२०१,२०२
**अर्बुदगिरि** १६०,१७२
**अलिअरनाग** [ देव ] २०
**अलङ्कृतिचूडामणि** [ ग्रन्थ ] २११
**अल्लभूप** [ नृप ] ७८,१६२,२१३
**अवन्तिदेश** ३,६,९,१६,४९,१३३,१३४, १३८,१४७,१४८,१८५
**अवन्तिनायक** १५४
**अवन्तिसंघ** १४०
**अवलोकन** [ पर्वतशृंग ] ११५
**अशोकचन्द्र** [ विद्वान् ] १७२
**अश्वावबोधतीर्थ** ३४,४१,४२,४६
**अष्टादशशतीदेश** १३१,१७१,२०२
**अष्टापदगिरि** ३,८,३६,१३०
**अंकुलेश्वर** [ ग्राम ] ४५
**अंग** [ देश ] १८६
**आचाराङ्गसूत्र** [ ग्रन्थ ] ७
**आमराज** [ नृपति ] ८१-९२,९५-९७, ९९,१०१,१०७, १०८,११०
**आम** [ नृप ] **पुर** ९९
**आमविहार** [ प्रासाद ] ११०
**आमिग** [ पुरोहित ] १८८
**आम्रेश्वर** [ श्राद्ध ] १६६
**आर्य खपुटाचार्य** २,३३-३५,४०,४३,४४
**आर्य नन्दिल** [ सूरि ] २,१९,२१
**आर्य नागहस्ति** [ सूरि ] २८
**आर्य रक्षित** [ सूरि ] २,९-१४,१७- १९,२७
**आर्य समित** [ सूरि ] ३,४
**आर्य सुहस्ति** [ सूरि ] ४३
**आलिग** [ कुंभकार ] १९६
**आल्हादन** [ नृपति ] १७३
**आशापल्ली** [ ग्राम ] १६५
**आशाम्बर ( दिगम्बर )** १७५
**आशुक** [ मंत्री ] १८१
**आषाढ** [ श्रावक ] १६५
**इन्द्रभूति** [ गणधर ] ३
**ईश्वरी** [ श्राविका ] ८
**उज्जयन्तगिरि** [ तीर्थ ] ८,१०८,१३७, १८४,१९५
**उज्जयिनी पुरी** १०,२२,२६,५८
**उत्तराध्ययनसूत्रवृत्ति** [ ग्रन्थ ] १७,१३५, १७८
**उत्साह** [ पण्डित ] १७९,१८६
**उदय** [ श्रावक ] १७२
**उदयन** [ मंत्री ] १८४,१९६-१९८, २०७,२१०
**उदायन** [ नृपति ] ९
**उन्नतायुग्राम** १३३
**उपदेशमालावृत्ति** [ ग्रन्थ ] १२३
**उपमितिभवप्रपञ्चा कथा** [ ग्रन्थ ] १२४
**उंबरिणीग्राम** १३१
**ऊदावसति** [ प्रासाद ] १७२
**ऋषिमण्डल प्रकरण** [ ग्रन्थ ] ७९
**एकार्थ कोश** [ ग्रन्थ ] २११
**ओंकारपुर** [ नगर ] ३१
**कच्छ** [ देश ] १८६
**कनकप्रभ** [ सूरि ] १
**कन्यकुब्ज ( कान्यकुब्ज )** [ देश ] ५०, ८८,९०,९६,९८,१००,१०५,१०७, १०९-१११,१४७,१८६,१८९
**कन्यकुब्जपुर** [ नगर ] ८३
**कपर्दी** [ यक्ष ] ११९
**कमलकीर्त्ति** [ मुनि ] १५९
**कर्ण** [ नृपति ] १६८,१९५
**कर्णराज्य** १६६
**कर्णाट** [ देश ] १७४,१८६
**कर्णाटनृप** १७४
**कर्णावती** [ नगरी ] १७४,१७५
**कर्दमभूप** [ नृपति ] १४७,२१४
**कर्मारपुर** [ ग्राम ] ५७
**कलहंस** [ सूरि ] ४३
**कलापक** [ व्याकरण ग्रन्थ ] १८५
**कलिंग** [ देश ] १८६
**कल्याणकटक** [ नगर ] २०६
**कल्याणमन्दिर** [ स्तव ] ५९
**कविराज-श्रीपाल** १९०,१९३
**कंटिका** [ वेश्या ] १०९,११०
**काकलकायस्थ** [ पण्डित ] १८६
**कात्यायन** [ गोत्र ] ५५
**कान्ती नगरी** १६५
**कान्यकुब्ज** [ देश ] ८१
**कामरूप** ,, १८६
**कामाख्या देवी** १८०
**कार्पासिक** [ श्रावक ] ७५

काल(लि)काचार्य २,२२-२८,३३,३८,४३,१७०
कालिंजर [ दुर्ग ] १०५
काशि [ देश ] १८६
काशीश्वर १८९
काश्मीर [ देश ] ८३,१७२,१८४-१८६
कासहृदनगर ४४
कितवकथानक पञ्चक [ ग्रन्थ ] ७५
कीर [ देश ] १४४
कीर्त्तिपाल [ क्षत्रिय ] १९८,१९९,२०४
कुंक(कु)ण देश ७,१८६,२०७
कुंकणाधिपति ( मल्लिकार्जुन ) २०७
कुंडगेश्वर [ तीर्थ ] ५९
कुमारपाल [ नृपति ] १९५-१९७,२०१,२०६,२०७
कुमार विहार [ प्रासाद ] २०६
कुमुदचन्द्र [दिगम्बर विद्वान् ] १७४,१७८-१८१
कुरुक्षेत्र १८६
कुवलयमाला [ कथा ग्रन्थ ] १२३
कूर्चपुर [ ग्राम ] १६२
कृष्ण [ ब्राम्हण पण्डित ] १७२
कृष्णदेव [ क्षत्रिय ] १९७
कृष्णभूप [ नृपति ] ३६,३९
केदार [ तीर्थ ] १८७,१८८
केल्हण [ मण्डलेश्वर ] २११
केशव [ पण्डित ] १७७,१७९,१८०
कैशिक देश १८६
कोटिनगर [ ग्राम ] ४४,१९५
कोट्याचार्य [ सूरि ] १५४
कोरं(रि)टक [ ग्राम ] ४१,११८
कोशलाग्राम ५४
कोशलापुरी २८
खस [ देश ] १८६
खंगार [ नृपति ] १९९
खेटकाधार मंडल ९९
गजवर ( बप्पभट्टीसूरि ) ९४
गया [ तीर्थस्थान ] १८६
गर्गस्वामि ( गर्गर्षि ) १२३,१२४
गर्दभिल्ल [ राजा ] २२,२३,२४
गंगा [ नदी ] १०७,१०८,११३,११४
गंगातट १४७
गंगाधर [ ब्राम्हण पण्डित ] १७२
गंगापार १८६
गांगिल [ मंत्री ] १७७
गिरनार [ पर्वत [ १९५
गिरिखण्डल [ पर्वत ] ७७
गुडशस्त्रपुर [ ग्राम ] ३३,३४
गुणचन्द्र [ दिगम्बर विद्वान् ] १७२
गुणचन्द्रसूरि [ श्वेताम्बर ] ४३
गुणाकरसूरि ( १ ) २२
„ ( २ ) ११७
गूर्जर [ जनविशेष ] १५६,१५८
गूर्जरकवि १५६
गूर्जरदेश ४७,५०,८०,१२१,१३३,१३४,१४०,१५०,१५२,१५७,१५८,१५९,१६८,१७१,१७५,१८३,१८५,१८९
गूर्जर मण्डल ९९
गूर्जराचार्य १५८
गूर्जराधीश १४५,१६९
गूर्जरावनि ४७,१५४,१५६,१६२
गूर्जरेश १३४,२०१
गोकुलवास १०५
गोदावरी नदी ८८
गोपगिरि ८४,९७,१६८,१७२
गोपालगिरि १६८
गोमती [ ब्राह्मणी ] १४६
गोविन्दसूरि } गोविन्दाचार्य } ९२,९९,१००,११०,१५२,१५३,१६८
गोष्ठामाहिल [ संप्रदायप्रवर्तक ] १७,१८
गौड [ देश ] ५४,८५,१४७,१५५,१८६
गौडपुरी ८६
गौडवध [ काव्य ] ९९
गौतमस्वामी १,१८४
घृत [ पूर्व ] पुष्पमित्र [ सूरि ] १५
चक्रवालपुर [ नगर ] ४२
चंगदेव [ वणिक्पुत्र ] १८३
चंदनबाला [ साध्वी ] १७२
चन्द्र सूरि ( १ ) ८,१२३
चन्द्र सूरि ( २ ) १३२,१८०,२१४
चन्द्रकान्ता [ राज्ञी ] ४३
चन्द्रगच्छ १२२,१३३,१८३,२१३
चन्द्रगुप्त [ मौर्यनृपति ] ८१
चन्द्रपुर [ नगर ] ४१
चन्द्रप्रभसूरि १,८,१८,२१,२७,४०,४६,५३,६१,७६,७९,१११,११७,१२०,१२६,१३२,१३७,१५१,१६०,१६६,१७०,१८२,२१२,२१५
चन्द्रमहागच्छ १६७
चन्द्रशेखर [ राजा ] ४२
चन्द्रावती [ नगरी ] १९९,२०२
चाचश्रेष्ठी १८३,१८४
चान्द्रगच्छ ११८,१८३
चापोत्कट [ राजवंश ] १६३
चामुण्डराज [ चालुक्य नृपति ] १३०
चारुकीर्त्ति [ दिगम्बर सूरि ] ११२
चारुभट [ सुभट ] २०१,२०२
चाक्रपग्राम १६५,१६८
चित्रकूट [ पर्वत ] ६२,६९,१७२,
चेटक [ राजा ] २१०
चेदि [ देश ] १८६
चौड [ देश ] १८६
छड्डुक [ श्रेष्ठी ] १९८
छन्दश्चूडामणि [ ग्रन्थ ] २११
छित्तप [ कवि ] १४९
जम्बूद्वीप १६०
जम्बूस्वामी २६
जयकेशि [ राजा ] १७४
जयतिहुयण [ स्तव ] १६६
जयसिंह ( सिद्धराज ) १६७,१६८,१९१,१९२,१९४
जया-विजया [ देवी ] ११८
जाकिनी [ महत्तरा साध्वी ] ६८
जाकुटि [ श्रावक ] ६१
जान्हवी [ गंगा ] २८
जालंधर [ देश ] १८६,२०८
जावडि [ श्रावक ] ६१
जितशत्रु [ राजा ] ४१,८०
जितारि [ राजा ] ६२
जिनदत्त [ सूरि ] ( १ ) ४७
„ „ ( २ ) २१४
जिनदत्त [ श्रेष्ठी ] ८,११८
जिनदास [ श्रावक ] ४३
जिनदेव [ श्रेष्ठी ] १३५
जिनदेवी [ श्राविका ] १७१
जिनभट सूरि ६२,६४,७३
जिनभद्रगणि [ क्षमाश्रमण ] ३१
जिनानन्द [ सूरि ] ७७-७९
जिनेश्वर सूरि १६२-१६४,१६६,२१४
जीवदेवसूरि २,४७-४९,५१-५३
जैनधर्म १०
ज्ञानदेव [ शैवाचार्य ] १६३

टिंबक [ ग्राम ] १८५
डक्करीपुरी १२९
ढुंवाउधीग्राम ८०
ढंकपुरी ३६
ढक्कुर [ श्रावक ] १०
तत्त्वोपप्लव [ ग्रन्थ ] १३६
तक्षशिला [ पुरी ] ११८,१२०
तरङ्गलोला [ कथाग्रन्थ ] ३९
तारङ्ग गिरि, तारङ्ग नग, तारणगिरि [ पर्वत ] २०७, ८
ताम्रलिप्ती [ नगरी ] १६५,१८४
तिलकमञ्जरी [ कथाग्रन्थ ] १३३,१४५
तिहुणपालविहार [ प्रासाद ] २०६
तुम्बवनग्राम ३
तोसलिपुत्र [ आचार्य ] ९,११-१३
त्रिभुवनगिरि [ पर्वत ] २१४
त्रिभुवनपाल १९५,२०३
त्रिलोचन [ तलारक्ष ] २१०
त्रिषष्टिशलाकापुरुषचरित [ शास्त्र ] २११
थारापद्रगच्छ १३३
थारापद्रपुर १२८,१३४,१३६
थाहड [ श्रेष्ठी ] १७३,१७७,१७८
दक्षिणापथ ७,६०,१५५,१५७
दत्त [ श्रेष्ठिपुत्र ] १२१
दशपुर [ नगर ] ६,९,१२,१६
दाक्षिण्यचन्द्र [ सूरि ] १२३
दामोदरहरि [ तीर्थस्थान [ १०८
दाहड [ राजा ] ३४
दिगंबर [ संप्रदाय ] १३५,१७४,१७९, १८०,२१३
दिवाकर ( सिद्धसेनसूरि ) ५७
दुन्दुक [ राजा ] १०७-११०
दुर्बल [ पूर्व ] पुष्पमित्र [ सूरि ] १५-१८
दुर्लभदेवी [ मलवादिजननी ] ७७,७९
दुर्लभराज [ चालुक्य नृपति ] १६२,१९०
दुर्लभसर १९०
देवचन्द्र [ उपाध्याय ] ११८
देवचन्द्रसूरि १६३,१८३,१८४
देवप्रसाद [ क्षत्रिय ] १९५
देवबोध [ शैवाचार्य ] १७२,१७३,१८९, १९०,१९१-१९४
देवराज [ नृपति ] १२७
देवर्षि [ ब्राह्मण ] ५५,१३८
देवश्री [ ब्राह्मणी ] ५५
देवसूरि [ वादी ] २,११८,१३५,१७१-१७५,१७७,१७८,१८०, १८१-१८३,१९१
देवानन्दसूरि १,१५१
देवेन्द्र मुनि ३२
देशीनाममाला [ ग्रन्थ ] २११
द्रोणाचार्य [ जैनसूरि ] १५२,१६०,१८८
दृष्टिवाद [ शास्त्र ] ९
द्रविडदेशीय [ वादी ] १३६
द्वारका [ नगरी ] १०८
द्याश्रय महाकाव्य २११
द्विसन्धानकाव्य १६०
धनगिरि [ मुनि ] ३,४
धनंजय [ राजा ] ६०
धनदेव [ श्रेष्ठी ] ( १ ) ११२
धनदेव [ श्रेष्ठी ] ( २ ) १३३
धनदेवी १६४
धन्ध [ द्विज ] १७२
धन्धूक [ नगर ] १८३
धनपाल कवि २,१३३,१३४,१३६,१३८-१४१,१४८,१४९
धनपाल व्यवहारी ३
धनपाल श्रेष्ठी ३,६
धनश्री [ श्रेष्ठिनी ] १३३,१३९
धनेश [ श्रावक ] १६५
धनेश्वर [ सूरि ] २१४
धर्म [ पंडित ] १३६,१४६,१४७,१५०
धर्मराज [ नृपति ] ८५,८८,८९,९४-९९
धर्मघोष [ सूरि ] २१४
धर्मदेव [ श्रेष्ठी ] ४७
धवलक, धवलक्क } पुर १६५,१७२
धरणीधर [ पण्डित ] १७२
धरणोरगेन्द्र [ देव ] १२७
धारावास-पुर, पुरी, नगरी २२,१३४,१३८ १४१,१४६-१४८,१५३,१५४, १५६,१६१-१६३,१७२
धारासंघ १४०
धारिणी [ श्रेष्ठिनी ] ११८
धूमराज [ नृपति ] १२७
नड्डूल पुर, पत्तन ११८,११९,१३४
नड्डूलेश २१०
नन्द [ गोप ] १०५
नन्द [ बौद्धमुनि ] ७७
नन्दक [ सूरि ] ७८
नन्दपद्र [ ग्राम ] २०७
नन्दीश्वरद्वीप ४३
नन्नसूरि ९२,९९,१००,११०
नमि-विनमि [ विद्याधर ] २८
नयचक्र [ ग्रन्थ ] ७७-७९
नर्मदातट ४२
नवघन [ राजा ] १९८
नागदत्त [ श्रेष्ठी ] २१
नागदेव [ श्रेष्ठी ] १०८,१७७
नागपुर [ नगर ] १६८,१७२,१७३
नागार्जुन [ योगी ] ३६,३७,४०,१६५
नागावलोक ( आमराज ) ८६,१०९
नागिनीदेवी १३६
नागेन्द्र कुल, गच्छ ८,२९,७९,१२३,१६३
नालिकेरवसति [ प्रासाद ] ५४
नासिक्यपुर [ नगर ] १८८
निर्घण्ट [ ग्रन्थ ] २११
निर्वाणकलिका [ ग्रन्थ ] ४०
निवृत्ति कुल, गच्छ ८,१२३
नेपाल [ देश ] १८६
न्यायावतार [ ग्रन्थ ] ५९
पञ्चवटी [ तीर्थस्थान ] १०३
पञ्चाल देश २४,८०
पञ्चाश्रयचैत्य १६३
पत्तन ( अणहिलपुर ) १३२-१३६,१५०, १६२,१६४-१६७,१७२,१७३,१७६
पत्तनसङ्घ १७५
पद्म [ श्रेष्ठीपुत्र ] ( १ ) १९
" " ( २ ) १३५
पद्मचक्री ४२
पद्मचरित [ ग्रन्थ ] ७९
पद्मदत्त [ श्रेष्ठी ] १९,२१
पद्मदेवसूरि २१४
पद्मप्रभ [ राजा ] १७
पद्मयशा [ श्रेष्ठिपत्नी ] १९,२१
पद्माकर [ द्विज ] १७२
पद्मावती [ देवी ] २००
पद्मावती [ राजपत्नी ] १९
पद्मिनीखंड [ पत्तन ] १९
परमहंस [ मुनि ] ६५,६८,७०
परमारवंश, कुल ९६,१५५,१८८,२०० २०१,

पलित्त (पादलित्त) [ सूरि ] २९
पल्लीवन २०७
पल्लीवास १६७
पल्यपद्रपुर [ ग्राम ] १६४
पाञ्चाल [ कवि ] ३९
पाटलपुर [ ग्राम ] ८०
पाटलिपुर,-पुत्र, नगर ६,९,१२,२९,३४, ३६,१०९
पाणिनि [ व्याकरणग्रन्थ ] १८५
पाणिनि [ ग्रन्थकार ] १८०
पादलिप्त-आचार्य, सूरि २,२८,२९,३१, ३२,३६-४०,४४,५४,६१,६५
पादलिप्तपुर ३८
पादलिप्त भाषा ३६
पारसीक [ देश ] १८६
पार्श्वचन्द्र [ विद्वान् ] १७२
पाहिनी [ श्राविका ] १८३,१८४
पांशुपुर [ नगर ] ३२
पिण्डतारक [ ग्राम ] १०८
पिप्पलवाटक ,, १८१
पिप्पलानक [ ग्राम ] ५०
पुण्डरीक [ गिरि ] १०७,११८
पुष्करिणी [ नगरी ] १७२
पुष्यमित्र [ सूरि ] १५,१६,१८
पूर्णचन्द्र [ श्रेष्ठिपुत्र ] १७१,१७२
पूर्णचन्द्र सूरि २१४
प्रजापति [ नृपति ] ३२
प्रतिमा [ श्रेष्ठिपत्नी ] २८
प्रतिष्ठानपुर, नगर २५,३८,४१,६०
प्रद्युम्नसूरि २,८,१८,२१,२७,४०,४६, ५३,६१,७६,७९,१११,११७,१२०, १२६,१३२,१३७,१५१,१६०,१६६, १७०,१८२,१८३,२१२,२१३,२१६
प्रद्योतराज [ नृपति ] २१०
प्रद्योतन सूरि २१८
प्रभाचन्द्र सूरि ८,१८,२१,२७,४०,४६, ५३,६१,७६,७९,१११,११७,१२०, १२६,१३२,१३७,१५१,१६०,१६६, १७०,१८२,१८३,२१२,२१५
प्रभावती [ राज्ञी ] २१०
प्रमाणमीमांसा [ ग्रन्थ ] २११
प्रवरपुर [ नगर ] ११५,१८५
प्रश्नचूडामणि [ ग्रन्थ ] १०५,१०७
प्रश्नप्रकाश [ ग्रन्थ ] ४०
प्राग्वाटवंश १७१
फल्गुरक्षित [ सूरि ] ९,११-१३,१६,१७
फुल्ल श्रेष्ठी २८,२९
बकुलसिंह [ आरामिक ] ७
बङ्ग [ देश ] १८६
बप्प [ क्षत्रिय ] ८०
बप्पभट्टि सूरि २,८०-१११
बलभानु [ नृपति ] २५
बलमित्र [ नृपति ] २५,३३,३८,३९,६०
बाण [ कवि ] ११३-११६
बुद्धानन्द [ बौद्ध पण्डित ] १८,१९
बुद्धिसागर सूरि १६२,१६३,१६६
बूटसरस्वती [ आचार्य ] १५५-१५८
बृहस्पति [ पण्डित ] ३९
बोसरि [ द्विज ] १९९
बौद्ध ७, ८८
बौद्धपुर १२८
बौद्धविहार १२९
बौद्धशासन ७
ब्रह्मक्षत्रिय [ जाति ] ११२
ब्रह्मशान्ति [ यक्ष ] ११९
ब्राह्मीदेश १८४
भक्तामरस्तव ११६,११७
भट्टि [ क्षत्रियपत्नी ] ८०
भट्टिअमंडल [ देश ] १४७
भद्रकीर्त्ति [ बप्पभट्टि ] ८०,८१,११०, १११
भद्रगुप्ताचार्य ६,११
भद्रेश्वर सूरि १८१
भंभेरी [ नगरी ] २०७
भयहरस्तव ११७
भरतक्षेत्र १७,४२
भरतेश्वर सूरि २१४
भागवत दर्शनी १८९
भांडशालिक [ गोत्र ] ११८
भानुमित्र [ राजा ] २५
भानुमुनि ४२,४३
भानुश्री [ राजकुमारी ] २५
भाभु [ श्रेष्ठी ] १७९
भारत [ पुराणग्रन्थ ] ७५
भावाचार्य १६९
भीम [ श्रेष्ठिपुत्र ] १३३
भीम [ चौलुक्य नृपति ] ३१,१३३,१३४, १५२-१५४,१५९,१६०,१६४
भीमेश्वर [ महादेव ] १२९
भीष्म १८८
भुवन [ मुनि ] ३३,३४
भुवनपाल [ राजा ] १६२
भूषण मुनि ४२,४३
भृगु [ ऋषि ] ४१
भृगुकच्छ [ नगर ] २५,३३-३८,४२, ५४,६०,७७,७८,१४६,१७१,२०७
भृगुक्षेत्र ३४,४५,१७२
भृगुपुर [ स्थान ] २५,३५,४१,४२,४३,१७१
भोगवती [ वेश्या ] ३९
भोज [ नृपति ] १०७
भोजराज [ धारापति ] १०९,११०,१२१, १३४,१३८-१४३,१४५,१४६, १४८,१४९,१५२-१५५, १५७-१६१
भोजपर्षद् १५९
भोज व्याकरण १८५
भोजसभा १५४
भोपलदेवी [ राज्ञी ] ११७
मगटोडा [ तीर्थ ] १०८
मड्डाहृत नगर १७१
मण्डनगणि २९
मध्यदेशीय १३८,१६१
मनु [ शास्त्रकार ] २०३
मथुरापुरी १६,१७,२८,२९,३१, १०२,१०७,१२८
मयणल्ला [ राज्ञी ] १७९
मयूर पण्डित [ कवि ] ११३-११५,१७९
मरुमण्डल १४८
मल्लवादी [ सूरि, आचार्य ] २,४४,७७- ७९,१६६
मल्लिकार्जुन [ राजा ] २०७
महर्षि [ ब्राह्मणविद्वान् ] १७९
महाकाल [ शम्भु ] १२९
महाकाल [ शिवभक्त ] १४१,१४३,१४६
महाकीर्त्ति [ दिगम्बरमुनि ] ११२
महाधर [ श्रेष्ठी ] १६४
महानिशीथ [ शास्त्र ] ७५
महापरिज्ञाध्ययन [ शास्त्र ] ७
महापुरी [ नगरी ] ७
महाबोध [ पुर ] १२४,१२९,१८६
महाभारत [ पुराणशास्त्र ] १८८
महाराष्ट्र [ देश ] १८६

**महास्थान ( वायट नगर )** ४९,५१,५२
**महिष पुर** [ नगर ] १६६
**महीणल** [ पट्टकिल ] १६५
**महीतट** [ प्रदेश ] १५९
**महीधर** [ श्रेष्ठी ] ४७
**महीपाल** [ श्रेष्ठी ] ४७
**महुमहविजय** [ काव्य ग्रन्थ ] ९९
**महेन्द्रमुनि** ३४,३५
**महेन्द्र सूरि** २,३६,४०,१३३,१३८–१४१,१४५,१५०,१५१
**मागध** [ तीर्थ ] १०७,१०८
**माघ** [ महाकवि ] १२१,१२६
**माणिक्य** [ पण्डित-मुनि ] १७४,१७५,१७७
**माधवदेव** [ तीर्थस्थान ] १०८
**मानखेट** [ नगर ] ३३,३९
**मानतुङ्ग** [ सूरि ] २,११२,११६,११७
**मानदेव** [ सूरि ] २,११८–१२०
**मारव** [ देश ] २००
**मालव** } **मालवक** } [ देश ] २,२४,१३४,१४०,१५८,१५९,१६१,१८५,१८६
**मालवभूपति** १५४
**मालवमण्डल** १८५
**मालवाधीश** १५४,१८५
**मालवी** [ स्त्री ] १६५
**मालवेश** १६९
**माहेश्वरी** [ नगरी ] ७
**मुकुन्दर्षि** [ विप्र ] ५४
**मुञ्जराज** [ मालवपति ] १३९,१४३,१४८
**मुनिचन्द्र सूरि** १३५,१७१,१७३,१७६,१७८
**मुरण्ड** [ देश ] १८६
**मुरण्ड राजा** २९
**मूलराज** [ चालुक्य नृपति ] १८६
**मेकलकन्यका** [ नदी ] ४१,१४६
**मोढ चैत्य** १०७,१८३
**मोढवंश** १८३
**मोढेर,-क** [ नगर ] ८०,८१,९१
**मौर्य** [ वंश ] ८१
**यक्ष** [ क्षत्रियपुत्र ] ७७,७८
**यमुना** [ नदी ] २८
**यशश्चन्द्र** [ गणी ] २०८
**यशोधवल** [ परमार नृपति ] २०२
**यशोवर्म्म** [ नृपति ] ८१,९८
**यशः** [ श्राद्ध ] १३७
**याकिनी महत्तरा** [ साध्वी ] ६४
**याज्ञवल्क्य स्मृति** [ शास्त्र ] १४२
**युगादि-नेमिचरित** [ ग्रन्थ ] १६०
**योगशास्त्र** [ ग्रन्थ ] २०३,२०९,२११
**योनिप्राभृत** [ शास्त्र ] ३२
**रथनुपुर** [ नगर ] ४२
**रथावर्त्तगिरि** ८
**राजगच्छ** २१८
**राजगिरि** [ नगर ] १०७
**राजगृह** [ नगर ] ४७
**राजपुरि ग्राम** १३६
**राजविहार** [ प्रासाद ] १९१
**राम** [ पण्डित ] १७९
**रामचन्द्र** [ कवि ] १७२,१८१
**रामदेव** [ नृपति ] २०२
**रामसैन्य** [ पुर ] ८१
**रामायण** [ पुराणग्रन्थ ] ७९
**राशिल सूरि** ४७,४८
**रुक्मिणी** [ श्रेष्ठिकन्या ] ६
**रुद्र** [ परमार क्षत्रिय ] १३१
**रुद्रदेव** [ सूरि ] २,३२,४०
**रुद्रमहालय** [ शिवमन्दिर ] १९०
**रुद्रसोमा** [ ब्राह्मणपत्नी ] ९–१३
**रेवानदी** ३३,४१,५४
**रैवतकगिरि** [ पर्वत ] ३६,४४,६१,१०७,१०८,१९४,२११
**रैवतकतीर्थ** ४४
**रैवतकदुर्ग** ३८
**रैवतावतार** [ तीर्थ ] १८४
**लक्ष** [ क्षत्रिय ] २१०,२११
**लक्षणावती** [ नगरी ] ८५
**लक्ष्मी** [ श्रेष्ठिपत्नी ] १२१
**लक्ष्मीधर** [ श्रेष्ठी ] ११२
**लक्ष्मीपति** [ व्यवहारी ] १६१,१६२
**ललितविस्तरा** [ ग्रन्थ ] १२४,१२५
**लल्लश्रेष्ठी** ४९,५०,५२
**लाटदेश** २४,२५,३१,३२,१४६,१७१,१८६
**लाटमण्डल** ५४,२०७
**लिम्बजा** [ गोत्रजादेवी ] १४३
**लिम्बाख्य** [ अमात्य ] ४९
**लोलार्कचैत्य** २१०
**वज्रस्वामि** [ सूरि ] १,१४,१२३
**वज्रसेनाचार्य** ७,८
**वज्रार्गला** [ योगिनी ] १८०
**वड्डकर** [ सौगताचार्य ] ३३
**वत्स** [ देश ] १८६
**वदनमति** [ सौगत पण्डित ] ७२
**वनराज** [ चापोत्कटवंशीय नृपति ] १६३
**वनराजविहार** [ जिनमन्दिर ] १६३
**वरदत्त** [ श्रेष्ठी ] १९
**वर्द्धनकुञ्जर** [ सौगताचार्य ] ९५–९७
**वर्द्धमानसूरि** १३०,१६२,१६४,२१४
**वर्मलात** [ नृपति ] १२१
**वल्लभराज** [ चालुक्य नृपति ] १३१
**वलभीपुर** ७७,७९,२११
**वलभीनाथ** [ क्षेत्रपाल ] १२८,१३०
**वाक्पतिराज** [ महाकवि ] ८५,९६–९९,१०२–१०४
**वाग्भटदेव** [ मंत्री ] १९८,१९९,२०१,२०५,२०९,२११
**वात्स्यायन** [ शास्त्र ] ९८
**वादमहार्णव** [ ग्रन्थ ] २१३
**वादी देवसूरि** १७१
**वादिवेताल** [ शान्त्याचार्य ] १३२–१३४,१३७,१७६
**वादिसिंह** [ सांख्यवादी ] १६८,१६९
**वामदेव** [ तपोधन ] ११६
**वायट** [ पुर ] ४७–४९,५२
**वाराणसी** [ नगरी ] ११२,११८
**विक्रमसिंह** [ राजा ] १९९,२००,२०२
**विक्रमादित्य** [ नृपति ] २५,४३,४९,५३,५५,६१
**विजयब्रह्म** [ भूपति ] २८
**विजयमाला** [ राज्ञी ] ४२
**विजयरथ** [ राजा ] ४२
**विजयसिंहसूरि ( १ )** २,४१,४४–४६
**विजयसिंहसूरि ( २ )** १३३
**विजयसिंहसूरि ( ३ )** १६७
**विजयसेन** [ मुनि ] १७८
**विजया** [ राजकुमारी ] ४२
**विजया** [ देवी ] ११८
**विद्याधर** [ मुनि ] ८
**विद्याधर कुल, गच्छ, वंश** २८,५४,६१,१२३
**विन्ध्य** [ पर्वत ] ३३
**विन्ध्य** [ सूरि ] १६,१७
**विनमि** [ विद्याधर ] १८

